# इन्द्रियार्थसन्निकर्षस्वरूपविमर्शः




"विद्यावारिधिः" (पी-एच.डी.) इत्युपाधिप्राप्तये प्रस्तुतोऽयं

## शोधप्रबन्धः

वर्षम् - २०१७ ई.

निर्देशकः
डा. शिवरामगङ्गोपाध्यायः
आचार्यः
वैदिकदर्शनविभागः
संस्कृतविद्याधर्मविज्ञानसङ्कायः
काशीहिन्दूविश्वविद्यालयः
वाराणसी

अनुसन्धाता
योगेशकुमारत्रिपाठी
शोधच्छात्रः
यू.जी.सी. नेट (NET)
वैदिकदर्शनविभागः

वैदिकदर्शनविभागः
संस्कृतविद्याधर्मविज्ञानसङ्कायः
काशीहिन्दूविश्वविद्यालयः, वाराणसी-221005

विश्वविद्यालयपञ्जीयनसंख्या - 352305

शोधपञ्जीयनसंख्या - SVDV/VD/2012-Sept./05

अद्य 14/09/2017 दिनाङ्के शोधकार्यविषयिणी
मौखिकपरीक्षा सञ्जाता योगेशकुमार त्रिपाठिनः

शिवरामगङ्गोपाध्यायः
शोधनिर्देशकः

DR. SHIVARAM GANGOPADHYAYA
Asstt. Prof. In Nyaya-Vaisheshik
Dept. of Vaidic Darshan
Faculty of S.V.D.V.
Banaras Hindu University

# इन्द्रियार्थसन्निकर्षस्वरूपविमर्शः




"विद्यावारिधिः" (पी-एच.डी.) इत्युपाधिप्राप्तये प्रस्तुतोऽयं

## शोधप्रबन्धः

वर्षम् - २०१७ ई.


शिवरामगङ्गोपाध्यायः

निर्देशकः

**डा. शिवरामगङ्गोपाध्यायः**

आचार्यः
वैदिकदर्शनविभागः
संस्कृतविद्याधर्मविज्ञानसङ्कायः
काशीहिन्दूविश्वविद्यालयः
वाराणसी

योगेश त्रिपाठी

अनुसन्धाता

**योगेशकुमारत्रिपाठी**

शोधच्छात्रः
वैदिकदर्शनविभागः


अग्रसारित
11.5.17
अध्यक्ष
वैदिक दर्शन विभाग
संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय, वाराणसी-221005


वैदिकदर्शनविभागः
संस्कृतविद्याधर्मविज्ञानसङ्कायः
काशीहिन्दूविश्वविद्यालयः, वाराणसी-221005



विश्वविद्यालयपञ्जीयनसंख्या - 352305

शोधपञ्जीयनसंख्या - SVDV/VD/2012-Sept./05

# शोधच्छात्रस्य प्रतिज्ञापत्रम्

अहं योगेशकुमारत्रिपाठी स्वीयं शोधप्रबन्धं **''इन्द्रियार्थसन्निकर्षस्वरूप-विमर्शः''** इति शीर्षकेण प्रस्तौमि। शोधप्रबन्धेऽस्मिन् सरलपद्धत्या इन्द्रियाणां न्यायादिदर्शनदृष्ट्या समीक्षणं कृतमस्ति।

अस्य शोधकार्यस्य समग्रं दायित्वं मय्येव वर्तते। मानुषस्वभाववशात् स्खलनं स्वाभाविकमस्तीति कृत्वा यद्यत्र शोधप्रबन्धे त्रुटयो भवेयुस्तर्हि तासां संशोधनायाहं सदैव सन्नद्धोऽस्मीति।

योगेश त्रिपाठी

**योगेशकुमारत्रिपाठी**

शोधच्छात्रः

(वैदिकदर्शनविभागः)

# शोधच्छात्रस्य घोषणापत्रम्

परमश्रद्धेयानां श्रीगुरुचरणानां डॉ० शिवरामगङ्गोपाध्यायमहाभागानां निर्देशानुसारम् अनुसन्धाताऽहं समुपनिबद्धस्य **''इन्द्रियार्थसन्निकर्षस्वरूपविमर्शः''** इत्याख्यस्य शोधप्रबन्धस्य सन्दर्भे समुद्घोषयामि यत्-

१. अयं निबन्धः शोधनिबन्धरूपेण न मया कुत्रचित् समुपस्थापितः।

२. नाप्यविकलरूपेण प्रबन्धस्यांशतो वा कुत्रापि प्रकाशितश्च।

३. तथा चायं निबन्धो मदीयो मौलिको लेख इति।

**निर्देशकः**

शिवरामगङ्गोपाध्यायः

डॉ० शिवरामगङ्गोपाध्यायः
सह-आचार्यः
वैदिकदर्शनविभागः,
संस्कृतविद्याधर्मविज्ञानसंकायः,
काशीहिन्दूविश्वविद्यालयः
वाराणसी-२२१००५

**अनुसन्धाता**

योगेश त्रिपाठी

योगेशकुमारत्रिपाठी

# शोधनिर्देशक-प्रमाणपत्रम्

प्रमाणीक्रियते यत् शोधच्छात्रस्य कथनं/लेखनं मद्दृष्ट्या सत्यमस्ति।

शिवराम गङ्गोपाध्यायः

दिनाङ्कः -

स्थानम्- वाराणसी

(डॉ० शिवरामगङ्गोपाध्यायः)
शोधनिर्देशकः,
सह-आचार्यः
वैदिकदर्शनविभागः,
संस्कृतविद्याधर्मविज्ञानसंकायः,
काशीहिन्दूविश्वविद्यालयः,
वाराणसी-२२१००५

१.५.१४

अध्यक्ष
वैदिक दर्शन विभाग
संस्कृतविद्या धर्मविज्ञान संङ्काय
काशी हिन्दू विश्वविद्यालय, वाराणसी-221005

**वैदिकदर्शनविभागः,**
**संस्कृतविद्याधर्मविज्ञानसंकायः,**
**काशीहिन्दूविश्वविद्यालयः,**
**वाराणसी- २२१००५**

**प्राक्-प्रस्तुति-सङ्गोष्ठीसफलता-प्रमाणपत्रम्।**

प्रमाणीक्रियते यत् योगेशकुमारत्रिपाठी वैदिकदर्शनविभागस्य नियमितशोधच्छात्रोऽस्ति। अनेन **इन्द्रियार्थसन्निकर्षस्वरूपविमर्शः** इत्यस्मिन् विषये विद्यावारिधिः/पी-एच्०डी० इत्युपाधिप्राप्त्यर्थमपेक्षिता प्राक्-प्रस्तुतिसङ्गोष्ठी ७. १.२०१७ दिनाङ्के सफलतापूर्वकं सम्पादिता।

दिनाङ्कः -
स्थानम्- वाराणसी

११.५.१७

आचार्योऽध्यक्षश्च
वैदिकदर्शनविभागः,
संस्कृतविद्याधर्मविज्ञानसंकायः,
काशीहिन्दूविश्वविद्यालयः,
वाराणसी-२२१००५

अध्यक्ष
वैदिक दर्शन विभाग
संस्कृतविद्या धर्मविज्ञान सङ्काय
काशी हिन्दू विश्वविद्यालय, वाराणसी-221005

## ।। शोधप्रशिक्षण (पी-एच्०डी० कोर्सवर्क) प्रमाणपत्रम् ।।

प्रमाणीक्रियते यद् योगेशकुमारत्रिपाठी षाण्मासिकशोधप्रशिक्षणवर्गे भागं गृहीतवान्। परीक्षां दत्वा च सफलतया उत्तीर्ण इति।

11.4.17

दिनाङ्कः -

स्थानम् -

विभागाध्यक्षस्य हस्ताक्षरम्

अध्यक्ष
वैदिक दर्शन विभाग
संस्कृतविद्या धर्मविज्ञान संङ्काय
काशी हिन्दू विश्वविद्यालय, वाराणसी-221005

# रचनास्वत्वाधिकार – हस्तान्तरण – प्रमाणपत्रम्

**शोधप्रबन्धशीर्षकम् – "इन्द्रियार्थसन्निकर्षस्वरूपविमर्शः"**

**शोधच्छात्रस्य नाम – योगेशकुमारत्रिपाठी**

## रचनास्वत्वाधिकार – हस्तान्तरणम्

विद्यावारिधि / पी-एच्०डी० इत्युपाध्यर्थं प्रस्तुतस्योपरिनिर्दिष्टस्य शोधप्रबन्धस्य रचनास्वत्वाधिकाराभ्यन्तर्गतान् सर्वानप्यधिकारान् अधोहस्ताक्षरीकृतेन एतत्प्रतिज्ञापत्र-माध्यमेन काशीहिन्दूविश्वविद्यालयं प्रति हस्तान्तरयति।

योगेश त्रिपाठी

**(योगेशकुमारत्रिपाठी)**

शोधच्छात्रस्य हस्ताक्षरम्

**टिप्पणी-** मूलस्रोत – विश्वविद्यालयरचनास्वत्वाधिकारसूचनाप्रदानपूर्वकं लेखकः शोधप्रबन्धममुं पुनः प्रस्तोतुं शक्नोति अथवा कमप्यन्यं शब्दश आंशिकरूपेण वा प्रस्तुतिकरणाय अधिकृतं कर्तुं शक्नोति, तथा च लेखकः स्वस्योपयोगाय पुनर्व्युत्पादयितुमपि शक्नोति।

# विषयानुक्रमणिका

# कृतज्ञताज्ञापनम्

कृतज्ञताज्ञापनविधौ प्रथमं परंब्रह्मपरमेश्वरं सश्रद्धया नमस्करोमि। यस्यकारुणिक कृपया संसारं जनिं लब्ध्वा शरीरपोषकसाधनानि च सम्प्राप्य मम संस्कृतशास्त्राणामध्ययने-ऽभिरुचिरभवज्जन्मजन्मान्तरकृतपुण्यवासादेव कश्चिद् मानवशरीरं प्राप्नोति। मानव-शरीरमतिदुर्लभं तत्रापि ब्राह्मणशरीरमधिगत्यापि कश्चिद् शास्त्राध्ययने प्रवर्तते। अतः एतत्सर्वं दुःसाध्यमप्राप्यञ्च परमेश्वरकृपयाऽधिगतम्।

यदि परमात्मनः कृपादृष्टिर्मयि न स्यात् तदा एत्सर्वं नोपलभ्येत। स च परमात्मा सत्वरजस्तम उपाधिभेदेन ब्रह्माविष्णुमहेशरुपतामापद्यते। रजोमयीशक्त्युपहितः परमेश्वरः जगत् सृजते। सत्वमयी शक्त्युपहितः परमेश्वरः जगत् पालयति, पोषयति, रक्षति च। तमोमयीशक्त्युपहितः परमेश्वरः जगत्संहारति। एक एव परमेश्वरः कार्यकारणोपाधीनां भिन्नेव प्रतीयते। तत्र परमात्मस्वरूपनमस्कारेण सकलस्वरूपाणां नमस्कृतिः सम्भवति।

परमात्मस्वरूपनमस्करोत्तरं तपःस्वाध्यायनिरतानां शास्त्राध्ययनसमधिगततत्वानां ब्रह्माद्वैतनिरसनपुरस्सरं विशिष्टाद्वैतमतप्रवर्तकानां, वेदविहितधर्माचार्यपूतवपुषाम्, मत्कुले जनिं सम्प्राप्य पवित्रीकृतकुलानां परमोदारचरितानां यतिकुलतिलकानां काश्यां पण्डितवृन्द-सम्पूज्यानां **''श्रीरङ्गाचार्य''** यतिवराणां चरणकमलेषु सश्रद्धया प्रणतिमर्पयामि। ते आचार्याः मत्कुले जनिं लब्ध्वा कुलं पवित्रीकृतवन्तः। तेषामाशिषैव मत्कुले विद्वत्परम्परा समगच्छत्।

**शास्त्राभ्यासवसद्विशुद्धमतयो मुक्ताश्च योगादिना**
**देवाराधनतत्परा यतिवरा आचार्यपूताः सदा।**
**द्वैतं सारमसारभूतमखिलं ब्रह्माद्वयं यन्मते**
**रङ्गाचार्यपदप्रसिद्धविभवान् वन्दे कुले दीपकान्।।**

अतः परमहर्निशमध्ययनाध्यापनतत्पराणां स्वाध्यापनकौशलेन सम्पादितानेकशास्त्रनिष्णातशिष्याणां शिष्योपशिष्योपगीतभवनानां समस्तेऽपि भारते प्रसिद्धकीऽर्तीनां परं कारुणिकाणां महामहोपाध्याद्यनेकसम्मानसम्मानितानां पण्डितराज्येत्युपाधिसमलङ्कृतानां, गौतमावताराणां काशीस्थाः कृतब्रह्मसाक्षात्काराणां सकलशास्त्रयाथार्थ्यवेत्तानां महाज्ञानिनां स्वनामधन्यानां पण्डितरत्नानं मत्पितामहानां **''प्रो० श्रीवशिष्ठत्रिपाठिनां''** चरणकमलेभ्यः सश्रद्धया शिरोन्नतिमर्पयामि। तेभ्योऽधीतन्यायशास्त्रोऽहं शोधकार्ये प्रवृत्तः। तैश्चाहं सम्यक् लालितः पालितश्च।

**शास्त्रे दुर्गहनेऽवगाहनपटुर्दृप्तोऽभयः केशरी**
**द्वैतं शास्त्रमितं प्रमाणनिचयैः संसाधनप्रज्ञया।**
**शास्त्रार्थे सकलेऽपराभवमतिर्विद्वत्सु पूज्यः सदा**
**काश्याः पण्डितमण्डितो विजयते वन्द्यो वशिष्ठः सुधीः।।**

अतःपरं परिवारपोषकतत्पराणां नित्यं समागतातिथिवृद्धादि सुश्रुषा तत्पराणां गृह्यकार्यं सम्पाद्य गङ्गास्नानदेवाराधनतत्पराणां **'ज्ञान्तीदेवी'** नाम्ना प्रसिद्धानां स्वमातृणां चरणकमलेभ्यः सादरं नतिं विदधामि। मातृसेवितोऽहं शास्त्राध्ययने प्रवृत्तः, अतः मातुः मदध्ययने शोधकार्ये च परमोपकारः अस्ति।

ततश्च परमास्तिकानां लोकसेवा तत्पराणां दीनजनपरिपालकानां सुहृज्जनोपकारकानां पितुराज्ञापरिपालकानां मातापितृसेवातत्पराणां **''डा० शुकदेव त्रिपाठी''** नाम्ना प्रसिद्धानां पितृचरणानां पादपद्मेषु सश्रद्धया प्रणतिं विनिवेदयामि। तैः पालितः पोषितश्चाऽहं अध्ययनादिकार्येषु संसक्तः।

पूज्य श्री दुर्गापुर निवासिन्याः वीतरागतपस्विन्यः श्री मातुः पादपद्मयोः प्रणति पुरस्सरं एष शोधप्रबन्धः समर्पितः।

जनिं लब्ध्वा विद्यां प्राप्नोतीति क्रममनुसृत्य पूर्वं जनिं सम्बद्धश्रेष्ठपुरुषाणां नमस्कारः कृतः।

अकारणकरूणावरुणालयनित्यशुद्धबुद्धमुक्तस्वभावानां साक्षात्नारायणस्वरूपाणां व्याकरणवेदान्तादिशास्त्रनिष्णातानां **श्रद्धेयश्रीगुरुशरणानन्दस्वामिनां** पादपद्मेषु कोटिशः प्रणामाञ्जलिं समर्प्य कार्तज्ञ्यं विनिवेदयामि। तेषु चरणसरोजेषु सततं परां भक्तिं प्रार्थयमानो हार्देन वचसा स्तौमि।

अतः परं विद्यासम्बन्धिनां शोधसम्बन्धिनाञ्च महापुरुषाणां सादरं प्रणतिमर्पयामि। तत्रादौ काशी-हिन्दू-विश्वविद्यालये कुलपतिपदमादधानानां विश्वश्रुतकीर्तीनां कुशल-प्रशासकानां मृदुस्वभावानां परं कारूणिकाणां **''प्रो० गिरीशचन्द्रत्रिपाठि''** महाशयानां चरणकमलेषु प्रणामाञ्जलिमर्पयामि। तेषां महदुत्साहेन शोधकार्यमिदं परसमाप्तिमगमात्। अतः तेषामाशीर्वादः अपेक्षितः।

तदनन्तरं काशी-हिन्दू-विश्वविद्यालयस्य संस्कृत-विद्या-धर्म-विज्ञानसंकायान्तर्गत-वैदिक-दर्शन-विभागे न्यायविषये आचार्याणां न्यायादिदर्शनेषु परं निष्णातानां मत्शोधकार्यस्य निर्देशकानां **''डा० शिवरामगङ्गोपाध्याय''** महाशयानां चरणकमलेषु प्रणामञ्जलिमर्पयामि। तेषां कुशलनिर्देशनेन शोधकार्यमिदं निर्विघ्नतया सफलतामगच्छत्। तैश्च समये समये निर्देशनेनाहमुपकृतः। अतस्तेषां कार्तज्ञं ज्ञापयामि। ततश्च संस्कृतविद्याधर्मविज्ञानसंकायप्रमुखानां **प्रो० चन्द्रमापाण्डेय**महाशयानां चरणकमलेषु प्रणतिमर्पयामि। तेषामनुग्रहेण शोधकार्यमिदं सफलतामगच्छत्। अतस्तेषां कार्तज्ञमावहामि। ततश्च वैदिकदर्शनविभागस्य विभागाध्यक्षाणां वेदान्तादिशास्त्रेषु परम निष्णातानां **प्रो० धनञ्जयकुमारपाण्डेय**महाशयानां चरणकमलेषु सादरं प्रणतिमर्पयामि। तेषामाशिषा शोधकार्यमिदं सफलतामगच्छत्। अतः तेषां कार्तज्ञमवहामि।

तदनन्तरं सं०वि०ध०वि० संकायस्य संकायाध्यचरणां **प्रो० जी० आञ्जनेय-शास्त्रि**महाशयानां चरणकमलेषु कार्तज्ञमावहामि। तेषामाशिषा शोधकार्यमिदं सफलतामगच्छत्। अतस्तेषां कार्तज्ञमावहामि। ततश्च सं०वि०ध०वि० संकायस्य संकायाध्यक्षचरणां **प्रो० कृष्णकान्तशर्म**महाशयानां चरणकमलेषु सादरं प्रणतिमर्पयामि। तेषामनुग्रहेण शोधकार्यमिदं सफलतामगच्छत्। अतस्तेषां कार्तज्ञमावहामि।

ततश्च सं०वि०ध०वि० संकायान्तरगतवैदिकदर्शनविभागस्य पूर्वविभागप्रमुखानां, राष्ट्रपतिसम्मानितानां न्यायवैशेषिकवेदान्तमीमांसादिशास्त्रेषु परमनिष्णातानां, साधुस्वभावानां, अध्ययनाध्यापनशीलानां **प्रो० राजारामशुक्ल**महाशयानां चरणकमलेषु प्रणमाञ्जलिमर्पयामि। तेषामनुग्रहेण शोधकार्यमिदं सफलतामगच्छत्।

विविधशास्त्रेषु मर्मज्ञानां, न्यायवैशेषिकादिशास्त्रादिषु प्रचार-प्रसाराय अहर्निशं संस्कृतसेवारतपरमपूज्यानां आचार्य **पी०के० मुखोपाध्यायानां** कृते पौनः पुण्येन कार्तज्ञ्यं पुष्पाञ्जलिं समर्पयामि।

कलासंकायान्तरगतधर्म-एवं-दर्शनविभागस्य आचार्याणां प्राच्य-एवं-पाश्चात्य-दर्शनानां विविधशास्त्रनिष्णातानां **प्रो० सच्चिदानन्दमिश्रवर्याणां** हृदयेन कार्तज्ञ्यं समर्पयामि।

ततश्च सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वेदान्तविभागे आचार्याणां पूर्वदर्शनसंकाया-ध्यक्षाणामधुनावेदान्तविभागाध्यक्षाणां विश्वविश्रुतविदुषामतीवसरलचेतसां निरहङ्कारिणां व्याकरणवेदान्तादिशास्त्रेषु परमनिष्णातानां **'प्रो० रामकिशोरत्रिपाठि'** गुरुचरणानां पादपद्मेषु सादरं प्रणामाञ्जलिमर्पयामि। अथ च शोधकार्येऽस्मिन् त्रिपाठि गुरुचरणैर्बहुधा निर्देशितः। अतः तेषामाधवर्ण्यमाहव्यामि।

क्रमेऽस्मिन् केचनऽन्येपि गुरवः सुहृदश्च विद्यन्ते ये प्रत्यक्षरूपेणाप्रत्यक्षेरूपेण वा मच्छोधकाले साहाय्यं कृतवन्त, उत्साहं वर्धितय आशीर्वचांसि प्रदत्तवन्तः। तत्र सन्ति पुराणेतिहासविषये मर्मज्ञाः **डा० श्रीकृष्णत्रिपाठिवर्याः,** वेदान्तादिविषये मर्मज्ञाः **डा० सरोजपाढ़िवर्याः,** सांख्य-योग विषये विशारदः **डा० शशिकान्तद्विवेदिवर्याः,** श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविद्यापीठस्य सर्वदर्शनविभागे विविधशास्त्रनिष्णातानां **प्रो० हरेरामत्रिपाठिवर्याणां,** न्यायविद्याविशारदानां **डा० विष्णुपदमहापात्रवर्याणां,** न्याय-वेदान्तादिशास्त्रेषु मर्मज्ञानां **डा० महानन्दझामहाभागानां,** तत्तच्छास्त्रेषु मर्मज्ञानां **डा० शिवशंकरमिश्र**महोदयानाञ्च कृते कार्तज्ञ्यं विभर्मि।

अथ च श्रीकार्ष्णीविद्यापीठीयव्यवस्थापकानां विद्यापीठस्य विकासाय सश्रद्धया भूरिपरिश्रमाणां वेदान्तव्याकरणादिषु शास्त्रेषु निष्णातानां **ब्र० ब्रजचैतन्यस्वामिनां** कार्तज्ञ्यकुसुममर्पयामि।

ततश्च न्यायवैशेषिकादिविद्याविशारदानां छात्रप्रेरकाणानां **डा० विश्वनाथधिताल-** महोदयान् प्रति धन्यवादान् प्रकटयामि।

अथ च मम सुहृदः सहायकाश्च **विक्की शर्म-चन्दनशशाङ्क-मुनीष मिश्र-राजीवलोचनशर्मा-शम्भूशरणतिवारि-विनयरामत्रिपाठि-विपिनबिहारिदुबे-उपेन्द्रतिवारि-अतुलदुबे- लक्ष्मी-प्रसादगौतम-दुर्गेशपाठक-वेदव्यास-काशीनाथखनाल-मनोहरदास-लक्ष्मणदास-श्रीकान्तमिश्र-विष्णु-शंकर-केशवप्रसादपोखेल-सुनीलत्रिपाठि-दीपकशुक्ल-आकाशद्विवेदि** प्रभृतयो बहवः सुहृदः सखायो भ्रातरो वा कृतज्ञताभावेन स्मरणीया भवन्त्यत्र। एवं प्रत्यक्ष-परोक्षरूपेण येषामपि सज्जनानां शुभचिंतकानां यादृशमपि साहाय्यं प्राप्तं तेषां समेषां हृदयेन पौनः पुण्येन कार्तज्ञ्यं प्रकटीकरोमि। येषां समूहः वस्तुतः कार्यारम्भकः, कार्यपूरकश्चेति कथने नात्युक्तिः स्यात्। अतः सर्वेभ्यो हार्दिकीं कृतज्ञतां समुपहरामि।

अतः परं ये केचन सुहृज्जनाः शोधकार्येऽस्मिन् सहाय्यं कृतवन्तः, तेषां कृतज्ञतां ज्ञापयामि। तत्र ममाग्रजाः **'देवेश त्रिपाठिनः'** प्रणम्याः सन्ति। तैः लालितः प्रोत्साहितश्चाऽहं शोधकार्यं सम्पादितः। अथ च ममाग्रजाः **'शैलेश त्रिपाठिनः'** वन्द्याः सन्ति। तैरपि प्रोत्साहितः लालितश्चाऽहं शोधकार्यमकुर्वम्। तदनन्तरं भ्रातृजायायाः **'रचिता त्रिपाठि'** नाम्ना ख्यातायाः चरणकमलेषु प्रणामाञ्जलिमर्पयामि। एवमेव भ्रातृजायायाः **'अनुराधा त्रिपाठि'** नाम्ना ख्यातायाः चरणकमलेषु प्रणामाञ्जलिमर्पयामि। उभाभ्यामपि भ्रातृजायाभ्यामहं सम्यक् पोषितः, तयोराशिषा सहितया मदीयार्धाङ्गिन्याः **सारिकायाश्चा**तीव सहानुभूतिसहायतया चेदं शोधकार्यं सम्पूर्तिं प्रपेदे।

अथ च सजन्मनां **'ज्ञानेशकुमारत्रिपाठि'** नाम्ना ख्यातानां सहोदराणां कार्तज्ञमाहवयामि। ते चात्रशोधकार्ये टंकणादिविधौ बहुसाहाय्यं कृतवन्तः। तेन हि मदीयमेव कार्यमिति विचार्य प्रबन्धस्य संशोधनसम्पादनादिकार्ये अविस्मरणीयं योगदानं प्रदत्तम्।

अन्ते भवानीविश्वनाथौ प्रणमन्, कृतज्ञतां परिसमापयामि।

**योगेश कुमार त्रिपाठी**

# सङ्केत-सूची

अ०का०- अनुमानखण्डकारिका
अ०को०- अमरकोश
अ०जा०- अनुमानजागदीशी
अ०पा०आ०सू०- अध्याय-पाद-आह्निक सूत्राणि
अ०रा०- अध्यात्मरामायणम्
अ०सि०- अद्वैतसिद्धिः
अवयवप्र०- अवयवप्रकरणम्
अ०सि०प्र०परि०- अद्वैतसिद्धिः प्रथमपरिच्छेदः
अज०पुं०प्र०- अजन्तपुँल्लिङ्गप्रकरणम्
अथर्व०- अथर्ववेदः
अनु०ख०- अनुमानखण्डः
अनु०- अनुमानखण्डः
अनु०गा०- अनुमानगादाधरी
अनु०गा०चि०- अनुमानगादाधरी, चिन्तामणिः
अनु०परि०- अनुमानपरिच्छेदः
अनु०सं०- अनुमानसमीक्षा
अनुप०परि०- अनुपलब्धिपरिच्छेद
अभिधर्म०- अभिधर्मकोशः
अर्था०परि०- अर्थापत्तिपरिच्छेदः
अर्था०- अर्थापत्तिपरिच्छेद
आग०प्र०- आगमप्रकरणम्
आ०परि०- आगमपरिच्छेदः
उ०- उद्धृतम्
उ०प्र०- उल्लासः प्रथमः
उप०परि०- उपमानपरिच्छेदः
उप०भा०- उपस्कारभाष्यम्
ऋग्०- ऋग्वेदः
औत्प०- औत्पत्तिकम्
क०टी०- कलाटीका
क०र०प्र०- कलारत्नप्रभा
कारि०- कारिका
कार०- कारकम्
का०प्र०- कारकप्रकरणम्
कि०का०- किष्किन्धाकाण्डः
कि०टी०- किरणावलीटीका
खं०खं०खा०- खण्डनखण्डखाद्यम्
गुणनिरू०- गुणनिरूपणम्
गूढा० व्यु०- प्रथमाकार०- गूढार्थतत्त्वालोकः, व्युत्पत्तिवादे प्रथमाकारकम्
गूढा०व्यु०- गूढार्थतत्त्वालोकः, व्युत्पत्तिवादटीका
गौ०सू०- गौतमसूत्रम्
च०परि०- चतुर्थपरिच्छेदः
चा०द०- चार्वाकदर्शनम्
चि०म०- चिन्तामणिः
चि०दी०- चिन्तामणि-दीधितिः
छा०- छान्दोग्योपनिषद्
जल्पप्र०- जल्पप्रकरणम्
जाग०प०- जागदीशीपक्षता
जै०द०- जैनदर्शनम्
जै०न्या०मा०अ०- जैमिनीयन्यायमालाऽधिकरणम्
टि०- टिप्पणी
टी०द्व०- टीकाद्वयोपेता
टी०र०प्र०- टीका रत्नप्रभा
टी०हे०- टीका हेलाराजीया
त०प्र०- तर्कप्रदीपिका
त०बो०- तत्त्वबोधिनी
त०वि०- तत्त्वबिन्दुः
त०भा०- तर्कभाषा
त०लो०- तत्त्वालोकः
त०वा०- तन्त्रवार्त्तिकम्
त०वा०त०पा० तन्त्रवार्त्तिके तर्कपादः
त०स०- तत्त्वसङ्ग्रहः
त०सं०- तर्कसंग्रहः
त०सं०दी०- तर्कसंग्रहदीपिका
तत्त्वचि.- तत्त्वचिन्तामणिः
तत्त्वप्र०- तत्त्वप्रकाशिका
तत्त्व०सं०प०- तत्त्वसंग्रहपञ्जिका
तद्धितप्रक०- तद्धितप्रकरणम्

ता०टी०- तात्पर्यटीका
तै०उ०- तैत्तरीयोपनिषद्
द०- दर्पणटीका
दि०- दिनकरी
दी०- दीधिति:
दी०- दीपिकाटीका
दि०उ०- द्वितीय उल्लास:
द्वि०का०- द्वितीय: काण्ड:
नवा०म०भा०- नवाह्निकं महाभाष्यम्
निरु०- निरुक्तम्
नी०भा०- नीलकण्ठी भास्करोदया
न्या०कु०- न्यायकुमुद:
न्या०कुसु०- न्यायकुसुमाञ्जलि:
न्या०द०- न्यायदर्शनम्
न्या०दी०- न्यायदीपिका
न्या०प्र०- न्यायप्रवेश:
न्या०वि०टी०- न्यायबिन्दुटीका
न्या०बो०- न्यायबोधिनी
न्या०भा०- न्यायभाष्यम्
न्या०म०- न्यायमञ्जरी
न्या०र०मा०- न्यायरत्नमाला
न्या०वा०- न्यायवार्त्तिकम्
न्यां०सि०मु०- न्यायसिद्धान्तमुक्तावली
न्या०सू०- न्यायसूत्रम्
पद०- पदकृत्यम् (टीका)
प०जा०- पक्षता जागदीशी
प०शे०- परिभाषेन्दुशेखर:
पर०ल०म०- परमलघुमञ्जूषा
पस्प०- पस्पशाह्निकम्
पा०- पाद:
पा०धा०पा०- पाणिनीयधातुपाठ:
पा०सू०- पाणिनीयसूत्रम्
पु०टी०- पुण्यराजीयटीका
पू०मी०- पूर्वमीमांसा
पृ०- पृष्ठम्
प्र०- प्रकरणम्
प्र०ख०- प्रत्यक्षखण्ड:
प्र० टीकोद्धृतम्- प्रकाशटीकोद्धृतम्
प्र०टी०- प्रकाशटीका
प्र०टी०- प्रभाटीका
प्र० निरूपणम्- प्रत्यक्षनिरूपणम्
प्र०प०- प्रत्यक्षपरिच्छेद:
प्र०परि०- प्रत्यक्षपरिच्छेद:
प्र०परि०- प्रथमपरिच्छेद:
प्र०पा०भा०- प्रशस्तपादभाष्यम्
प्र०भा०- प्रथमभाग:
प्र०प्र०- प्रमाणप्रकरणम्
प्र०मी०- प्रमाणमीमांसा
प्र०र०- प्रस्थानरत्नाकर:
प्र०वा०- प्रमाणवार्त्तिकम्
प्र०वि०- प्रमाणविवेचनम्
प्र०स०- प्रमाणसमुच्चय:
पृ०सं०- पृष्ठसंख्या
प्रक०प०- प्रकरणपञ्चिका
प्रमा०प्र०क०- प्रमाणप्रमेयकलिका
प्रमेयकम०- प्रमेयकमलमार्त्तण्ड:
प्रमेयर०- प्रमेयरत्नमाला
प्रौ०म०- प्रौढमनोरमा
बा०रा०- बाल्मीकीयरामायणम्
ब्र०सू०- ब्रह्मसूत्रम्
बृहदा०- बृहदारण्यकोपनिषद्
भा०- भास्करोदया टीका
भाम०- भामती
भू०सा० भूषणसार:
भैर०- भैरवीटीका
म०प्र०- मणिप्रभा
म०स्मृ०- मनुस्मृति:
मा०- माठरवृत्ति:

म०भा०- महाभाष्यम्
म०भार०- महाभारतम्
म०भा०प्र०उ०- महाभाष्यप्रदीपोद्द्योत:
मा०मे०- मानमेधोदय:
मा०सू०- माहेश्वरसूत्रम्
मी०द०- मीमांसादर्शनम्
मुण्डक०- मुण्डकोपनिषद्
मु०दि०- मुक्तावली दिनकरी
यजु०- यजुर्वेद:
या०स्मृ०- याज्ञवल्क्यस्मृति
यो०द०- योगदर्शनम्
यो०द०व्या०भा०- योगदर्शन-व्यासभाष्यम्
यो०वा०- योगवार्त्तिकम्
र०का०- रत्नकारिका
रघु०- रघुवंशमहाकाव्यम्
र०प्र०- रत्नप्रभाटीका
ल०प्र०- लक्षणप्रकरणम्
ल०मं०- लघुमञ्जूषा
वा०टी०- वामनी टीका
वा०प०- वाक्यपदीयम्
वाद०प्र०- वादप्रकरणम्
वि०सू०नि०- विश्वनाथसूत्रवृत्ति:
वृ०- वृत्ति:
वे०प०- वेदान्तपरिभाषा
वै०भू०सा०- वैयाकरणभूषणसार:
वै०सि०कौ०- वैयाकरणसिद्धान्तकौमुदी
वै०सि०ल०म०- वैयाकरणसिद्धान्तलघुमञ्जूषा
व्य०निरू०- व्यञ्जनानिरूपणम्
व्या०प०- व्याप्तिपञ्चकम्

व्या०वा०- व्याप्तिवाद:
व्यु०वा०- व्युत्पत्तिवाद:
व्यु०जया०प्र०- व्युत्पत्तिवादे जयाटीका-प्रथमाकारकम्
श०क०द्रु०- शब्दकल्पद्रुम
श०कौ०- शब्दकौस्तुभ:
श०ख०- शब्दखण्ड:
श०र०- शब्दरत्नम्
श०वा०- शक्तिवाद:
शा०दी०- शास्त्रदीपिका
शा०भा०- शाङ्करभाष्यम्
शा०भा०- शाबरभाष्यम्
शुक्लयजु०- शुक्लयजुर्वेद:
श्रीमद्भाग०- श्रीमद्भागवतम्
श्लो०- श्लोक:
श्लो०वा०- श्लोकवार्त्तिकम्
स०द०सं०- सर्वदर्शनसंग्रह:
स०प्र०- समासप्रकरणम्
सं०प्र०- संज्ञाप्रकरणम्
सर्वार्थ०- सर्वार्थसिद्धि:
सा०स०- साधनसमुद्देश:
सां०त०कौ०- साङ्ख्यतत्त्वकौमुदी
सा०द०- साहित्यदर्पण:
साम०- सामवेद:
सामा०नि०- सामान्यनिरुक्ति:
सा०ल०- सामान्यलक्षणा
सा०ल०प्र०- सामान्यलक्षणा प्रत्यखखण्ड:
सि०कौ०- सिद्धान्तकौमुदी
सि०ल०- सिद्धान्तलक्षणम्
सु०का०- सुन्दरकाण्ड:
सु०टी०- सुबोधिनी-टीका
सू०- सूत्रम्
स्फोटनि०- स्फोटनिरूपणम्
स्फोटप्र०- स्फोटप्रकरणम्
हरि०टी०- हरिदासीयटीका

# मङ्गलाचरणम्

विघ्नध्वान्तनिवारणे रविरसौ ज्ञानप्रदाने श्रुतिः
शत्रोर्दर्पविदारणे रघुपतिः भक्तप्रियो नायकः।
पापानां दहने स्फुरद्धुतवहः कामप्रदाने शिवः
सिन्दूराङ्कितदेहहस्तिवदनो माङ्गल्यमायच्छतु॥

गङ्गालिङ्गितशेखरं नगसुता स्नेहादिदं भाषते
स्वामिन् शांतिनिवर्तकं ध्वनियुतं गङ्गाङ्गसङ्ग त्यज।
विष्णोः पादरजः प्रसूतसरितां सश्रध्याऽन्हं दधे
गौरीपूजीतधूर्जटि प्रतिवचो माङ्गल्यमाच्छतु॥

येन द्वैतनिरासने श्रुतिशिखाव्याख्या समासाधिता
सत्यं ब्रह्म मृषा समस्तविभवोऽविद्याविलसानुगः।
विद्याऽज्ञाननिवर्तिका जनिजुषां मोक्षश्च चिद्रूपता
तं श्रीशंकरपादलोकसुखदं वन्दे भवच्छेदकम्॥

ब्रह्माद्वैतमतं न वेदविहितं भक्तिर्हिसेव्याजनैः
चिज्जीवेन तथाऽचिदर्थजगता शिष्टो हरी राजते।
ताभ्यां युक्तमजीजनत् समस्तविभवं कर्मानुरूपं सदा
योगिन्द्रं तमहं प्रणोमि सततं रामानुजं ज्ञानदम्॥

वेदप्रोदितधर्मरक्षणविधौ त्यक्त्वा गृहस्थाश्रमं
तत्वान्वेषणतत्परो गुरुकुला द्विद्यां समासाधयत्।
ब्रह्माद्वैतमतं न वेदविहितं योऽबोधयद्युक्तितः
रङ्गाचार्यमहं प्रणोमि सततं मद्वंशशोभाकरम्॥

# प्रस्तावना

## (क) न्यायशास्त्रस्य महत्त्वं तस्य वेदाङ्गत्वविचारश्च

यद्यपि-

**शिक्षा व्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा।**
**कल्पाश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः॥**

**'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयोज्ञेयश्च'** इत्यादि वैदिकवाक्यैः ज्ञायते यत् शिक्षादिष्वेव षडङ्गशब्दस्य प्रयोगः। एवमुपाङ्गशब्दस्यापि पुराणन्यायमीमांसाधर्मशास्त्रेषु प्रयोगो न दृश्यते प्राचीनग्रन्थेषु। तथापि अङ्गानां षट्त्वप्रदर्शनेन एतेषां नहि अङ्गत्वं प्रधानाङ्गीभूतेभ्यः वेदेभ्यश्च पार्थक्येन एतेषां निर्देशति नैतेषामङ्गीत्वं भवितुमर्हति। अतः एतेषामुपाङ्गत्वमेव स्वीकरणीयम्। केचन विद्वांसः उपाङ्गपदेन पुराणन्यायमीमांसाधर्मशास्त्राणां चतुर्णां विद्यास्थानत्वं प्रतिपादयन्ति। उक्तञ्च न्यायसूत्रवृत्तौ विश्वनाथन्यायपञ्चाननेन-[1]

**मीमांसान्यायतर्काश्च उपाङ्गः परिकीर्तितः।**

इति पुराणवचनमुदाहृतम्।

इदानीमियं जिज्ञासा जायते यत्केषांचिच्छास्त्राणां वेदाङ्गत्वेन परिगणनमेवं केषाञ्चित् शास्त्राणामुपाङ्गत्वेन परिगणनं यत्क्रियते तत्र किं विनिगमकम्। अत्र केचन विद्वांस इत्थं प्रतिपादयन्ति यद्वेदस्य स्वरूपपरिज्ञाने अथवा वेदार्थविषयकबोधे साक्षादुपयोगो जायते तेषु शास्त्रेषु वेदाङ्गत्वेन व्यवहारः। यानि च शास्त्राणि वेदस्य स्वरूपपरिज्ञाने वेदार्थविषयक- ज्ञाने वा उदासीनतां बिभ्रति। वेदार्थप्रसाराय प्रवृत्तानि पुराणादीनि तानि शास्त्राणि उपाङ्गपदेन

---

[1] न्यायसूत्रवृत्तिः- 1/1/1

व्यवहर्तव्यानि भवन्ति। परन्तु ईदृशं विवेचनं न हि समीचीनं प्रतिभाति। एवं विधेन विवेचनेन मीमांसामुपाङ्गत्वं न हि सम्भवति। मीमांसाया वेदस्वरूपपरिज्ञाने एवं वेदार्थविषयक-बोधेसम्पादने साक्षादुपयोगित्वस्य सर्वजनानुभवसिद्धत्वात्। मीमांसातिरिक्तानि सर्वाण्यपि शिक्षाव्याकरणादीनि अङ्गानि वैदिकपद-पदार्थप्रतिपादनाय प्रवृत्तानि सन्ति। मीमांसा च वैदिकवाक्येषूत्थितान्संशयविषयान्निराकृत्यासंदिग्धाविपरीतवाक्यार्थविषयकबोधजनने महदुप-कारतां वहति। अत एव धर्मे प्रमाणभूतस्य वेदस्य इत कर्तव्यता भवति। अत एवोक्तं भट्टेन-

**धर्मे प्रमीयमाणे तु वेदेन कर्णात्मना।**
**इति कर्तव्यताभागं मीमांसा पूरयिष्यति।।**[1]

फलस्य साधनाय प्रवृत्तस्य करणस्य यदुपकारकं भवति तदेव इति कर्तव्यता शब्देन व्यपदिष्यते। धर्मविषयकयथार्थज्ञानात्मके कार्ये मीमांसायारुपकारकत्वस्य वर्णनात्शिक्षादिभ्यो मीमांसायां विलक्षणं वैशिष्ट्यं दृश्यते। अतः मीमांसाशास्त्रस्याऽसमीचीनं न प्रतिभाति। अत्रेदं समाधानं धर्मशास्त्रादिष्वङ्गत्वेन षट्संख्यकशास्त्राणामेव निर्णीतत्वान्मीमांसायाः षट्संख्याति-रिक्तत्वेन वेदोपजीवकत्वादुपाङ्गत्वेनैव मीमांसायाः व्यवहारः स्वीकरणीयः। एवञ्च यथा मीमांसाया उपाङ्गत्वं तथैव न्यायशास्त्रस्यापि वेदोपजीवकत्वाद्वेदोपाङ्गत्वमेव स्वीकरणीयम्।

## न्यायविस्तरस्य विद्यास्थानान्तरगतत्वम्

दशसंख्यकानामङ्गोपाङ्गानां विद्यास्थानानां वेदोपकारकत्वेन प्रामाण्यं प्राचीनाः स्वीकुर्वन्ति। अत्र मीमांसाया वेदोपकारकत्वं तदर्थविचारद्वारा साक्षात्सर्वैरनुभूयते। तस्य विद्यास्थानत्वं भवतु नाम। परन्तु न्यायविस्तरस्य कथं वेदोपकारकत्वम्? एतदेव इदानीं विचार्यते। तत्रोक्तं न्यायमञ्जर्यां जयन्तभट्टेन-[2]

---

[1] मनुस्मृतिव्याख्या – कुल्लूकभट्टटीका – कुमारिलभट्टः
[2] न्यायमञ्जरी, पृ0 3

**'न्यायविस्तरस्तु मूलः स्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यहेतुत्वात्। वेदेषु हि तार्किकरचितकुतर्कविप्लावितप्रामाण्येषु शिथिलावस्थाः कथमिव बहुवित्तव्यवसायादिसाध्यं वेदार्थानुष्ठानमादियेरन्साधवः? किं वा तदानीं स्वामिनी परिम्लाने तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यम्? तस्मादशेषदुष्टतार्किकोपमर्दद्वारकदृढतरवेदप्रामाण्यप्रत्ययाधायिन्यायोपदेशक्षममक्षपादोपदिष्टमिदं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परन् विद्यास्थानम्।'** इति वर्णयन्तः वेदाप्रामाण्यवादनिरसनपुरस्सरं वेदप्रामाण्यसमर्थनं कुर्वन्न्यायविस्तरः वेदस्योपकारको भवति। इति प्रतिपादितं जयन्तभट्टेन-

अत्रेयं जिज्ञासा जायते यत्वेदप्रामाण्यस्य मीमांसाशास्त्रेऽपि समर्थनात् किमर्थं न्यायविस्तरस्याङ्गत्वस्वीकारात्। अत्रेदमुच्यते यदर्थविचार एव मीमांसाया मुख्यं प्रयोजनम्, न तु प्रमाणस्य विचारः। विचारार्थञ्च प्रमाणस्यातीवाऽवश्यकता भवति। स च प्रमाणविचारो न्यायदर्शनेनैव कर्तुं शक्यते। अतः न्यायविस्तरस्य वेदार्थपरिज्ञानाय परमावश्यकत्वान्मीमांसावन्न्यायविस्तरस्यापि आवश्यकतया भवति न्यायविस्तरस्याङ्गत्वम्।

पृथक्प्रस्थानं हि चतुर्दशविद्या। एवञ्च मीमांसावाक्यार्थविधया वेदस्योपकारिका। न्यायविस्तरस्तु प्रमाणप्रदर्शनेन वेदोपकारिका। अतेवोक्तं जयन्तभट्टेन[1] मीमांसा वाक्यार्थविद्या न हि प्रमाणविद्या। इत्थं प्रकारेण द्वयोरपि विद्ययोर्वेदाङ्गत्वम्। उक्तञ्च भाष्यकारेण वात्स्यायनेन-[2]

**'सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थै र्विभज्यमाना'।**
**'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता।।**[3]

इत्थं प्रकारेण न्यायविस्तरस्योपयोगित्वं सिद्ध्यति।

---

[1] न्यायमञ्जरी, पृ0 4
[2] वात्स्यायनभाष्ये, 1/1/1
[3] मनुस्मृतिः, 12/106

## न्यायशास्त्रवाचकपदानि

न्यायशास्त्रमिदमान्वीक्षिकी, न्यायदर्शनं, न्यायविस्तरः, न्यायशास्त्रं, न्यायविद्या, हेतुशास्त्रं, वाकोवाक्यमित्यादिपदानि न्यायशास्त्रबोधकानि भवन्ति। तत्र आन्वीक्षिकीपदस्य न्यायवाचकत्वे वात्स्यायनेन एवमुक्तं- **'प्रत्यक्षागमाभ्यामीक्षितरमाऽन्वीक्षणमन्वीक्षा, तया प्रवर्तते इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्'**[1] इति। अत्र प्रत्यक्षागमाश्रितमिति पदस्य प्रत्यक्षागमाविरोध्यर्थकम्। अत एव-

**आर्षं धर्मोपदेशञ्च वेदशास्त्राऽविरोधिना।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।।**[2]

इति मनुस्मृतौ तर्कपदेनानुमानस्वरूपाऽन्वीक्षैव विवक्षिता भवतीति भाष्यकाराभिप्रायः एष आन्वीक्षिकी शब्दः कौटिल्ये **'आन्वीक्षिकी त्रयीवार्ता दण्डनीतिश्च शाश्वती'**। न्यायशास्त्रबोधनायैव प्रयुक्तः। एवं-

**त्रै विद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम्।**
**आन्वीक्षिकीं चात्त्मविद्यां वार्तारम्भांश्च लोकतः।।**

इत्थं मनुस्मृतावपि[3] प्रयुक्तः। अनया रीत्याऽनुमानप्रमाणज्ञापकं शास्त्रमान्वीक्षिकीशास्त्रं भवतीति सिद्धम्।

न्यायशब्दविषये **'प्रमाणैरर्थपरीक्षणम्'**[4] इति न्यायभाष्ये विवेचनं दृश्यते। एवं ह्य- **'समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः'**[5] इति वार्तिककारः। एवमेव आगमः प्रतिज्ञा, हेतुः, अनुमानं, उदाहरणं, प्रत्यक्षमुपमानमुपनयः। इत्येवं रीत्या सर्वेषामेव प्रमाणानां प्रवृत्तिः न्यायदर्शने भवतीति। एवं **'प्रत्यक्षादिप्रमाणमूलकाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि**

---

[1] न्यायदर्शनम्, अ0-1, आ0-1, सूत्र0-1, पृ0सं0-8
[2] मनुस्मृतिः, मन्वर्थमुक्तावलीटीका, 12/106
[3] मनुस्मृतिः, मन्वर्थमुक्तावलीटीका, 7/43
[4] न्या0द0, अ0-1, सू0-1, पृ0सं0-8
[5] न्या0वा0, पृ0 15

**तैरर्थस्य परीक्षणं परीक्षा'**[1] इति टीकाकारः। अन्यत्र शास्त्रेषु च **'पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः'**। पञ्चावयवसमुदायः न्यायः। नीयते विवक्षितार्थसिद्धिरनेन इति न्यायः। इत्येवं विचाराः टीकाकाराणामेव दृश्यते। अतएव पञ्चावयवात्मकन्यायवाचकत्वादिदं शास्त्रं न्यायविस्तरसंज्ञया व्यपदिष्यते।

तर्को नाम प्रमाणप्रदर्शिते विषये युक्तायुक्तविचारः। स च तर्कः न प्रमा न प्रमाणान्तरं, अपितु प्रमाणानामनुग्राहको भवति। अस्य तर्कस्य मीमांसाशब्देनापि व्यपदेशो दृश्यते। प्रमा साधकाणां प्रत्यक्षादीनामनुग्राहकत्वादिति कर्तव्यता भवति तर्कः। उक्तञ्च मिश्रेण तात्पर्यटीकायां[2] **'प्रमाणं तत्त्वावधारणाय प्रवृत्तं करणतया इति कर्तव्यतामपेक्षते। तर्कश्च प्रमाणविषययुक्तायुक्तविचारात्मा प्रमाणं युक्ते तत्त्वे प्रवर्तमानमनुजानन् प्रमाणमनुगृह्णाति'**। एवञ्च तर्कव्युत्पादकत्वादिदं तर्कशास्त्रं भवति।

हेतुशास्त्रमित्यपि अस्य शास्त्रस्य संज्ञा आसीत्। तथा चोक्तं मनुस्मृतौ-[3]

**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।**

इत्यादिवाक्यदर्शनेन हेतुशब्दस्यानुमानार्थकत्वम्। तथा चानुमानप्रधानमिदं शास्त्रं, अतः हेतुशास्त्रशब्देनापि न्यायशास्त्रस्य व्यवहारः सम्भवति। यतः शास्त्रमिदं प्रत्यक्षादिप्रमाण-चतुष्टयस्य बोधकं, अतः शास्त्रमिदं प्रमाणशब्देनापि व्यपदिष्यमानमस्ति। अतएव शङ्करभग-वत्पादैर्व्यासस्य पदवाक्यप्रमाणज्ञेनाचार्येण इति विशेषणं प्रदत्तम्। अत्र पदबोध्यं व्याकरणशास्त्रं वाक्यबोध्यं मीमांसाशास्त्रं प्रमाणबोध्यं न्यायशास्त्रं भवति।

अतएवोक्तं कल्पतरौ-

**पदवाक्यप्रमाणाब्धेः परम्पारमुपेयुषः।**
**वाचरूपतेरियत्यर्थेऽप्यबोध इति साहसम्।।**[4]

---

[1] तात्पर्यटीका- पृ0सं0-49
[2] तात्पर्यटीका- पृ0सं0-47
[3] मनुस्मृतिः - मन्वर्थमुक्तावलीटीका, 2/11
[4] कल्पतरुः, पृ0सं0-806

एवमेव वाकोवाक्यशब्देनापि न्यायदर्शनस्य व्यपदेशो भवति। यथा छान्दोग्योपनिषदि वाकोवाक्यशब्देन न्यायशास्त्रस्य व्यपदेशः दृश्यते।

**'ऋग्वेदं भगवोध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं वाकोवाक्यमेकायनमिति।'** एतद्वेदवाक्यव्याख्यानावसरे भगवदाशङ्कराचार्येण वाकोवाक्यं तर्कशास्त्रं भवतीति प्रतिपादितम्।

एवं कैयटः वाकोवाक्यशब्देन न्यायशास्त्रमेव व्यपदिष्यते। इत्याह- **'वाकोवाक्यं, इतिहासः, पुराणं, वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः।'**[1] इत्येतत्भाष्यव्याख्यानावसरे वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपः ग्रन्थो विवक्षितोऽस्ति। यथा 'किंस्वीदावपनं महत् भूमिरावपनं महत्' इत्याह। तथा प्रतितन्त्र सिद्धान्तलक्षणसूत्रे **'पुरुषकर्मादिनिमित्तः भूतसर्गः इति योगानाम्'**[2] इत्थं प्रकारेण न्यायदर्शनस्य योगशब्देनापि व्यपदेशः बोध्यते। तत्रैव योगशब्दव्यप-दिष्यत्वे यथा **'भौतिकानीन्द्रियाणीति योगानाम्'** इति वार्तिकमपि न्यायशास्त्रस्य योगपदव्यपदिष्यत्वे प्रमाणमवगन्तव्यमिति।

## नव्यन्यायशास्त्रोत्पत्तिः

चिरकालाद् गौतमीयमिदं न्यायशास्त्रं कालक्रमेणानेकविधग्रन्थनिर्माणाधीनमहतीमभिवृद्धिमभिप्राप्य विराजते। इदमेव शास्त्राधुनिकैः प्राचीनन्यायनव्यन्यायभेदेन द्वैविध्यं विद्वद्भिः व्यपदिश्यते। गङ्गेशोपाध्यायात् पूर्ववर्तिभिः विद्वद्भिः निर्मितानां न्यायशास्त्रीयग्रन्थानां प्राचीनन्यायशब्देन व्यवहारो दृश्यते। गङ्गेशोपाध्यायविरचित तत्त्वचिन्तामणिमारभ्य। तत्पश्चाद् विरचितानां न्यायशास्त्रीयग्रन्थानां नव्यन्यायशब्देन व्यवहारः अधुना सर्वैरेव क्रियते। एकस्यैव न्यायशास्त्रस्य प्राचीनन्याय संज्ञायां नव्यन्यायसंज्ञायाञ्च किं विनिगमकम्। एतद्विषयकपर्यालोचने संलग्नाः केचन विद्वांसः एतद्विषये नियामकं वर्णयन्ति यत् नव्यन्यायशास्त्रे

---

[1] व्याकरणमहाभाष्य- पस्पशाह्निक, पृ०सं०-51

[2] न्यायभाष्ये, 1/1/29, पृ०सं०- 503

अवच्छेदकत्वावच्छिन्नत्वादिशब्दानां बाहुल्यादुपाध्यायात् परवर्तिन्यायशास्त्रं नव्यन्यायशब्द-व्यपदिष्यं भवति।

मतमिदं नहि विचारपरिपूर्णं दृश्यते। यतो हि यादृशावच्छेदकावच्छिन्नादिघटितः शब्दप्रयोगः नव्यन्यायशास्त्रे दृश्यते तथैव प्राचीनन्यायग्रन्थेष्वपि एतादृशः प्रयोगो दृश्यते। अतः अवच्छेदकावच्छिन्नशब्दबाहुल्यान्नव्यन्यायसंज्ञा इति विचारपथं नाधिरोहति। अपितु गौतमादारभ्य गङ्गेशोपाध्यायात् पूर्वं गौतमीयप्रमाणादिषोडशपदार्थानां विवेचनं दृश्यते।

यद्यपि प्रमाणमपि प्रमेयमेव अतः प्रमेयतत्त्वप्रतिपादकानां शास्त्राणां प्रमाणप्रतिपादकत्व-मपि भवति। अतः प्रमाणप्रतिपादकशास्त्रस्य प्रमेयप्रतिपादकशास्त्रेण भेदं व्यवस्थापयितुं न शक्यते। परन्तु महर्षिणा गौतमेन प्रमाणादिसकलपदार्थानां प्रमेयान्तरगतत्त्वेऽपि तेषां कार्यवैलक्षण्यात्स्वरूपवैचित्र्याच्च प्रमाणादिषोडशपदार्थत्वेन पार्थक्येन निर्देशः कृतः। तेषाञ्च षोडशपदार्थानां सूत्रानुसारं भाष्यकृता वात्स्यायनेन विवेचनञ्कृतम्। तदाश्रृत्य उद्योतकर-भारद्वाजेन वार्तिकं विरच्य प्रमाणादिषोडशपदार्थानां पर्यालोचनं कृतम्। न्यायवार्तिकमवलम्ब्य षड्दर्शनटीकाकृद्भिः तात्पर्यनामिकाटीका कृता। तादृशतात्पर्यटीकोपरि आचार्येण उदयनेन परिशुद्धिनाम्नीटीका विरचिता। अनया रीत्या यावत्पदार्थविषयमवलम्ब्यैव जयन्तभट्टेन न्यायमञ्जरी ग्रन्थो निर्मितः। किञ्च भासर्वज्ञेन न्यायसारग्रन्थस्य निर्माणं कृतम्। इत्थं प्रकारेण सर्वत्र प्रकाशमानं यच्छास्त्रं समस्तपदार्थानां विवेचकं तत्तन्महर्षिकल्पैः विद्वद्वरेण्यैः प्रणीतं यच्छास्त्र तत् सर्वपदार्थप्रतिपादकत्वात् प्राचीनन्यायसंज्ञया व्यपदिश्यते।

मानाधीना मेयसिद्धिर्भवति इति सिद्धान्तमवलम्ब्य प्रमेयज्ञानस्य संपादकं प्रमाणज्ञानं भवति। प्रमाणज्ञानमन्तरा प्रमेयतत्वस्य परिज्ञानं कथमपि कर्तुं न शक्यते। अतः प्रथमं प्रमाण-चतुष्टयस्य ज्ञानं परमावश्यकमिति विचार्य महामहोपाध्यायेन गङ्गेशेन प्रमाणचतुष्टयप्रतिपादकः तत्त्वचिन्तामणिग्रन्थः निर्मितः। तत्र प्रथमखण्डे प्रत्यक्षप्रमाणनिरूपणं द्वितीयखण्डे च अनुमाननिरूपणं तृतीयखण्डे च उपमाननिरूपणं चतुर्थखण्डे च शब्दनिरूपणम्। अस्य

ग्रन्थस्य व्याख्यानपद्धतिः प्राचीनग्रन्थेभ्यो विलक्षणा दृश्यते। अतएव अस्य ग्रन्थस्य नव्यन्यायारम्भकप्रथमग्रन्थत्वेन व्यपदेशः।

ग्रन्थेऽस्मिन् लक्षणपरिष्कारविषये काचन विलक्षणैव रीतिः दृश्यमाना विद्यते। प्राचीनन्याये यद्यपि अव्याप्त्यादिदोषनिवारणार्थं तत्तत्पदानां निवेशो विद्यते तथापि तल्लक्षणं नव्यन्यायवत् परिष्कृतं न दृश्यते। परन्तु नव्यन्यायशास्त्रे तत्तद्दोषवारणाय विलक्षणः परिष्कारः विद्यते, इति सर्वेऽपि विद्वांसः अनुभवन्ति। यथा व्याप्तिलक्षणविचारावसरे **साध्यसम्बन्धिता-वच्छेदकरूपवत्वं व्याप्तिः** अथवा **अनौपाधिकः साध्यस्य सम्बन्धः व्याप्तिः।** ईदृशं लक्षणं व्याप्तेः तत्तत्प्राचीनग्रन्थेष्वपलभ्यते परन्तु इयमेव व्याप्तिः पूर्वपक्षत्वेन भिन्न-भिन्नरीत्या नव्यन्यायशास्त्रे परिष्कृता विद्यते। यथा साध्याभाववदवृत्तित्वस्य **साध्यता-वच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकाविच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ना-धेयतानिरूपिताधिकरणतानिरूपितवृत्तित्वाभावो व्याप्तिः।** एवं हेत्वाभासलक्षणस्य परिष्कारः **स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं अथ च प्रकृतानुमितित्व-व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताऩतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तादृशस्वात्मक यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तद्रूपवत्वं हेत्वाभासत्वम्।**

इत्थं प्रकारेण तत्तल्लक्षणानां परिष्कारः नव्यन्यायग्रन्थेष्वेवोपलभ्यते। ईदृशी विचारशैली गङ्गेशात् पूर्व विरचितेषु ग्रन्थेषु नोपलभ्यते। अतः अस्मिन् शास्त्रे पूर्वशास्त्रतः नवीनत्वं प्रतिभाति। अतएव इदं प्रमाणभूतं शास्त्रं नव्यन्यायपदव्यपदेश्यं भवति।

एतन्नव्यन्यायशास्त्रं समस्ते भारतवर्षे प्रख्यापितमस्ति। सर्वेऽपि एतादृशी-सरणिमाश्रित्यैव शास्त्रविचारकाः भवन्ति। अस्य शास्त्रस्य विशेषतः प्रसारः प्रथमं मिथिलायां तदनन्तरं बङ्गे अभूत। गङ्गेशोपाध्यायप्रणीतस्य ग्रन्थस्यानेकटीकाकारा विद्यन्ते।

# चिन्तामणिग्रन्थस्य टीकानां परिचयः

## चिन्तामणिप्रकाशः

तत्त्वचिन्तामणिमाश्रित्य वर्धमानोपाध्यायेन चिन्तामणिप्रकाशनाम्नीटीका निर्मिता। असौ वर्धमानोपाध्यायो महामहोपाध्यायगङ्गेशस्य पुत्रः। अस्य ग्रन्थस्य विवरणं ग्रन्थान्तरेषु उपलभ्यते। गङ्गादित्यनामकः कश्चन विद्वद्वरेण्यः तत्त्वचिन्तामणेः टीकां व्यरचयदित्यपि श्रूयते।

## वर्धमानोपाध्यायः

असौ विद्वान्महामहोपाध्यायस्य गङ्गेशस्य पुत्रः। अनेन विदुषा चिन्तामणिग्रन्थस्य प्रकाशनाम्नी व्याख्या कृता। यस्य उल्लेखः चिन्तामणिग्रन्थस्य विभिन्नेषु व्याख्यानेष्वपलभ्यते। अंशभूतेन अस्या भागो यत्र कुत्रचिदुपलभ्यते। सम्पूर्णमणिग्रन्थस्य प्रकाशात्मकं व्याख्यानामिदानीमुपलब्धं नास्ति। एतत् वर्धमानोपाध्यायविरचितं कुसुमाञ्जलिव्याख्यानमुपलब्धमस्तीति। अस्य विदुषः समयः चतुर्दशशतकं विद्यते।

## गङ्गादित्योपाध्यायः

असौ विद्वान् चिन्तामणेः टीकां व्यरचयत्। परन्तु एतद्विरचिता टीका इदानीमुपलब्धा नास्ति। परन्तु एतद्विरचिता काचन् टीका आसीदिति विद्यानिवासभट्टाचार्यविरचितेन तत्त्वचिन्तामणिग्रन्थेन वाराणंसीस्थसरस्वतीभवनस्थेनावगम्यते। यतो हि-

भट्टमुरारिन्यायमतेषु **स्वग्राह्यप्रामाण्याप्रसिद्ध्यापार्थमिति च ज्ञेयमिति नञ्गर्भपाठो वर्धमानगङ्गादित्यानुमतः।"**[1]

अनया पङ्क्तया ज्ञायते यद् असावपि विद्वान् चतुर्दशशताब्द्यामेवासीत्।

[1] तत्त्वचिन्तामणि- तत्त्वविचेचन

## घटेशोपाध्यायः

अनेनापि तत्त्वचिन्तामणेः काचन् टीका विरचिता। एतदपि विद्यानिवासभट्टाचार्य-विरचितचिन्तामणिविवेचनग्रन्थादेव परिज्ञायते। तथा हि-

**'अतएव घटेशोपाध्यायो नियममतं तुच्छीकृत्य दोषौत्कट्यात् पीतादिभ्रमः इति स्वीचक्रे'।**

इति पङ्क्तिदर्शनेन परिज्ञायते यत् घटेशोपाध्यायनामकेन केनचिद्विदुषा मणिग्रन्थस्य निर्माणमकरोदिति।

## वाचस्पतिमिश्रः (द्वितीयः)

असौ विद्वान् मिथिलायां पञ्चदशशताब्द्यां समुत्पन्नः द्वितीयवाचस्पतिमिश्रसंज्ञया परिलक्षितोऽभूत्। अनेनापि विदुषा 'चिन्तामणिप्रकाश' नाम्नी टीका विरचिता। टीकाग्रन्थोऽयं वाराणसीस्थसरस्वतीभवने अद्यापि पाण्डुलिपिरूपेण सुरक्षितोऽस्ति। दरभङ्गामण्डलस्य मधुबनीसन्निकटस्थ मेंगरौनीग्रामे महामहोपाध्यायगङ्गेशोपाध्यायानां जन्म सञ्जातम्। महामहोपाध्याया मिथिलायां प्रथमनव्यन्यायप्रवर्तकाः आसन्। तद्विरचितः तत्त्वचिन्तामणिग्रन्थः भारतीयदर्शनस्य चिन्तनक्षेत्रे नवीनः मार्गः उपस्थापितः। अस्यैव ग्रन्थस्य मणिसंज्ञा लघुरूपेण प्रसिद्धा विद्यते। श्रूयते यत् गङ्गेशोपाध्यायेन एको विद्यालयो दरभंगातः पञ्चक्रोशानन्तरं पूर्वदिशि स्थिते करियनग्रामे स्थापित आसीत्। महामहोपाध्यायेन न्यायदर्शनस्य प्राचीनां पद्धतिं परित्यज्य प्रमाणविवेचनमवलम्ब्य प्रमाणचतुष्टयविवेचनार्थं नूतनया सरण्या तत्त्वचिन्तामणिग्रन्थः रचितः। यतो हि कस्यापि वस्तुनः स्वरूपस्य याथार्थ्येन निर्णयः प्रमाणबलेनैव कर्तुं शक्यते। तानि च प्रमाणानि प्रत्यक्षानुमानोपमानशब्दभेदेन चतुर्विधानि भवन्ति। तत्राप्यनुमानस्य सूक्ष्मत्वेन तर्कवितर्कमवलम्ब्य व्याप्तेः परीक्षणं कृतमस्ति। तर्कबलेनैव समस्तव्यंभिचारादिदोषपरिहारं कर्तुं शक्यते, अतः तर्कोऽपि सम्यक् परीक्षितः। तर्कप्रतिपादकोऽयं चिन्तामणिग्रन्थः सर्वेषां विदुषामाकर्षणस्य हेतुरभूत्। ततः आरभ्याद्यावधि

नव्यन्यायशास्त्राधारेणैव सर्वेषां दर्शनानां विचारः प्राचलत्। एतत् तत्त्वचिन्तामणिग्रन्थमाश्रित्य विविधभाष्यस्य तट्टीकायाश्च बाहुल्यमुपलभ्यते। येन अनेकविधटीकाग्रन्थैः सह नव्यन्यायशास्त्रमिदं सर्वेषां जनानां कृते विशालः साहित्यागारः सञ्जातः। विदुषां मध्ये तत्त्वचिन्तामणितः कश्चनान्यग्रन्थः सर्वजनप्रियः नास्ति।

गङ्गेशोपाध्यायानन्तरं मिथिलायां प्रसिद्धः न्यायशास्त्रमर्मज्ञाः अनेके विद्वांसः अभूवन्। तेषु वर्धमानोपाध्यायः पक्षधरमिश्रः, शङ्करमिश्रः, द्वितीय वाचस्पतिमिश्रः, भगीरथठाकुर इत्यादय आसन्। तत्प्रणीतग्रन्थाः अधोनिर्दिष्टाः विद्यन्ते। तत्त्वचिन्तामणिमयूखः, वैशेषिकोपरि भेदरत्नप्रकाशः, अभेदधिक्कारः।

एतद्विरचिताः अधोलिखितग्रन्थाः उपलभ्यन्ते- (1) अनुमानखण्डटीका, (2) न्यायसूत्रोद्धारः, (3) खण्डनखण्डोद्धारः। असौ विद्वानभिनववाचस्पतिमिश्र संज्ञयापि व्यपदेश्यः अस्ति। एते विद्वांसः धर्मशास्त्रस्यापि ज्ञातारः आसन्। अतोऽपि एतेषां महती ख्यातिरासीदिति।

## भगीरथठक्कुरः

मेघा परनामधेयः भगीरथठक्कुरः आसीत्। असौ विद्वान् खण्डवला राजवंश-संस्थापकस्य महेशठक्कुरस्य भ्राता आसीत्। एतद्विरचिता अधोनिर्दिष्टा ग्रन्था उपलभ्यन्ते-

(1) कुसुमाञ्जलिप्रकाशप्रकाशिका, (2) किरणावलीप्रकाशप्रकाशिका,

(3) लीलावतीप्रकाशप्रकाशिका।

## महेशठक्कुरः

अस्य जन्म दरभङ्गामण्डलान्तर्गत भौरग्रामे अभूत्। अनेन पण्डितप्रवरेण पक्षधरमिश्रकृत तत्त्वचिन्तामण्यालोकमवलम्ब्य, **'तत्त्वदर्पण'** नामकं भाष्यं रचितवान्।

ग्रन्थोऽयं सर्वथा प्रामाणिको न्यायशास्त्रे। तत्रैव ग्रन्थे इति 'महामहोपाध्यायसम्मिश्र-श्रीवाचस्पतिकृतो चिन्ता-मणिप्रकाशे प्रत्यक्षपरिच्छेदः' इति पङ्क्तिर्दृश्यते।

## वटेश्वरोपाध्यायः

असौ विद्वान् पञ्चदशशताब्द्यां समुत्पन्नः यज्ञपत्योपाध्यायस्य पितामहः। अनेनापि विदुषा **'दर्पण'** नामकं विवेचनं कृतम्। इयं तत्त्वचिन्तामणेः विवेचनात्मिका टीका इदानीं नोपलभ्यते, परन्तु तत्त्वचिन्तामणिग्रन्थस्य तन्निहितसिद्धान्तानामुल्लेखदर्शनादसावपि तत्त्वचिन्तामणिग्रन्थस्य टीकाकारः इति सम्भाव्यते।

## त्वन्तोपाध्यायः

अस्यापि विदुषः कुत्र देशे अस्य समुद्भवः इति नहि ज्ञायते परन्तु पूर्वापरग्रन्थेषु एतत् प्रदर्शिततत्त्वानामवलोकनेनेदं निर्णीयते यदनेनापि विदुषा चतुर्दशशताब्द्याम्। तत्त्वचिन्तामणिग्रन्थमवलम्ब्य काचन विवृतिर्विरचिता इति। यथा पद्मनाभमिश्रो व्याप्ति-सिद्धान्तलक्षणस्य व्याख्यानावसरे इत्थमुक्तम्- तथापि- **'वह्निघटोभयवानसौ धूमादित्य-त्रातिव्याप्तिं वारयितुं यदवच्छिन्नाधिकरणत्वावच्छेदेन साध्यसामानाधिकरण्य-स्यावश्यकं वक्तव्यन्तथा पूर्वप्रतीकवैयर्थ्यस्य त्वन्तमते दूषणत्वादिति विचार-सङ्क्षेपः'**[1] इत्येवमुपलभ्यते। अथ च बङ्गदेशे शब्दत्वन्तनामकः कश्चन हस्तलिखितकोषोऽपि उपलभ्यते। आभिः युक्तिभिः त्वन्तोपाध्यायश्चिन्तामणेः शब्दखण्डस्य च विवेचयिता इति बुध्यते। अथ च कृष्णदाससार्वभौमनामकः षोडशशताब्द्युत्तरभागे विद्यमानो बङ्गस्थः स्वकीयां प्रसारणीसंज्ञकां प्रत्यक्षालोकव्याख्यायामित्थमुक्तवान्- **'अत्र त्वन्तोपाध्यायानन्वनुमानं प्रवर्तकं वा परिशेषानुमानविशेषणीभूतफलत्वसाधकं वा इति दूषणमाहु इति।'**[2] अनेन त्वन्तोपाध्यायत्त्वचिन्तामणिग्रन्थप्रकरणीभूतस्य मङ्गलवादस्य व्याख्याता आसीदिति

---

[1] उद्धृतं 'हिस्ट्री ऑफ नव्यन्याय इन मिथिला', पृ0 128

[2] तदेव।

बोध्यते। असावेव विद्वान् न्याय-कुसुमाञ्जलिग्रन्थव्याख्यानस्य मकरन्दस्यापि रचयिता आसीत्। इदं जयदेवमिश्रविरचिते आलोके विद्यते। अनेन ज्ञायते यत् त्वन्तोपाध्यायो जयदेवादपि प्राचीनः। अत एव निश्चीयते यदसौ चतुर्दशशतकीयः।

इत्थं प्रकारेण शतद्वयवर्षपर्यन्तं मिथिला न्यायविद्यायाः केन्द्रभूता आसीत्। अतः परं पञ्चदशशताब्द्यां बङ्गदेशे संस्कृतविद्यापीठस्य स्थापनाभूत् ततः परं षोडशतम सप्तदशशताब्द्यात्मकः कालो नव्यन्यायस्य बङ्गदेशे स्वर्णात्मकः काल आसीत्। एतस्मिन् काले तत्रत्यैः विद्वद्वरेण्यैः विशिष्टग्रन्थानां निर्माणं विधाय। नवद्वीपन्यायस्य प्रधानपीठोऽभवत्। तत्कालीन-विदुषां परिचयविषये किञ्चिदुल्लिख्यते।

## वासुदेवसार्वभौमः

अस्य समयः षोडशतमशताब्द्याः प्रथमो भागः। एतत् शिक्षिता बहवो विद्वांसः न्यायशास्त्रे लब्धप्रतिष्ठा आसन्।

## रघुनाथशिरोमणिः

षोडशशताब्द्यां समुत्पन्नो बङ्गदेशे। एतद् सदृशः कश्चन तार्किक अद्यावधि न बभूवः। एतद्विलक्षणं पाण्डित्यमवलोक्य तत्कालीन विद्वद्भिः शिरोमणिपदेनालङ्कृतः। एतद्विरचिता तत्त्वचिन्तामणिग्रन्थस्य विवरणात्मिका **'दीधिति'** नाम्नी विवेचनी टीका प्रसिद्धा अस्ति। अनेन दीधितिग्रन्थेनास्य विलक्षणं पाण्डित्यमासीदिति सर्वैरेवानुभूयते।

## मथुरानाथः

षोडशशताब्द्यां बङ्गदेशे एवासौ विद्वान् जन्म अलभत्। मथुरानाथतर्कवागीशः रघुनाथशिरोमणिशिष्यमध्ये श्रेष्ठतमः आसन्। अनेन विदुषा आलोकं चिन्तामणिं दीधितिञ्च आश्रित्यगूढार्थप्रकाशिनीरहस्यनाम्नी टीका विरचिता।

## जगदीशभट्टाचार्यः

भट्टाचार्यस्य जन्म सप्तदशशताब्द्यां नवद्वीपे एवाभवत्। अनेन विदुषा दीधितिमाश्रित्य विशदा प्रामाणिकी टीका विरचिता। या विद्वत्समाजे **'जागदीशी'** इति नाम्ना ख्याताऽस्ति। एवं पदशक्तिमवलम्ब्य शब्दशक्तिकाशिकानामको मूलग्रन्थोऽपि व्यरचयत्। यस्य ग्रन्थस्य कृते इत्थं सूक्तिः प्रचलमाना विद्यते। जगदीशस्य सर्वस्वं शब्दशक्तिप्रकाशिका।

## गदाधरभट्टाचार्यः

गदाधरभट्टाचार्याणां जन्म सप्तदशशताब्द्यां बङ्गदेशे एव अभवत्। अनेन तत्त्वचिन्तामणिग्रन्थस्य दीधिति व्याख्यामवलम्ब्य विशदा विवृत्ति नामिका व्याख्या विरचिता। या **'गादाधरी'** संज्ञया सुप्रसिद्धा अस्ति। एतदतिरिक्तं व्युत्पत्तिवादः, शक्तिवादो नञ्वादादिनाम्ना प्रसिद्धाः चतुःषष्ठीवादा अपि विरचिताः।

## (ख) भारतीयदर्शने प्रमाणमीमांसायाः महत्वम्

सर्वेष्वेव दर्शनेषु मानमेययोः विषये मतद्वयं दृश्यते। तत्र 'मानाधीना मेयसिद्धः' इत्येकः पक्षः। अपरश्च पक्षः 'मेयाधीना मानसिद्धिः। तत्र प्रथमपक्षस्यायमाशयः, यो हि अर्थः प्रमाणेनावगम्यते सः एवास्तित्वेन स्वीकर्तुं योग्यः। यस्मिन्श्च पक्षे प्रमाणं न विद्यते, सोऽर्थः, काम्यमानोऽपि स्वीकर्तुं न शक्यते। यत्र च प्रमाणेन संसिद्धः अर्थः, सोऽर्थः अकामयमानोऽपि हठात् स्वीकार्यो भवति।

अत एव सर्वैः अभिलषमाणमपि मृत्युभयादिविवर्जितं सर्वं सर्वविधसौविध्यसम्पन्नं जीवनं प्रमाणागोचरतया नहि उपगम्यते। मृत्युश्च सर्वैः अनभिलषितोऽपि प्रमाणसिद्धतया तस्यापरिहार्यतां सर्वे अभ्युपगच्छन्ति। अतः प्रमाणसिद्धाः अर्थाः एवाभ्युपगमविषयाभवन्ति। नतु प्रमाणबलेनासिद्धा विषया अभ्युपगता भवन्ति।

मेयाधीना मानसिद्धिः इति द्वितीयपक्षस्यायमाशयः। यत् प्रमाणसत्वं प्रमेयसत्तायाः उपजीवकम् अर्थात् यद्यद्वस्तु विद्यते व्यवहार पदवीमारोहति, तत् परिधीत्येव प्रमाणानि परिकल्प्यन्ते। नहि पुनः प्रकारान्तरसिद्धानि प्रमाणानि नूतनस्य प्रमेयस्य प्रतिष्ठापनाय समर्थाः भवन्ति। एतद्पक्षे प्रमाणस्य प्रमेय सापेक्षतया नहि तद् बलेन किमपि अपूर्वं तत्वं साधयितुं शक्यम्।

तत्र 'मानाधीना मेयसिद्धिः' इति बौद्धातिरिक्तानां समस्तदर्शनानां समानाभ्युपगमः। बौद्धानाञ्च 'मेयाधीना मानसिद्धिः इत्यभ्युगमः। ते हि प्रमाणानामसाङ्कर्यलक्षणां प्रमाणव्यवस्था-मभ्युपगच्छन्ति। तेषां मते एकस्य प्रमाणस्य विषये नहि प्रमाणान्तरं प्रवर्तते, अयमभिप्रायः। यत् यदि नाम प्रमाणानि सङ्कीर्णानि भवन्ति तदा तानि प्रमाणपदव्यवहार्याणि न भवन्ति। यतोहि अगृहीतार्थबोधनमेव प्रमाणस्य प्रयोजनम्।

एकेन च प्रमाणेन गृहीतं गोचरं यन्नागृहीतं ज्ञापयतीति प्रमाणकृत्याकारित्वेन कथं प्रमाणतां भजेत्। एतेनेदमेव सिद्ध्यति यत् ग्राह्यस्य भेद एव प्रमाणभेदस्य कारणं अतः प्रमाणव्यवस्था प्रमेयाधीना।

इत्थं प्रकारेण बौद्धदर्शने वस्तूनां सामान्यविशेषत्वात् द्विरूपमात्रत्वेन असाङ्कर्य न तदुभयग्राहि, प्रत्यक्षानुमानरूपं प्रमाणद्वयमेवाभ्युपगतम्। तेषामयमाशयो यदि सामान्य-विशेषालिङ्गितं सामान्यविशेषात्मकं वा किमपि वस्तु स्यात्, तदा तदुभयग्राहके प्रमाणे तस्मिन् वस्तूनि नूनं प्रवर्तेयातां सामान्यमात्रग्राहिणा विशेषमात्रग्राहिणा प्रमाणेन तस्य वस्तुनः साकल्येन ग्रहणं, न सम्भवति। किञ्च एतादृशं किमपि वस्त्वनुभवपथं, व्यवहारपथं वा नारोहति। किन्तु केवलं सामान्यं केवलो विशेष एव च ताम आरोहितः। अतो विशेषग्रहणाय प्रत्यक्षं, सामान्य ग्रहणायानुमानं प्रमाणत्वेन स्वीकार्यं भवति। प्रत्यक्षेण सामान्यानुमानेन विशेषस्य च ग्रहणायोगात्।

मतमिदं प्रमाणं नञ् तत्वालोकालङ्कारस्य स्याद्वावादरत्नाकरसंज्ञके टीकाग्रन्थे उपन्यास-पुरस्सरं खण्डितम्। अत्राह सौगतः-

**प्रत्यक्षञ्च परोक्षञ्च द्वित्वमेवं न युज्यते।**
**प्रत्यक्षमनुमानं चेत्येतत्तु घटतेतराम्॥**

अस्यायमाशयो यस्मात् कारणात् स्वलक्षणसामान्यप्रमेयद्वैविध्यात् प्रमाणद्वैविध्यं यत्प्रतिपादितं तदुचित्तं न प्रतिभाति। तथाविधप्रमेयद्वैविध्यस्य प्रतिपादयितुमशक्यत्वात्। यदि च प्रमेयद्वित्वं स्वीक्रियते तथापि तत्प्रमाणद्वित्वस्य ज्ञातमज्ञातं वा ज्ञापकं भवेत्। यदि चाज्ञातं ज्ञापकं भवति तर्हि सर्वत्र सामान्यतः सर्वेषामेव सामान्यरूपेण तद्बोधसम्भवात् विप्रतिपत्तिर्न स्यात्। ज्ञातं चेत् कस्माद् तस्य ज्ञानं प्रत्यक्षादनुमानाद्वा, तत्र न हि तावत् प्रत्यक्षात् द्वित्वं ज्ञातम्। तेन सामान्यस्याज्ञानम्। ग्रहणे च तस्य सविकल्पकप्रसङ्गो विषयसङ्करश्च प्रमाणद्वित्व-प्रतिबन्धकौ भवन्मते आपद्येताम्, न वा अनुमानाद्बोधः। तेन स्वलक्षणस्याग्रहणात्।

इत्थं प्रकारेण मेयाधीना मानसिद्धिरिति सिद्धान्तः सर्वसम्मतो भवितुं नार्हति इति।

युक्तिप्रधानशास्त्रेषु श्रेष्ठतमं न्यायशास्त्रमपि 'मानाधीना मेयसिद्धिः' इति पक्षं न समर्थयति। नैयायिकानां 'मानाधीना मेयसिद्धिः' एष एव पक्षः अभिमतो विद्यते। न्यायशास्त्रीयग्रन्थेषु 'मानाधीना मेयसिद्धिः' इति सिद्धान्तस्यैव उपवर्णितत्वात्। तथाहि न्यायभाष्यकारेण वात्स्यायनेन महर्षिणा न्यायदर्शनस्य प्रथमसूत्रस्थावतरण भाष्ये सुस्पष्टतया-इदमुक्तं "प्रमाणान्तरेण नार्थप्रतिपत्तिः, नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यं, प्रमाणेन खल्वयं ज्ञातार्थमुपलभ्य तमर्थमभीप्सति जिहासति वा।"[1]

प्रमाणमन्तरा प्रमेयव्यवस्था कथमपि भवितुं नार्हति। अतः प्रमाणसत्तैव प्रमेयसत्तायाः व्यवस्था नियामिका। इत्येवं न्यायशास्त्रप्रणेतुः महर्षिगौतमस्यापि अभिमतम्। अतेव महर्षिणा न्यायदर्शनस्य प्रथमसूत्रे प्रमाणस्यैव प्राधान्येन निरूपणं कृतम्- "प्रमाणप्रमेयसंशय-प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्व-ज्ञानान्निःश्रेयसाधिगमः।"

एष एव पक्षः नव्यन्यायशास्त्रप्रणेतुः गङ्गेशोपाध्यायस्याप्यभिमत इति तद्वाक्येनैव सूचितं भवति। अतएवोक्तं- "अथ जगदेव दुःखपङ्कनिमग्नमुदिधीर्षुः अष्टादशविद्यास्थाने स्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय। तत्र प्रेक्षावत् प्रवृत्यर्थं प्रमाणादीनां तत्वज्ञानां निःश्रेयसाधिगमः।"[2] इत्यादावसूत्रयत्। "तेऽपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्वमत्र विविच्यते।"[3]

अत्र सर्वेषां व्यवस्थितिः प्रमाणधीनैव भवतीति उपाध्यायेन सुस्पष्टमभिहितम्।

प्रमाणेन विगतार्थः स्वभावतः स्वीकार्य एव भवति। प्रमाणसिद्धस्यापलापः केनापि कर्तुं न शक्यते। एष सिद्धान्त व्युत्पत्तिवादात्सुस्पष्टतयाऽभ्युपगतः। तथाहि व्युत्पत्तिवादादौ

---

[1] वा०न्या०भा०, प्र०सू०
[2] प्रामाण्यवाद- प्र०वि०
[3] प्रामाण्यवाद- प्र०वि०

ग्रन्थे 'राज्ञः पुरुषः'[1] इति वाक्यजन्यवाक्यार्थबोधे स्वत्वं संसर्गविधया भासते प्रकार विधया वा भासते इति विचारावसरे गदाधरभट्टाचार्येण इत्थं प्रकारेण विवेचना कृता। ''यत्तु 'राज्ञः पुरुषः' इत्यादौ राजस्वत्ववान् पुरुषः इत्याद्यन्वयबोधोपगमे राजकीयं स्वत्वं राजस्वत्ववान् पुरुषः इत्याकारकद्विविधानुमितेरेव तदतिरिक्ताविषयकत्वेन तादृशानुमितिं प्रति प्रत्येकं तादृशवाक्यघटितसामग्र्याः प्रतिबन्धकत्वद्वयम्।

अस्मन्मते च तादृशानुमित्योः तथाविधवाक्यजन्याद् राजकीयः पुरुषः इत्येतादृश-बोधादतिरिक्तविषयकतया तत्र तादृशसामग्र्याः प्रतिबन्धकत्वकल्पनं नास्ति तथाविधानुमिति-तथाविधशाब्दसामग्र्यश्च सत्यरनुमितेरेवोत्पत्तेः। अपितु 'राजकीयः पुरुषः' इत्याकारकस्वत्व-संसर्गकैकविधानुमितिं प्रत्येव तादृशसामग्र्याः प्रतिबन्धकत्वमेकं कल्पनीयमिति लाघवम्; तदप्यकिञ्चित्करम्। भवद्भिर्यत्र यादृशानुमितिः स्वीक्रियते अस्माभिरपि तत्र तादृशनुमितेः स्वीकरणीयतया अनुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्वसाम्यात्। उपदर्शितस्थले भवद्भिः अनुमितिः स्वीक्रियते अस्माभिरपि स्वीक्रियते इति कुतः प्रतिबन्धकताद्वयकल्पनम्।''[2]

अस्य ग्रन्थस्यायमाशयो भवद्भिर्यत्र यादृशानुमितिः स्वीक्रियते तत्र तादृशानुमिति-स्वीकरणीयतया इत्येतद्भागमाश्रित्य तत्वालोके इत्थं विचारितम्। ''अथ बुभुत्सिते ह्येकस्मिन्नर्थे विजातीयानुभवसामग्र्याः सन्निपाते कस्मिंश्चिदप्यनुभवे जायमाने बुभुत्सितार्थावगति-साकल्यसम्पत्तेः पुनरवगतेरसम्पाद्यत्वमिति। तत्र यत् सामग्र्या लघुत्वं तस्या एव फलजनकत्वं बुभुत्सितयोरर्थयोर्विजातीयानुभवसामग्र्योः सन्निपाते कथाप्येकयैवार्थगत्या भवितव्यं जातिसाङ्कर्य-ज्ञानयौगपद्ययोरनुभ्युपगमादिति बुभुत्सितार्थावगतिसाकल्यासम्पत्तेः पुरवगतिः सम्पादनीया, सा च सामग्र्यधीना तत्र गुरुसामग्री सम्पादनापेक्षया लघुसामग्रीसम्पादनं युक्तमिति। यत्सामग्र्याः गुरुत्वं तस्या एव प्रथमतः फलजनकत्वमनुभवसिद्धं तथा चान्वयव्यतिरेकसहचारग्रहतर्कादि-सम्पाद्य व्याप्तिग्रहाद्यपेक्षानुमितिसामग्रीतः शाब्दसामग्र्याः शाब्दसामग्रीतश्च प्रत्यक्षसामग्र्याः

---

[1] व्युत्पत्तिवादः, प्र0का0- राज्ञः पुरुषः
[2] व्युत्पत्तिवादः, प्र0का0- राज्ञः पुरुषः

लघुभूतायाः अनतिरिक्तविषयिकायामनुमितौ शाब्दमतौ च प्रतिबन्धकत्वं विभिन्नविषयके शाब्दबोधे चानुमितिसामग्र्याः तादृशे प्रत्यक्षे च शाब्दसामग्र्याः प्रतिबन्धकत्वं क्लृप्तं तदनुसृत्यैवानतिरिक्तविषयकत्वमनुमितिद्वयस्य प्रतिबध्यप्रयोजकं प्रदर्श्य संसर्गतावादिना प्रतिबन्धकत्वद्वयोपादानं कृतम्।

नहि अस्माकमनुमितिद्वयस्य प्रतिबध्यत्वमवलम्ब्य तदुद्भावितं स्वमते च प्रतिबध्यता-प्रयोजकस्यानतिरिक्तविषयकत्वस्यानुमितिद्वये विरहात्, तयोः तत्र स्वीकारेण प्रतिबन्धकताद्वय-वारणञ्च कृतम्। एवं सति संसर्गतावादिनामनुमितिद्वयस्वीकारः प्रतिबद्धत्वप्रयोजकानतिरिक्त-विषयकत्वविरहनिबन्धनो नाकस्मिकः, प्रकारतावादिनान्तु प्रतिबध्यत्वप्रयोजकस्यानुमितिद्वये सत्वात् तत्स्वीकारो निर्युक्तिक इति, भवद्भिः यत्र इत्याद्युक्तिरसङ्गतेति चेदुच्यते।

नहि अनतिरिक्तविषयकत्वं प्रतिबध्यताया अवच्छेदकत्वप्रयोजकं, इच्छोत्तेजक-त्वानुरोधेन तथापि तस्यानङ्गीकारात्, अन्यथा प्रतिबन्धकताद्वयापादानमेव सङ्गतं स्यात्, किन्तु अनुत्पाद्यत्वनियततया गृहीतं सदेव प्रयोजकम्, तत्किमनुत्पत्यापराद्धं यस्याः प्रयोजकत्वं न स्वीकरणीयम्, सा चानुत्पत्तिश्चेद्भवद्भिः राज्ञः पुरुषः इत्यादि शाब्दसामग्रीकालेऽनुमितिसामग्री-सत्वे राजकीयः पुरुषः इत्यनुमितावेव प्रमाणतः परिच्छिन्ना, न राजकीयं स्वत्वं राजकीयस्वत्ववान् पुरुषः इत्यनुमित्योः, ताम् तथैवाङ्गीकुर्मो वयं तत्परीक्षाया निष्प्रयोजनत्वात्, परीक्षा सहस्रेनापि प्रामाणिकस्यार्थस्यान्यथा कर्तुमशक्यत्वाच्च, तथा चास्माकमपि राजत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताशाल्यनुमितित्वावच्छिन्ना एकैव प्रतिबध्यता, तन्निरूपितप्रतिबन्धकता चेति नाधिक्यं प्रतिबन्धकत्वस्य''[1] एतद्संदर्भे परीक्षासहस्रेणापि प्रामाणिकस्यार्थस्यान्यथा कर्तुमशक्यत्वादिति कथनेन स्पष्टमेवोद्घोषितं भवति। यत् प्रमाण-सिद्धः अर्थः भवति सोऽर्थः अकाम्योऽपि अवश्यं स्वीकृतपदं लभते, फलत्वेन प्रमेयस्य व्यवस्थितेः। सर्वेषामेव प्रमेयाणां प्रमाणाधीनत्वं स्वतः सिद्ध्यति।

---

[1] व्युत्पत्तिवादः, गूढार्थतत्वालोकः

न्यायशास्त्रस्याऽचार्यपदं लब्धवता उदयनेनापि न्यायकुसुमाञ्जलेः पञ्चमस्तवके "हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा" इति वाक्येन मानाधीनत्वमेव मेयस्य भवतीति समर्थितम्। अत्रेदं विचार्यते यत्यथा मानाधीना मेयसिद्धिरित्यस्य प्रतिपादनं प्रामाणिकेषु न्यायग्रन्थेष्वपलभ्यते तथैव न्यायशास्त्रीयग्रन्थेषु मेयाधीना मेयसिद्धिरपि दृश्यते। यथा न्यायकुसुमाञ्जलिप्रकाशकर्त्रा श्रीवर्धमानोपाध्यायेन न्यायकुसुमाञ्जलिप्रकाशे अतीन्द्रियार्थसम्बद्धचार्वाकविचारचर्चां कुर्वता, तत्पक्षेण प्रथमस्तवकप्रारम्भभागे इत्थं प्रतिपादितं "सामान्यलक्षणाप्रत्यासत्यजन्ययोग्यधर्माजन्य-जन्यस्वविषयकसविकल्पकाजन्यजन्यसाक्षात्कारविषयत्वं प्रमेयत्वव्यापकम्"[1] इति।

अस्यायमाशयो यत्किमपि प्रमेयं बुद्धिमारोहति तत्सर्वं विशिष्टप्रत्यक्षगोचरमेव। यदि किमपि परिकृत् तादृश प्रत्यक्षपरिधिर्भवेत् तदा स्वसत्तानुरोधेन प्रत्यक्षातिरिक्तं प्रमाणं साधयेत्। परं नास्ति तथाविधं किञ्चिदिति न प्रत्यक्षतोऽतिरिक्तं प्रमाणं सेद्धुमर्हति। अनेन कथनेन मानसिद्धेः मेयाधीनत्वं स्फुटं बोधितं भवति। एवं तृतीयस्तवके आचार्योदयनेन उपमानाप्रामाण्यवादिनां मतमित्थं प्रतिपादितम्-

"न तावदस्य विषयः सादृश्य व्यपदेश्यं पदार्थान्तरमेव सम्भावनीयं नहि भावाभावाभ्यामन्यः प्रकारः सम्भावनीयः, परस्परविधिनिषेधरूपत्वात्, न भाव इति निषेध-मात्रेणैव अभावविधिः, ततः तं विहाय कथं स्वावच्छेदेनैव स हृदयो निषेधे नाभाव इति। एवं नाभाव इति निषेध एव भावविधिः ततस्तं विहाय एव वाचयित्वानुन्मत्तः। कथं पुनर्निषेधत्र भावयिति। अतः एवं भूतानामेकतयापि अशक्यप्रतिपत्तिः प्रतिषेधविध्योरेकत्रासम्भवात् तस्माद् भावाभावावेव तत्वम्। भावत्वेऽपि गुणवान् निर्गुणं वेति द्वयमेव पूर्ववत्। पूर्वं द्रव्यमेवोत्तरं चासृतमनासृतं वेति द्वयमेव पूर्ववत् तत्रोत्तरं समवाय एव, अनवस्थाभयात्। आश्रितं तु सामान्यवन्निःसामान्यञ्चेति द्वयमेव पूर्ववत्। तत्र प्रथममपि स्पन्दोस्पन्दो इति द्वयमेव एतच्च यथासंख्यं कर्म गुण इति व्यपदिष्यते। निःसामान्यं निर्गुणमाश्रितं तु एकाश्रितमनेकाश्रितं वेति प्रागिवद्वयमेव। एतदपि यथासंख्यं विशेषः सामान्यञ्चेत्यभिधीयते। तदेतत्सादृश्यमेतत्वेक-

---

[1] व्या०कु०, तृ०स्त०, प्रकाश

विधामासादयन्नातिरिच्यते। अनासादयन्न पदार्थीभूय स्थातुमुत्सहते ततोऽभावेन सः सप्तैव पदार्थ इति नियमः। अतो नोपमानविधार्थान्तरम्।"[1] इति।

अनेन प्रगट्टकेन स्पष्टोयमर्थो यन्नमानव्यवस्था मेयाधीनैव। यस्मात् कारणात् यदि सादृश्यं पदार्थान्तरमभावः स्यात् तदाऽवश्यमेव स्वग्राहिविलक्षणं प्रमाणमुपमानसंज्ञकं व्यवस्थापयिष्यत्। नास्ति सादृश्यं क्लृप्तप्रमाणपरिच्छेदानर्हम्, पदार्थान्तरमिति न तद्बलेनोपमानं प्रमाणान्तरं साधयितुं शक्यते।

इत्थं प्रकारेण 'मेयाधीना मानसिद्धिः' इति पक्षस्यापि बहुषु ग्रन्थेषु प्रतिपादनदर्शनात् कथमत्र एकान्ततः 'मानाधीना मेयसिद्धिः' अस्य सिद्धान्तत्वेन कथं प्रतिपादनं कर्तुं शक्यते।

अत्रोच्यते ये सन्दर्भाः मानसिद्धेः मेयाधीनत्वपक्षस्यानुकूलत्वेन प्रदर्शिताः, ते नहि वस्तुतः तथाभूताः। आपाततः ते तथात्वेन प्रतिभासमानोऽपि तात्पर्यतः मेयसिद्धेः मानाधीनत्व-पक्षस्यैव साधकाः सन्ति। यथा कुसुमाञ्जलिप्रकाशे वर्धमानेनोक्तं यत् प्रमेयत्वं प्रत्यक्षगोचरत्व-नियतं, प्रत्यक्षागोरचरं यदि किमपि प्रमेयं स्यात्। तदा तदनुरोधेन प्रमाणान्तरं कल्पितमभविष्यत्। इत्थमेवोदयणाचार्येण उपमानस्याप्रामाण्यवादिपक्षमुपपादयता यदुक्तं यदभ्युपगतप्रमाणापरिच्छेद्यं सादृश्यनामकं पदार्थान्तरं यदि स्यात् तदा तद्ग्राहकत्वेनोपमानस्य प्रमाणान्तरत्वं स्वीक्रियेत; परन्तु नास्ति तादृशमित्युपमानसंज्ञकं प्रमाणान्तरकल्पनं व्यर्थमेव। स्वमतेनोपमानस्य प्रामाण्यं स्थापयता च तेन प्रत्यक्षादिभिः प्रमाणैः अगोचरस्य शब्दार्थ-सम्बन्धस्य ग्राहकत्वेनोपमानसंज्ञकं प्रमाणान्तरमभ्युगतं स्यात्। अनयोः सम्बन्धयोः तात्पर्यस्य सूक्ष्मदृष्ट्याऽन्वेषणेनेदमेव ज्ञायते यत् कस्यापि प्रमेयस्यास्तित्वाभ्युपगमः तदैव कर्तुं शक्यते यदि तत्केनचित् प्रमाणेन परिगृहीतं स्यात्। यदि नाम माननिरपेक्षापि मेयसिद्धिः स्यात् तदा किमिव वर्धमानेन आचार्येण व प्रत्यक्षादिक्लृप्तप्रमाणैः अग्राह्यस्य पदार्थस्य ग्राहकत्वेन प्रमाणान्तरस्वीकारस्यानुरोधः क्रियेत।

---

[1] न्यायकु०, तृ०स्त०

अत उक्तं प्रकारका ग्रन्थसन्दर्भा अपि वस्तुत मेयसिद्धेः मानाधीनत्वपक्षस्यैवानुकूला भवन्ति नतु मेयाधीना मानसिद्धिरिति मतानुकूला। अतः 'मानाधीना मेयसिद्धिः' एष पक्ष एव न्यायाभिमत इति स्वीकरणीयः। अतएव जयन्तभट्टेनापि न्यायमञ्जर्यामित्यमवोचत्। अदृष्टे तु स्वर्गाऽपवर्गभिन्ने नैसर्गिकमोहान्धतमसो विलुप्ता लोकस्य, लोकस्य शास्त्रमेव प्रकाशस्तदेव सफलसदुपायदर्शने "दिव्यं चक्षुरस्मदादेः"[1]। अत्र शास्त्रप्रमाणबलेन स्वर्गादेरस्तित्वं स्थापयता जयन्तभट्टेन मेयसिद्धेर्मानाधीनत्वं सुस्पष्टतया उद्भावितम् इति।

[1] न्यायमञ्जरी- जयन्तभट्ट

## ( ग ) प्रमाणस्वरूपं तद्विभागश्च

वादिप्रतिवादिशास्त्रचर्चावसरे पक्षप्रतिपक्षयोर्मध्ये किं श्रेय इति विनिश्चयार्थं तत्र प्रमाणमपेक्ष्यते। अयं पक्षः श्रेयान् अत्र किं प्रमाणम्, अयं पक्षश्च हेयोऽत्र-

किं मानमिति वचनेन प्रमाणमण्डनं सुतरां सिद्ध्यति। अतो दार्शनिकेषु आस्तिको वा भवतु नास्तिको वा, सर्वत्र स्वाभिमतविषयप्रतिपादनपूर्वकं प्रथमं तत्र प्रमाणमुपस्थाप्यते। 'मानाधीना मेयसिद्धिः' इति सर्वाभ्युपगतः सिद्धान्तः।

वादिप्रतिपादिनौ स्वाभिमताभिप्रायं प्रमाणमुपादाय तस्य फलं प्रतिपादयतः। सर्वैरपि दार्शनिकैः प्रमाण-प्रमेय-प्रमातृ-प्रमाऽप्रमादिविषयानवलम्ब्य एव कश्चनविचारः प्रस्तूयते। प्रमाणशब्दस्तावत् प्रोपसर्गपूर्वक-माधातोर्ल्युट्प्रत्यये सति निष्पद्यते तदर्थः प्रमाकरणमिति। प्रमितिः प्रमाणमिति भावव्युत्पत्तिरपि कैश्चित् प्रतिपाद्यते।

**प्रमाणनिरूपणम्**

दर्शनानि जीवनं जगच्च व्याचक्षते, ज्ञानमीमांसा च ज्ञानम्। प्रथमं तावदत्रेदं ज्ञेयं भवति यत् कानि कानि ह्यस्माकं ज्ञानसाधनानि? कांस्कान् विषयानवबोद्धुं वयं पारयामः?

ज्ञानमीमांसामाधारीकृत्यैव पाश्चात्यदार्शनिकः काण्टमहोदयो जगाद तत्त्वमज्ञेयमिति। एतेन ज्ञायते यद् दर्शनस्य ज्ञानमीमांसया सह घनिष्ठः सम्बन्धो वर्तते। अर्थाद् दर्शनं ज्ञानमीमांसामाधृत्यैव सन्तिष्ठते। ततश्च प्रत्येकदार्शनिकस्य कृते इदं स्पष्टं यत् स दार्शनिकविषयविवेचनात्प्राग् ज्ञानमीमांसामेवाधिगच्छेत्। अत्रेदं विचिन्त्य यद् ज्ञानमीमांसा प्रमाणमीमांसा चैका एव, यतो हि ज्ञायतेऽनेनेति ज्ञानमिति करणव्युत्पत्त्या ज्ञानसाधनं ज्ञानं तस्य मीमांसा ज्ञानमीमांसा, सा च प्रमाणमीमांसैव भवति। ज्ञानोत्पत्तिसम्बन्धाद् ज्ञानमीमांसायां प्रमाणमीमांसायाश्चर्चा स्वाभाविकी एव भवति।

कथनस्यायमाशयो यत् सकलमपि दार्शनिकं विवेचनं ज्ञानप्रमाणोभयमीमांसाया विचारपूर्वकमेवारभ्यते, यतः प्रमाणमीमांसादर्शनस्य साऽऽधारशिला अस्ति यस्यां भव्यं दर्शनभवनं चिरकालमवतिष्ठते। समेषां दार्शनिकानां चरमोद्देश्यमात्यन्तिकदुःखनिवृत्तिः, तच्च तत्त्वज्ञानमन्तरा न सम्भवति। तत्त्वज्ञानं तत्त्वमीमांसाश्रितम्। वस्तुमात्रस्य यथार्थानुभवः प्रमाणज्ञानाधीनः प्रमाणमन्तरेण कस्यापि वस्तुनो यथार्थज्ञानं न भवितुमर्हति। अत एवोक्तम्- 'प्रमेयसिद्धिः प्रमाणाद्धि।' प्रमाणसिद्धमेव वस्तुजातं सिद्धान्तो वा कस्यचित्प्रेक्षावत्पुरुषस्य प्रवृत्तये भवति। प्रमाणद्वारेणैव भाष्यकाराः स्वपक्षमण्डनं परपक्षखण्डनञ्च कुर्वन्ति। सर्वेऽपि पाश्चात्त्याः प्राच्या वा दार्शनिकाः प्रमाणानां सत्तामभ्युपगच्छन्ति।

यद्यपि वैदिकदर्शनेषु प्रमाणमीमांसाया महत्त्वमारम्भत एव विद्यते, तथापि तस्यास्तत्त्वमीमांसया साकं किमपि गौरवातिशयं स्थानं प्रदातुं यशो न्यायदर्शनेनैवासादितं, यस्य विकासक्रमः प्रायो द्विसहस्रसंवत्सरात्मकोऽस्ति। तत्र विकासस्य क्रमद्वयं दृश्यते। प्रथमविकासक्रमस्यारम्भ आचार्यगौतमाज्जायते, अत्र प्रमेयपदार्थानां बाहुल्येन प्रतिपादनमस्ति। अत इयं पद्धतिः पदार्थमीमांसात्मकपद्धतिरित्यभिधीयते। अपरक्रमस्यारम्भो गङ्गेशोपाध्याया- ज्जातः। अस्यां पद्धतौ प्रमाणानां विस्तृता चर्चा दरीदृश्यतेऽत इयं प्रमाणमीमांसात्मक- पद्धतिरिति वक्तुं शक्यते। प्रथमा पद्धतिः 'प्राचीनन्यायः' इति, अपरा पद्धतिः 'नव्यन्यायः' इति च नाम्ना लोके व्यपदिश्यते। उभयोः प्रतिपादने सत्यपि भेदे सिद्धान्तसाम्याद् उभे अपि न्यायसंज्ञया व्यवह्रियेते, न्याय इति संज्ञया एव ज्ञायेते यदस्य शास्त्रस्योद्देश्यं न्यायस्य प्रतिपादनं सत्यस्यान्वेषणं वाऽस्तीति, तदुक्तं न्यायसूत्रव्याख्यायां वात्स्यायनेन- **'प्रमाणैरर्थ- परीक्षणं न्यायः'**[1] अर्थात् प्रमाणैर्वस्तुतत्त्वस्य परीक्षणमेव न्यायशब्दार्थः। अत्रायं न्यायशब्दः प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मके परार्थानुमानभूते पञ्चावयववाक्ये अर्थविशेषे रूढो वर्तते। अस्य आन्वीक्षिकी इत्यपि संज्ञाऽस्ति। अधिगतवस्तुनः पश्चादीक्षणे प्रवृत्तत्वादेवेयं न्यायविद्या आन्वीक्षिकी इति नाम्ना निगद्यते। हेतुविद्या हेतुशास्त्रमपि न्यायस्यापरं नामेति।

---

[1] न्यायसूत्रवात्स्यायनभाष्ये- 1/1/1

प्रमेयसिद्धिसाधनभूतानां प्रमाणानां सम्यग् विवेचनमेव न्यायशास्त्रस्य परमप्रयोजनम्। अतो न्यायदर्शनं प्रामुख्येन प्रमाणशास्त्रमस्ति। प्रमाणं तावत्प्रमायाः करणं प्रमा च यथार्थ-ज्ञानमिति शास्त्रेषु प्रथितमस्ति। प्रमा प्रमितिर्यथार्थानुभवो विद्येति पर्यायाः। प्रमीयत इति प्रमा। सूत्रकारेणाचार्यगौतमेन प्रमाणप्रमेयेत्यादिसूत्रान्ते तत्त्वज्ञानान्निःश्रेयसाधिगम इति निःश्रेयसो-पायतया तत्त्वज्ञानमुपदिष्टम्। दुःखजन्मप्रवृत्तीत्यादिद्वितीयसूत्रे मिथ्याज्ञाननाशकत्वे तत्त्वज्ञानस्य प्रमात्मकत्वं प्रतिपादितम्।

वात्स्यायनेन भाष्ये **'उपलब्धिसाधनानि प्रमाणानि'** इति प्रोक्तम्। अत्रोपलब्धिपदं बुद्धिपरतया प्रमापरतया वा प्रयुक्तम्। ज्ञानस्य निर्विषयकत्वाभावादुपलब्धिपदेनार्थविषयक-ज्ञानत्वरूपप्रमात्वमेव भाष्यकृता स्वीकृतमित्युपलभ्यते। उपलब्धिहेतोः प्रमाणत्वमभ्युपगच्छता वार्तिककारेणापि प्रमाया अर्थविषयकज्ञानत्वमित्यसूचि।[1]

**प्रमाणलक्षणविचारः**

**प्रमीयतेऽनेनेति प्रमाणमिति** करणव्युत्पत्त्या प्रमाकरणतया प्रमाणपदं सिद्ध्यति, अर्थात् प्रमाता विषयस्य यथार्थज्ञानं येनाधिगच्छति तत्प्रमाणमित्युच्यते। प्रमायाः साधनं करणं वा प्रमाणं भवति, तदुक्तं वात्स्यायनेन- **उपलब्धिसाधनं प्रमाणमिति।**[2] इमामेवोक्तव्युत्पत्ति-मभिलक्ष्य प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणे कस्यापि दर्शनस्य नास्ति कोऽपि विप्रतिपत्तिः। न्यायदर्शने ज्ञानस्य प्रामाण्यं नाभ्युपेयते, प्रमीयतेऽनेनेति करणव्युत्पत्तेर्बाधात्। नयेऽस्मिन् ज्ञानसामग्र्याः प्रमाणत्वं वार्तिककारेण भरद्वाजेनोद्योतकरेणापि **उपलब्धिसाधनं प्रमाणमिति** निगदितम्।[3] वाचस्पतिमिश्रः **स्मृतिभिन्नामर्थाव्यभिचारिणीं प्रमां निरूप्य तत्साधनं प्रमाणमिति** प्रमाणलक्षणं निबबन्ध।[4] **समीचीनानुभवस्य साधनं प्रमाणमिति**

---

[1] न्यायवार्तिके, पृ0 9

[2] न्यायभाष्यम्, 182

[3] न्या0वा0भा0 9 'उपलब्धिहेतुः प्रमाणम्।'

[4] प्रमासाधनं हि प्रमाणम्, न च स्मृतिः प्रमा। लोकाधीनावधारणो हि शब्दार्थसम्बन्धः। लोकश्च संस्कारमात्रं जन्मनः। स्मृतेः स्यामुपलब्धिमर्थाव्यभिचारिणीं प्रमामाचष्टे तस्मात् तद्धेतुप्रामाण्यम्। (ता0दी0 35)

न्यायसारे भासर्वज्ञः।[1] **अविसंवादिज्ञानं प्रमाणमिति** सौगतानां प्रमाणलक्षणम्। अत्र विसंवादो वञ्चनम्। ज्ञानं तद्भिन्नेन्द्रियसन्निकर्षादेः प्रामाण्यनिवृत्तिः। बौद्धाः **सारूप्यं वा अर्थकारतां वा प्रमितिकरणमाहुः।**[2] एतन्मते **अधिगतार्थज्ञापकं ज्ञानं प्रमाणमित्युच्यते।**[3] शान्तरक्षितमते सारूप्ययोग्यताप्रमाणं विषयाधिगतिः संवित्तिश्च तत्फलमिति निगदितम्।[4] **अपूर्वमर्थं विषयीकुर्वदर्थज्ञानं प्रमाणमिति** मोक्षाकारगुप्तेन उद्घोषितम्। मीमांसादर्शने भाट्टानां प्रमाणलक्षणं प्रमाकरणत्वमेव।

**अनधिगताबाधितार्थविषयकज्ञानजनकप्रमाणमिति प्रमाणलक्षणं** भाट्टमते परिष्कृतम्। प्रभाकरोऽनुभवस्यायथार्थत्वं नाङ्गीकरोति, अतोऽ**नुभूतिः प्रमाणमिति** प्रतिपादयति। **प्रमाकरणं प्रमाणमिति** जयन्तभट्ट उदयनश्च **यथार्थानुभवं प्रमाणमाह।** वैशेषिकमते **दोषरहितं ज्ञानं तत्करणं प्रमाणमित्यभिहितम्।** एवमुभयोर्न्याय-वैशेषिकदर्शनयोः **प्रमाकरणमेव प्रमाणमित्युक्तम्।** न्यायमते ज्ञानं तत्साधनीभूतः सामग्रीविशेषश्च प्रमायाः करणं मन्यतेऽतः कारणसाकल्यमिन्द्रियार्थमनः-पदार्थप्रकाशादि-कारणसामग्री प्रमाणमित्युक्तं भवति।[5] न्यायसूत्रकार आचार्यगौतमः प्रमाणसामान्य-लक्षणप्रदर्शनार्थं न किमपि सूत्रं रचयामास, अपि तु प्रमाणशब्दनिर्वचनेनैव तत्सामान्यलक्षणसिद्धिर्भवति। एवं प्रमाणशब्दव्युत्पत्तिलब्धमेव प्रमाणलक्षणं वात्स्यायनेनापि स्वीकृतम्। विशेषसारूप्यप्रमाणं विषयाकारमर्थनिश्चयं तत्फलमिति दिङ्नागो निगदति।

यद्यपि बौद्धमते प्रमाणतत्फलयोर्मध्ये न कश्चन भेदस्तथापि ज्ञानरूपं प्रमाणं विषयाकारितामेव प्रमाणत्वमेतीति तदाशयः।

---

1 सम्यग् अनुभवसाधनं प्रमाणम्। (न्या०सा० 11)

2 प्रमा० समु०, पृ० 11

3 प्रमा० समु०, पृ० 2

4 स्ववित्तिर्वा प्रमाणन्तु सारूप्यं योग्यतापि च। (तत्त्वसंग्रह-का०)

5 न्या०वा०ता० चतुस्सूत्री।

जैनसम्प्रदाये स्वपरावभासकं ज्ञानं प्रमाणमित्युच्यते। सम्प्रदायस्यास्य विशिष्ट आचार्यः सिद्धसेनो लक्षणेऽस्मिन् वैशिष्ट्यं कुर्वन् स्वपरावभासकं बाधवर्जितञ्च ज्ञानं प्रमाणमित्युक्तवान्।[1] पुनश्च अकलङ्केनास्मिन् लक्षणे अविसंवादि अनधिगतम्, व्यवसायात्मकमिति त्रीणि विशेषणानि संयोज्य स्वस्य चार्थस्य च ग्राहकं ज्ञानं प्रमाणमित्युक्तम्।

सांख्यदर्शनानुसारेण विषयाकारान्तःकरणचित्तवृत्तिः प्रमाणम्। योगदर्शनेऽपि इदमेव लक्षणमभिमतम्।

भट्टप्रभाकरमतमवलम्ब्य मीमांसादर्शनं सम्प्रदायद्वयेन विभक्तम्। तत्र भाट्टमते अनधिगतस्य यथावस्थितस्य चार्थस्य निश्चायकज्ञानं प्रमाणम्। तदुक्तं वासुदेवदीक्षितेन- अनधिगतार्थगन्तृत्वमेव प्रमाणत्वम्।

पूर्वमीमांसासूत्रकार आचार्यजैमिनिः प्रमाणलक्षणमेवं विहितवान्- औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशः, अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वांत्।[2] अत्र लक्षणे अव्यतिरेकपदेन अबाध्यत्वम्, अनपेक्षितत्वपदेन भ्रमविप्रलिप्सादिकरणदोषराहित्यम्, अनुपलब्धमित्यनेन प्रमाणान्तराज्ञातत्वमिति विवक्षितम्। तथा च भ्रमविप्रलिप्सादिकरणदोषराहित्यम्, अनुपलब्धमित्यनेन प्रमाणान्तराज्ञातत्वमिति विवक्षितम्। तथा च **भ्रमविप्रलिप्सादिकरणदोषबाधकज्ञानरहितागृहीतग्राहिज्ञानसाधनं प्रमाणमिति निष्कृष्टं प्रमाणलक्षणम्।[3] मानमेयोदयकार आचार्यनारायणोऽज्ञाततत्त्वार्थज्ञानं प्रमा तत्करणं प्रमाणमिति** प्रमाणलक्षणं परिष्कृतवान्।

**निष्कर्षतोऽनधिगताबाधितार्थविषयकज्ञानजनकं प्रमाणमिति भाट्टसिद्धान्तः।**

प्रभाकरमते**ऽनुभूतिः प्रमाणम्।** अनुभूतिर्नाम स्वरूपपरिच्छित्तिः। अनुभूतिरनुभवः। सा चानुभूतिः पूर्वानुभूतसंस्कारमात्रजन्यात्मकस्मृतेरन्या। अतः संस्कारातिरिक्तकारणजन्यं संस्कारा-

---

[1] स्वपरावभासकं यथा प्रमाणं भुवि बुद्धिलक्षणम्। (समन्तभद्रः)

[2] मी० दर्शने 1/1/5

[3] शा०दी० 44

जन्यं यज्ज्ञानं तत्करणत्वं प्रमाणत्वमिति। परञ्च अनुभूतिमात्रस्य प्रमात्वकथनं न समीचीनम्, यतो नानाव्यक्तीनामेकविषयाया एवानुभूतेः स्वस्वभावनावशाद् भिन्नभिन्नत्वात्। ज्ञातृव्यापारस्य च प्रमाणत्वस्वीकारे ते युक्तीरुपस्थापयन्ति यदर्थप्रकाशनं ज्ञातृव्यापारायत्त-मतस्तदेव प्रमाणम्। परमिदमपि न युक्तियुक्तम्, ज्ञातृव्यापारोऽर्थप्रकाशने प्रमाणं तदा सम्भवेद् यदा स व्यापारो वस्तुनो यथार्थबोधे एककरणं स्यात्, यत्र तु वस्तुनो यथार्थबोधे कारणमसद् विपरीतज्ञान एव कारणं भवति कथं तत् तत्र प्रमाणं स्यात्?

प्रभाकरविजये नन्दीश्वरः प्रमाणलक्षणमेवमुक्तवान्- **अनुभूतिः प्रमाणम्।** अत्र स्वतन्त्र-परिच्छित्तिर्नाम अनुभूतिः प्रमाणशब्दः प्रमापर्यायः। स्वातन्त्र्यं तावद् बुद्ध्यन्तरानपेक्षत्वम्। स्मृतेस्तु पूर्वानुभूतापेक्षा अस्तीति न तस्य प्रमाणत्वम्।[1] तथा च प्रभाकरमते अनुभूतिरूप-प्रमाकरणं प्रमाणमिति फलितोऽर्थः।

वेदान्तराद्धान्ते चिद्रूपस्य ब्रह्मणः प्रकारविशेष एव ज्ञानम्। यद्यपि अद्वैतवेदान्ते आत्मतत्त्वमेव परमाभितया सद्वस्तुत्वेन स्वीकृतम्, तथापि तत्रान्येषां पदार्थानां विषयाणां वा सत्ता सर्वथा उपेक्षिता न विद्यते। सन्नपि प्रत्ययवादी स व्यावहारिकं दृश्यमानं प्रपञ्चं सर्वथा नाऽस्वीकरोति। मतेऽस्मिन् सत्तायाः प्रकारत्रयं दृश्यते- पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी च। एतासु पारमार्थिकी सत्ता श्रेष्ठा लौकिकप्रमाणाविषयीभूता च भवति। नयेऽस्मिन् व्यवहारदशायां वस्तुतत्त्वस्य व्यवहारसत्ता तथैवाभ्युपगता यथान्ये सद्वस्तु-वादिनोऽभ्युपगच्छन्ति। अत्र इयानेव विशेषो यदेकः सद्वादी दृश्यमानं प्रपञ्चं सन्निति मनुते, अपरस्तु आत्मतत्त्वातिरिक्तं सर्वमसदिति स्वीकरोति।

यद्यप्यात्मतत्त्वस्य परिज्ञानाय लौकिकप्रमाणानां न काऽप्यावश्यकता, यतः परमतत्त्वं लौकिकप्रमाणैः सर्वथा अवेद्यं विद्यते। परञ्च तत्त्वज्ञानस्य तदानीमेव पूर्णता यदा सत्तात्रयस्य सम्यग् ज्ञानं जायते। अतो व्यवहारज्ञानार्थं वेदान्तिनोऽपि लौकिकप्रमाणानि प्रतिपादयन्ति।

---

[1] प्र०वि० 24-25

अस्मिन् राद्धान्ते अनधिगतस्याबाधितं यथार्थज्ञानं प्रमा, तत्करणञ्च प्रमाणमित्युच्यते। केचित्तु प्रत्यक्षादिप्रमाजन्यज्ञानमेव प्रमाणमिति।

सामान्यतः सकलदार्शनिकमतविवेचनेनेदं सिद्ध्यति यत् **'प्रमाकरणं प्रमाणम्'** इत्येव प्रमाणलक्षणं समेषामभिप्रेतम्। तच्च प्रमाणं कुत्रचिदिन्द्रियम्, कुत्रचिदिन्द्रियसन्निकर्षः, कुत्रचिच्च ज्ञानरूपं भवति।[1]

वस्तुस्थितिरियं व्यवहारोपलब्धानां चतसृणां प्रत्यक्षानुमित्युपमितिशाब्दाख्यप्रमाणानां कारणानि विश्लेषयद्भिरस्माभिरुक्तानि त्रीण्येव तत्त्वानि कारणतया परिलक्ष्यन्ते। एतेषु त्रिषु तत्त्वेषु कदाचित् किञ्चित्कारणं कदाचिद् व्यापारः कदाचिच्च फलमवतिष्ठते। यत्र कार्यं प्रति किमपि कारणं भवति तत्र कश्चन व्यापारोऽप्यवश्यं भवति, व्यापारवदसाधारणकारणस्य करणघटकत्वात्। व्यापारस्तावत्- **तज्जन्यत्वे सति तज्जन्यजनकत्वरूपः।** तथा च यदा निर्विकल्पकज्ञानफलं तदा इन्द्रियं करणम्, इन्द्रियार्थसन्निकर्षो व्यापारः। एवं यदि सविकल्पकज्ञानं फलं तर्हि इन्द्रियार्थसन्निकर्षः करणं निर्विकल्पकज्ञानञ्च व्यापारो भवति। एवं हानोपादानबुद्धिरूपफलं प्रति निर्विकल्पकज्ञानं करणं सविकल्पकज्ञानञ्ज व्यापारो भवति। अनुमित्युपमितिशाब्दबोधस्थले व्याप्तिज्ञानसादृश्यज्ञानपदज्ञानादीनां क्रमशोऽसाधारणत्वम्। यद्यपि प्रमातृप्रमेयादीनामपि प्रमां प्रति कारणत्वमस्ति, तथापि साधकतमत्वाभावाद् व्यापारवदसाधारणकारणत्वाभावान्न तेषां प्रमाणान्तर्भावः।

## समीक्षणम्

**'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'**[2] इति गौतमसूत्रानुरोधेन प्रमाणचतुष्टय-सिद्धिः। अत्रेदं जिज्ञास्यं यन्नैयायिकैः किमर्थं चत्वार्येव प्रमाणान्यभ्युपगतानि। यथा हि मीमांसका वेदान्तिनश्च षट्प्रमाणान्यभ्युपगच्छन्ति, जैनबौद्धवैशेषिकाश्च द्वे प्रमाणे स्वीकुर्वन्ति,

---
[1] तर्कभाषा प्रत्यक्षनिरूपणप्रकरणम्।
[2] गौ०सू० 1/1/3

सांख्ययोगमते प्रमाणद्वयमभिमतम्, तथा च कथं नैयायिकानां प्रमाणचतुष्ट्यम्? न ततोऽधिकं न वा न्यूनमिति? एतज्जिज्ञासायाः समाधानार्थं कृतप्रयासस्यायमाशयः-प्रत्यक्षादिचतुःप्रमाणातिरिक्तानां प्रमाणानामेतेषु चतुर्षु अन्तर्भावात्। अथ चैतेषां प्रमाणानामन्यत्रान्तर्भावाभावाद् न्यूनाधिक्यापेक्षापरिहारः।

मीमांसकैर्वेदान्तिभिश्च अर्थापत्तेः प्रमाणान्तरत्वं स्वीकृतम्। अनुत्पद्यमानमर्थमुपलभ्य तदुपपादकार्थान्तरकल्पनमर्थापत्तिः। यथा **'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते'** इत्यत्र भोजनं विना पीनत्वमनुपपद्यमानमतस्तत्र रात्रिभोजनं कल्प्यते। इयमेवार्थापत्तिः। आशयोऽयं यद् दिवा अभुञ्जानत्वविशिष्टोऽयं देवदत्तः पीनो दृश्यतेऽतस्तत्र रात्रिभोजनं कल्प्यते। इयमेवार्थापत्तिः।

नैयायिका अर्थापत्तेः पृथक्प्रमाणत्वं निराकुर्वन्तस्तस्या अनुमानान्तर्गतत्वमेवाभ्युपगच्छन्ति। अत्र अनुत्पद्यमानोऽर्थो व्याप्यस्तदुपपादकीभूतश्चार्थो व्यापकः, अतोऽनुपपद्यमानदर्शनेन उपपादकीभूतस्यार्थस्य यज्ज्ञानम्, तद्व्याप्यज्ञानेन व्यापकज्ञानत्वादनुमानमेव। अनुमानस्याकारोऽयम्-

देवदत्तो रात्रिभोजी दिवाऽभुञ्जानत्वविशिष्टपीनत्वात्। एवमर्थापत्तेः सकलोऽपि विचारोऽनुमानेनैव गतार्थः। अतो न अर्थापत्तेः पृथक्प्रमाणत्वस्वीकारः।

एवं ज्ञानकरणाजन्यस्य अभावानुभवस्य यदसाधारणं करणं तदभावोऽनुपलब्धिर्वा प्रमाणमिति वेदान्तिन आहुः। परञ्च नैयायिकैरिन्द्रियसम्बद्धविशेषणताख्येन इन्द्रियसम्बद्धविशेष्यताख्येन वा सन्निकर्षेण प्रत्यक्षेणैवाभावस्यापि ग्रहणसम्भवे तदर्थानुपलब्धेः पृथक् प्रमाणत्वस्वीकारो नावश्यक इत्युच्यते। सम्भवस्यापि न प्रमाणान्तरत्वसम्भवोऽप्यविनाभावबलेनार्थप्रतिपादकत्वाद् अनुमानमेव। द्रोणपूरणक्षमस्याढकपूर्णक्षमत्वप्रतिपत्तिसम्भवः, सहस्रादिसंख्याविषयकस्य चैकद्वित्र्यादिसंख्याविषयत्वप्रतिपत्तिश्च कथमत्राविनाभावः? स्वल्पसमाहाररूपत्वात् प्रभूतस्य स्वल्पाभावे प्रभूतानुपपत्तेरिति।

ऐतिह्यमपि न मानान्तरं यद्यपि अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यं प्रमाणं कैश्चिदिष्टं, यथेह वटे यक्षः प्रतिवसतीति, तच्च यदवितथं तदाशब्देऽन्तर्भूतम्। यदि नाम प्रयोजनाभावा-दाप्तनिर्देशोऽत्र नास्ति नैतावतस्य शब्दरूपता निवर्तत इति। नाट्यशास्त्रप्रसिद्धसमयबलेन लोककृतसमयबलेन च पुरुषाभिप्रायविशेषमर्थविशेषञ्च प्रतिपादयन्ती चेष्टा प्रमाणमिष्यते, परञ्च सा आगमान्न भिद्यते, तल्लक्षणयोगित्वात्।

अशब्दात्मकत्वे न प्रमाणान्तरत्वे लिप्यक्षराणामपि प्रमाणान्तरत्वप्रसङ्गः, समान-न्यायत्वाद् अविनाभावित्वेन प्रयत्नादिप्रतिपादकत्वे त्वनुमानत्वं चेष्टया द्रष्टव्यमिति।

न्यायदर्शने प्रमाणेषु प्रत्यक्षं प्रधानं प्रमाणम्, तद् द्विविधम्- निर्विकलपकं सविकल्पकञ्चेति। तत्र निर्विकल्पकप्रत्यक्षे विषयोपस्थितेरिन्द्रियमन-आत्मनां संसर्गातामात्रस्य चापेक्षा भवति। इदं वस्तु सङ्केतमात्रं भवति, अत्र सम्पृक्तानां वस्तूनां क्षणिकं संवेदनमेव जायते, इदं ज्ञानं वस्तुतो भवति प्रत्यक्षम्, तस्य 'अक्षं प्रति' इति व्युत्पत्तेः। इन्द्रियविषययोः संयोगेनैव प्रत्यक्षं भवति। निर्विकल्पकं यथार्थप्रत्यक्षमिति वक्तुं शक्यम्, तस्माद्याथार्थ्यं निर्विकल्पकप्रत्यक्षम् एवास्ति। अत एव बौद्धदार्शनिको धर्मकीर्तिनिर्विकल्पकप्रत्यक्षमेव प्रामाणिकमिति वक्ति।

सविकल्पकप्रत्यक्षं न पूर्णतयाऽपरोक्षं तत्र नामजातिपूर्वकं स्मृत्यादिमाध्यमानां सहयोगस्यावश्यकत्वात्। निर्विकल्पकप्रत्यक्षमपि तत्र व्यापारो भवति, तथापि निर्विकल्पकस्य प्रत्यक्षस्योपयोगिता नास्ति व्यवहारे। तदुपयोगित्वदृशो ज्ञानस्य परिपक्वरूपत्वाच्च सविकल्पकज्ञानमेव न्यायानुसारि प्रामाणिकमित्युच्यते।

सम्प्रदायेऽस्मिन् **लौकिकप्रत्यक्षं चाक्षुष-रासन-घ्राणज-स्पार्शन-श्रावण-मानसभेदेन** षट्प्रकारकमस्ति। तत्र चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम्। एतन्मते अभावोऽपि प्रत्यक्षीक्रियते; परन्तु तत्प्रत्यक्षसापेक्षम्, यथा **'घटाभाववद्भूतलम्'** अत्र घटप्रत्यक्षसापेक्ष्यस्यैवाभावस्य प्रत्यक्षत्वात्, निरपेक्षस्य। दर्शनेऽस्मिन्ननुमानोपमानयोरपि न

केवलं सिद्धान्तदृष्ट्या, अपि तु व्यवहारदृष्ट्यापि विशिष्टमहत्त्वं दरीदृश्यते। शब्दप्रमाण-मप्यन्यतमं स्थानं बिभर्ति। तस्मादेव न्यायशास्त्रे चतुर्णां प्रमाणानां तैश्च जायमानानां चतसृणां प्रमाणाभ्युपगमे औचित्यं तार्किकदिशा निरूपितम्।

**प्रत्यक्षप्रमाणपरिशीलनम्-** अनुमानान्तरभावत्वेन यथा अर्थपत्यादीनां प्रमाणत्वं नाभ्युपेयते तथैव प्रत्यक्षप्रमाणस्यापि अनुमानेऽन्तरभावः कर्तुं शक्यते न वा इति संशयमालम्ब्य इदानीं प्रत्यक्षप्रमाणस्य परीक्षणं क्रियते। यथा पूर्वपक्षिणा स्वमुच्यते यदिन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति तदनुमानम् एव। कस्मादेकदेशग्रहणात्। उक्तञ्च न्यायसूत्रे **''प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः इति।''**[1] अस्यायमाशयः- यथाऽनुमाने एकदेशस्य साधनस्य धूमस्य ग्रहणात् साध्यस्य वह्नेः ग्रहणं भवति तथैव प्रत्यक्षस्थलेऽपि घटादिपदार्थस्य एकदेशेन पूर्वभागेनैव इन्द्रियार्थसन्निकर्षो जायते। पूर्वभागमात्रे स्व-इन्द्रियार्थसन्निकर्षस्य वर्तमानत्वात्। अपरभागे च तदभावादपरभागस्यानुमानेनैव ग्रहणम्। अतो **'वृक्षः घटः'** इत्यादिज्ञानं न हि प्रत्यक्षम् किन्तु अनुमानमेव। उभयत्र साम्यात्।

न हि अर्थान्तरभूतः कश्चिदवयवी अवयवेभ्यः अस्ति। अपितु अवयवानामेव पारमार्थिकं सत्वं भवति। घटो नाम परमाणुपुञ्जानां संघातरूप एव। एवञ्च तेषु च कतिपयानवयवान् गृहीत्वा तत्सहचरितानन्यानवयवाननुमाय प्रतिसन्धानजन्या घटबुद्धिः, तानेवावयवानालम्बमानाननुमायानुमानमिति क्रमेण प्रत्यक्षस्यानुमाने एवान्तरभावात् प्रत्यक्षस्यानुमानातिरिक्तप्रमाणत्वप्रतिपादनमनुचितम्।

**तन्निर्वाकुर्वन्नाह भाष्यकारः- ''किं पुनर्गृह्यमाणादेकदेशादर्थान्तरमनुमेयं मन्यसे? अवयवसमूहपक्षे अवयवान्तराणि द्रव्योत्पत्तिपक्षे तानि चावयवीति। अर्थादवयवसमूह एवावयवी नावयवेभ्यो अर्थान्तरमिति पक्षे दृष्टेभ्योरवयवेभ्योरन्यः कश्चनावयवी अनुमीयते इति।''** द्विधाचात्र प्रतिपत्तिर्भाष्यकारेण प्रतिपादिता। तत्र प्रथमपक्षे

[1] न्या०सू०- 2/1/30

यथा प्रत्यक्षदृष्टोऽर्वाग् भागो नहि वृक्षस्तद्वदनुमितः। परमध्यभागोऽपि वृक्षो न भवति। एवञ्च वृक्षबुद्धेरपलाप एव स्यादिति।

अथैकदेशे ग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसन्धानात् तत्र वृक्षबुद्धिः इति। तदपि न अवयवान्तराणि अनुमेयमीति भवतोक्तत्वात् वृक्ष इति बुद्धिरनुमानं भवितुं नार्हति इति भावः।

**द्वितीयपक्षं निराकरोति भाष्यकारः-** द्रव्यान्तरोत्पत्तिपक्षे नावयव्यनुमेय इति। अर्थादवयवी यदि अनुमेयः स्यात् तदा तेन स अवयवानां व्याप्तिग्रहणमवश्यमभ्युपेयम्। न च सम्बद्धद्वय-ग्रहणमन्तरा सम्बन्धो ग्रहीतुं शक्यते। तथा च व्याप्तिग्रहणकाले यदि अवयवी गृहीत इति स्वीक्रियते एते तर्हि अवयविनः प्रत्यक्षमभ्युपगतमेव।

इत्थं प्रकारेण **'वृक्षः घटः'** इत्यादिबुद्धिरनुमानं भवितुं नार्हति। भवदीययुक्त्या अतऽनुमानातिरिक्तमेव प्रत्यक्षं स्वीकरणीयम्।

सूत्रकारश्च **"न प्रत्यक्षेण यावत् तदपि उपलम्भात्"**[1] इति प्रत्यक्षस्यानुमानत्वं नहि सम्भवति। कुतः भग्तैव पूर्वमुक्तम्:- **"एकदेशग्रहणात् तदुपलब्धेः"** इत्यस्मिन् सूत्रे अर्वाग् भागस्यैव प्रत्यक्षत्वादिति। तावदर्थजातन्तु प्रत्यक्षमेव यावत् प्रत्यक्षेण गृहीतः। तस्यापि अनुमानत्वमुच्यते यदि तदा एकदेशग्रहणादुपलब्धेः इति हेतुना विरोध इति हेतुरेष विरूद्धः। तथाचोक्तं भाष्यकारेण- **"न चोपलम्भो निर्विषयः अस्ति यावदर्थजातन्तस्य तस्य विषयः तावदभ्यनुज्ञेयमानं प्रत्यक्षव्यवस्थापकं भवतीति।"** इति

अन्यच्च प्रत्यक्षपूर्वकत्वादनुमानस्य नानुमानत्वं प्रत्यक्षस्य। सम्बद्धौ अग्निधूमौ दृष्टवत एव पुरुषस्य धूमदर्शनादनुमितिर्जायते। तेन च अनुमितौ प्रथमं लिङ्गलिङ्गिनोः प्रत्यक्षं भवत्येव। प्रकृते च तथाभावात् प्रत्यक्षस्यानुमानत्वं नहि सम्भवति। प्रत्यक्षस्य इन्द्रियार्थ-

---

[1] न्या0सू0 – 2/1/31

सन्निकर्षजन्यत्वात्। न चानुमेयस्यार्थस्य इन्द्रियसन्निकर्षादनुमितिर्भवति। **''सोयं प्रत्यक्षानुमानयोः लक्षणभेदमहान् आश्रयितव्यः''**[1] इति भाष्यकारः।

इत्थं प्रकारेण पूर्वोक्तसूत्रेण तन्मतानुसारेणैवोत्तरं प्रदत्तम्। इदानीं सिद्धान्तदृष्ट्या उत्तरयति- **''न चैकदेशोपलब्धिरवयसिद्भावात्''**[2] इति सूत्रत्वेन न गृहीतं तात्पर्यकारे न्यायसूचीनिबन्धे। भाष्यकारस्यैव इयमुक्तिः इति वदति। वृत्तिकारस्तु सूत्रत्वेन स्वीकरोति। वस्तुतः इदं सूत्रत्वेनैव ग्राह्यम्। यतः **''साध्यत्वादवयविनिःसंदेहः''**[3] इत्येतत् सूत्रे पूर्वपक्षत्वेन अतिरिक्तावयविविषये संशयस्योत्पादनात्। पूर्वस्य सूत्रत्वेन स्वीकारे एव अग्रिमाक्षेपोऽपि संगच्छते। अवयवेभ्योऽतिरिक्तखण्ड एकऽवयवी भवति। तस्मादिन्द्रियार्थसन्निकर्षो यत्र कुत्रचिदेव देशे भवति। ग्रहणन्तु एकस्यावयविन एव भवति। ''न हीन्द्रियेण सन्निकृष्यमाण एकदेशे तत्सहचरितोऽवयवी न हि सन्निकृष्टः। तेन यथैकदेशसन्निकर्षादुपलभ्यते। एवमवयव्यपि सन्निकर्षादुपलभ्यते।

अथ भोः कृत्स्नेष्वयवेषु हि अवयवी वर्तते नत्वेकदेशोपलब्धौ अवयविनः उपलब्धिरुपपद्यते इति तन्न। कारणतातिरिक्तोऽपि कश्चन एक देशः स्यात् तदा अवयव्युपलब्धिर्न स्यात्। न च तथास्ति इति उपलभ्यमान एकदेशोऽपि तदुपादानभूतमेव तस्य ग्रहणे तत्समवेतावयविग्रहणं भवतीति। अकामेनापि भवताऽभ्युपेयम्। अतः प्रत्यक्षमनुमानातिरिक्तं प्रमाणान्तरमवश्यमेवाभ्युपेयम्।

प्रत्यक्षज्ञानस्य तावदिन्द्रियैर्लब्धत्वात् तदपलापः केनापि कर्तुं न शक्यते। अस्य वैशिष्ट्यमिदमेव विद्यते यत् चार्वाकसदृशेन दर्शनेनापि अस्य प्रमाणत्वस्वीकारात्। अस्य मौलिकप्रमाणत्वाद् नहि एतज्ज्ञानार्थं प्रमाणान्तरयापेक्षा। अत एव इदं प्रत्यक्षप्रमाणमनुमानादिप्रमाणन्तरनिरपेक्षमेव भवति। एतदतिरिक्तानि च प्रमाणानि एतत्सापेक्षाणि भवन्ति। एतत् सर्वं

---

[1] न्या०भा०

[2] न्या०सू०- 2/1/32

[3] न्या०सू०- 2/1/33

समालोच्य चतुर्षु प्रमाणेषु अस्यैवाभिधानं सर्वप्रथमं सूत्रकारेण प्रथमं विवेचनं कृतम्। इममेवाशयं ज्ञापयन्नाह जयन्तभट्टः- **"एकलप्रमाणमूलभूतत्वेन पूर्वपीठत्वेन च ज्येष्ठत्वात् प्रथमं प्रत्यक्षस्य लक्षणमिति"** एतत्सर्वं प्रत्यक्षप्रमाणस्य वैशिष्ट्यं मनसि निधाय न्यायाभितम् प्रत्यक्षप्रमाणस्य समालोचनं क्रियते। प्रत्यक्षप्रमाणस्य ज्ञाने प्रमाणे विषये च त्रिषु प्रयोगो दृश्यते। यथा चाक्षुषादिकं इन्द्रियार्थसन्निकर्षजन्यं प्रत्यक्षज्ञानम्। इन्द्रियं प्रत्यक्षप्रमाणमिन्द्रियार्थसन्निकर्षो वा प्रत्यक्षप्रमाणम्। प्रत्यक्षविषयो घटः। इत्येवं रूपेण प्रत्यक्षपदेन ज्ञानं, ज्ञानसाधनीभूतं प्रमाणं, ज्ञानविषयीभूतः पदार्थश्च बोध्यते। उक्तञ्च महिर्षिणा गौतमेन- **"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमेव प्रत्यक्षपदाभिलप्यं भवति"**। भाष्यकारेण तु **"अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षं, वृत्तिस्तु सन्निकर्षो ज्ञानं वा"**।[1] इत्थं सन्निकर्षं ज्ञानञ्च प्रत्यक्षप्रमाणत्वेनाभ्युपगतम्। परन्तु विषयस्य ग्रहणं प्रत्यक्षपदेन भवति इति नहि भाष्यकारेण अतः न वा सूत्रकारेण अतो परन्तु व्यवहारे चक्षुषा घटः प्रत्यक्षो भवति इत्येवं रीत्या विषयेऽपि प्रत्यक्षपदप्रयोगः सर्वैरेव स्वीक्रियते एव।

पूर्वोक्तभिन्नभिन्नमतानुसारेण प्रत्यक्षपदस्य ज्ञानज्ञानसाधन, ज्ञानविषयार्थकता व्युत्पत्ति-वैचित्र्येणानुभूयते। एतावता च सूत्रकारेण ज्ञानस्यैव प्रत्यक्षपदवाच्यत्वं स्वीकृतम्। भाष्यकारेण च सन्निकर्षश्च व्याख्यातः। वार्तिककारोऽपि सन्निकर्षमात्रं प्रत्यक्षमन्वानानां केषाञ्चन एक-देशिनां मतं दूषयन् मुख्यत्वेन प्रत्यक्षपदस्य ज्ञानरूपत्वमेवाभ्युपगच्छति। एवं भाष्यकार-वचनमनुमोदयन् सन्निकर्षस्य प्रत्यक्षपदवाच्यत्वमभ्युपगच्छन्ति। टीकाकाराः वाचस्पतिमिश्रास्तु वार्तिककारमतमनुमोदयन्नपि प्रवृत्ताः, हेतुस्तु अर्थसाक्षात्कारजनकत्वमित्येवमभिदधानाः। इन्द्रियस्य प्रत्यक्षत्वं स्वीकुर्वन्त इन्द्रियस्यैव प्रत्यक्षत्ववादिनां नव्यानां चिन्तनबीजं प्रदर्शयन्ति।

तत्रैव वार्तिककारेणातीवास्पष्टतया कृतं प्रमाणफलविचिकित्सायाः समाधानादिकं टीकाकारेण मिश्रेण किञ्चित् स्पष्टतया उक्तम्। यदा इन्द्रियं प्रमाणं भवति तदा निर्विकल्पकं

---

[1] प्र०पा०भा०

ज्ञानं फलं भवति। यदा च इन्द्रियार्थसन्निकर्षः प्रमाणं भवति तदा सविकल्पकं ज्ञानं फलं भवति। यदा च सविकल्पकं ज्ञानं प्रमाणं भवति तदा हानोपादानोपेक्षाबुद्धयः फलमिति।

एतद् सर्वं केशवमिश्रेण सुस्पष्टतया तर्कभाषायां प्रदर्शितं- **''तस्याः प्रमायाः करणं त्रिविधं, कदाचिदिन्द्रियार्थसन्निकर्षः कदाचित् ज्ञानम्। कदा पुनरिन्द्रियं करणं? यदा निर्विकल्पकरूपा प्रमा फलम्। कदा पुनरिन्द्रियार्थसन्निकर्षः करणं? यदा निर्विकल्पकानन्तरं सविकल्पकं नामजात्यादियोजनात्मकं डित्थोऽयं, ब्राह्मणोऽयं, स्यामोऽयमिति विशेषणविशेष्यावगाहिज्ञानमुत्पद्यते तदा। कदा पुनर्ज्ञानं करणम्? यदा उक्त-सविकल्पकानन्तरं हानोपादानोपेक्षाबुद्धयः फलम्।''**[1]

एतद्विषये आचार्याणां मतभेदो दृश्यते इति तर्कभाषाकारस्य कथनाद् ज्ञायते। अत्र कश्चिदाह- **''सविकल्पकादीनां इन्द्रियमेव करणम्। यावन्ति त्वान्तरालिकानि सन्निकर्षादीनि तानि सर्वाव्यवान्तरव्यापार इति।''**[2] निर्विकल्पकज्ञाने इन्द्रियार्थसन्निकर्ष-रूपावान्तरव्यापारः। सविकल्पकज्ञाने इन्द्रियार्थसन्निकर्षो निर्विकल्पकज्ञानश्चेत्येत द्वयमवान्तर-व्यापारः। हानोपादानोपेक्षाबुद्धौ इन्द्रियार्थसन्निकर्षा निर्विकल्पकज्ञानं सविकल्पकज्ञान-मित्येतत्त्रयमवान्तरव्यापारः।

**अनुमानप्रमाणसमीक्षा :**

सूत्रकारेण गौतमेन पूर्वपक्षतयानुमानस्य प्रामाण्यं संशय्य **''रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम्''**[3] इति सूत्रमुक्तम्। अर्थात् रोधोपघातसादृश्येभ्योऽनुमिते-र्व्यभिचरितत्वात् अनुमानमप्रमाणम् इति। यथा- नद्याः पूर्णत्वेन लिङ्गाद् वृष्टेर्भूतत्वानुमानम्, निरोधेनाऽपि तस्याः पूर्णत्वसम्भवादिति। पिपीलिकाण्डसंचारेण भविष्यति वृष्टिरिति अनुमानमुक्तं तदपि उपघातेनाण्डसंचारसम्भवाद् मिथ्यानुमानम्, शब्देन वाद्यानुमानमुक्तम्-

---

[1] तर्कभाषा, केशवमिश्र
[2] न्या0सू0 2/1/38
[3] न्या0सू0 2/1/37

शब्दादातोद्यसिद्धिवत् तत्सिद्धेरित्यत्र, तत्र तत्सदृशोऽपि शब्दो भवितुमर्हति, अतो मिथ्यानुमानम्।

अस्याक्षेपस्य निराकरणं सूत्रकारेणैवैवं कृतम्- **"न एकदेशत्राससादृश्येभ्यो-ऽर्थान्तरभावात्"**[1] इति। नदीवृद्धिमात्रन्नानुमितिकरणं भवितुमर्हति, अपितु- उदकविशिष्टोदकं शीघ्रतरत्वं स्रोतसः बहुतरफेनफलपर्णकाष्ठादिवहनं चोपलभमानो नद्याः पूर्णत्वेन उपरि वृष्टो देव इत्यनुमानम्। पूर्वं यदुक्तन्तत्तु- अनुमाने अनुमानाभिमानः।

एवमेव द्वितीयमपि प्रीतिपूर्वकमेकस्यामेव पङ्क्तौ संचरणं यदि दृश्यते तदैव वृष्ट्यनुमानम्, न यस्य कस्य चन यथाकथञ्चित् संचरणमात्रेण। पूर्वोक्तन्तु अनुमानाभासमात्रं, न त्वनुमानम्।

तथैव यः कश्चन मयूरध्वनिं कुर्यात्, स च न मयूरशब्दोऽपि तु तत्सदृशः, मयूरपदज्ञानाभावात् मिथ्यानुमानं भवति। मिथ्यानुमानं करोति चेत् तदनुमातुरपराधो नानुमानस्य, किञ्च यः पुरुषो व्याप्तिज्ञानमन्तरा (सम्बन्धज्ञानमन्तरा) अनुमिनोति चेत् स कस्य दोषः? अनुमातुरेव नान्यस्य। प्रत्यक्षत्वभ्रमो यथा दोषवशाद् भवति तद्वद् दोषवशात् (अज्ञानवशात्) मिथ्यानुमानं भवतीति[2] ज्ञेयम्।

न्यायमञ्जरीकारस्तु- अनुमानप्रामाण्ये आक्षेपं कुर्वन्- प्रमाणेन गौणन्न भवितव्यं, गौणत्वात्तस्य अर्थनिश्चायकत्वन्न सम्भवतीति प्रदर्शयति- हेतोः पक्षवृत्तित्वं गौणवृत्त्या भवति, न मुख्यवृत्त्या। साध्ये धर्मे हि न हेतोः पक्षधर्मत्वम्, अग्निधर्मत्वात् धूमस्य, धर्मिणि साध्ये (पक्षे) हेतोरनन्वयित्वम्, न हि यत्र-यत्र धूमः तास्ति, न हि दहनमहीधयोः धूमो धर्मः। न चैवमन्वयः- यत्र धूमस्तत्राग्निमान् पर्वत इति। तस्मादन्वयव्यवहारसिद्धये धर्मविशिष्टः पक्षशब्दो रुद्धः, तदेकदेशे तु गौणवृत्त्या। पक्षशब्द एव गौणश्चेत् तमादाय हेतोः पक्षधर्मत्वं तु

---

[1] न्या०सू० 2/1/39

[2] वात्स्यायनः, 2/1/39 सूत्रस्थं न्यायभाष्यम्।

ततोऽपि गौणमापन्नमिति भावः। एतादृशपक्षधर्मत्वादिविशिष्टलिङ्गस्यानुमानरूपत्वे तु गौणमेव प्रमाणम्, गौणत्वादर्थनिश्चयो दुर्लभ एव।

अपि च- **विशेषेऽनुमानाभावात् सामान्ये सिद्धसाधनात्।**
**तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः॥**[1] इति॥

अयं भावः- पर्वतीयवह्निधूमयोर्व्याप्तिग्रहासम्भवः। ननु सामान्ये व्याप्तिग्रह इति चेत्? सामान्यतो यत् धूमवत्, तत् वह्निमदिति तु महानसादौ सिद्धमेव। अत एतादृशवह्निव्याप्यधूमवान् पर्वत इति परामर्शोऽपि न घटत एवेति अनुमानकथैव गलहस्तिता।

**"साहचर्ये च सम्बन्धे विस्रम्भ इति मुग्धता।**
**शतकृत्वोऽपि तद्दृष्टौ व्यभिचारस्य सम्भवात्॥"**
**देशकालदशाभेदविचित्रात्मसु वस्तुषु।**
**अविनाभावनियमो न शक्यो वक्तुमाह च॥**
**अवस्थादेशकालादिभेदाद् भिन्नासु शक्तिषु।**
**भावानामनुमानेन प्रसिद्धिरतिदुर्लभा।"**[2] इति।

अत्राभिधीयते- अनुमानप्रमाणन्निराकर्तुन्न शक्यते, प्रत्यक्षमात्रेण लोकव्यवहारोऽसम्भवः। तदेतदुक्तम्-

**"अनुमानापलापे तु प्रत्यक्षादपि दुर्लभा।**
**लोकयात्रेति लोकास्स्युः लिखिता इव निश्चलाः॥"**[3] इति।

प्रत्यक्षजातं वस्तु तत्सजातीयदर्शनात् सुखसाधनमेतदिति निश्चित्य लोकस्तदुपादत्ते जहाति वा। नियमोऽर्थाद् व्याप्तिरेव न सम्भवतीत्यपि न, य कश्चिदर्थं विलोक्य यः कश्चिन्नावगम्यते, अपितु सम्बन्धिनः कस्य चन दर्शनेनान्यस्य ज्ञानं भवति, एकसम्बन्धिज्ञान-

---

[1] माधवाचार्यः, सर्वदर्शनसंग्रहः, चार्वाकदर्शनम्।
[2] जयन्तभट्टः, न्यायमञ्जरी 1/1/6 सूत्रस्था।
[3] पूर्ववत्।

मपरसम्बन्धिस्मारकमिति। अयमेव वस्तूनां स्वभावः- अविनाभूतेन वस्तुनान्यस्य ज्ञानं भवति। अतो याद्दृनाद्यत्र प्रतीतिर्भवत्यन्यस्य तत्र तयोः कश्चन सम्बन्धो वक्तव्य एव। स सम्बन्धस्तादात्म्यरूपो वा भवतु तदुत्पत्तिरूपो वा भवतु। अस्माकं तु तत्सत्त्वे तत्सत्त्वन्तदभावे तदभाव इति अविनाभावः (साहचर्यम्) सम्बन्ध एव।

**"अतो यद्दर्शनात् यत्र प्रतीतिरूपजायते।**
**तयोरस्त्यर्थयोः कश्चित् सम्बन्ध इति मन्महे॥**
**तदात्मतातदुत्पत्ती न श्रद्दधति तद्विदः।**
**साहचर्यन्तु सम्बन्ध इति नो हृदयङ्गमम्"**[1] इति।।

सकलधूमवह्न्योस्साहचर्यदर्शनाभावात्, एकत्र कुत्रचिद्दर्शनमात्रेण कथं व्याप्तिनिश्चय इत्याक्षेपस्य समाधानं कुर्वन् आह जयन्तः- **व्याप्तिग्रहणार्थं सर्वत्र विद्यमानं धूमवह्न्योर्ज्ञानन्नावश्यकम्, अपितु अग्नित्वरूपेण धूमत्वेन रूपेण च सकलाग्निधूमयोर्ज्ञानात् सामान्यमुखेनैव व्याप्तिग्रहणं सम्भवत्येव।**

यत्तूक्तम्- गौणत्वादनुमानप्रमाणस्यार्थनिश्चयो न सम्भवतीति तत्रोच्यते- अनुमानप्रमाणस्य गौणत्वं वयन्न पश्यामः। पक्षधर्मादीनां गौणत्वन्तु तद्व्याख्याकारेण व्याख्यातम्। किं तावता प्रमाणं गौणं भवति।

यत्तूक्तम्- देशकालावस्थाभेदेन वस्तुस्वरूपं भिद्यत अत व्याप्तिनिश्चयो न भवति, तन्न- यथार्थतो व्याप्तिर्गृहीता चेत् तत्र व्यभिचरति, यदि व्यभिचरति तर्हि न स अनुमानस्य दोषः, अपितु अनुमातुरेव दोषः।

अविनाभावग्रहणोपायानां भेदादनुमानस्य प्रामाण्यन्न सम्भवतीत्याक्षेपस्य समाधानं कुर्वनाह- शब्दानुमानतर्कप्रत्यक्षप्रमाणादिभिर्गृहीतसम्बन्धे भेदो न सम्भवति। सादृश्यभेदेऽपि

[1] पूर्ववत्।

अविनाभावसम्बन्धस्तु स्वरूपतस्समानमेव, अतोऽनुमानस्य प्रामाण्यशङ्काया नावकाश[1] इति। अत्र चार्वाकमतं पूर्वपक्षी कुर्वन् तन्निराकरोति उदयनः- **अनौपाधिकसम्बन्धस्य व्याप्तिरूपत्वात्, साध्यसाधनयोः अनौपाधिकसम्बन्धस्य ग्रहणासम्भवात् देशान्तरे कालान्तरे चोपाधिसंशयस्य विद्यमानत्वाद् व्याप्तिग्रहणासम्भव इति।**

तत्रोच्यते- कालान्तरे देशान्तरे वोपाधेर्निर्मूलत्वात्। कुतः? कालान्तरस्य देशान्तरस्य चाप्रत्यक्षत्वात् चार्वाकमते न तत्सिद्धिः, अनुमानेनैव तत्सिद्धिः, तेषामुपाधिसंशयोऽपि अनुमानप्रमाणास्तित्वं समर्थयति। एवं कार्यकारणभावोऽपि चार्वाकवराकैः स्वीकर्तव्यो भवति। यदि कार्यकारणभाव एव संशयः, तर्हि संशय एव न स्यात्। कुतः? संशयस्याऽपि कारणान्तरं विनाऽसम्भवात्, यदि कारणं विनैव तत्सम्भवति तर्हि सर्वस्मादपि सर्वमुत्पद्यते। मृत्तिकातः पट उत्पद्येत, सिकतातस्तैलम्, न तथा दृश्यते, अतः कारणन्तु स्वीकर्तव्यमेव भवति। एवं संशयस्याऽपि कारणं वक्तव्यमेव। किं बहुना- कारणज्ञानमन्तरा भोजने प्रवृत्तिः कथम्? तथा चोक्तम्- निराहारा म्रियेरन् चार्वाकवराका इति। अतोऽनिच्छायां सत्यामपि कार्यकारणभावस्तु स्वीकर्तव्य एव, एवञ्च तादृशकार्यकारणभावमूलकोऽविनाभावसम्बन्धोऽपि स्वीकरणीय एव।

चार्वाकदृष्ट्या अयं भ्रान्तः, अज्ञ इति वक्तुं न शक्यते। यतो हि तस्य भ्रान्तत्वम्, अज्ञत्वञ्चात्मगतम्, तच्च मनसा न गृह्यते। किं बहुना मनोऽस्तीत्यत्रैव किं प्रमाणम्? शब्दं श्रुत्वा किल अनुमीयते- भ्रान्तित्वम्, अज्ञत्वम्, मूर्खत्वं वा। किं बहुना स्त्रीपुत्रपौत्रादीनां येषां केषाञ्चन मरणे, तत्कारणत्वेनानेकाव्यभिचारहेतूनां व्यभिचारहेतूनां वानुमानेनैव निर्णीयते। स्याद्वा कुत्रचित् भ्रान्तित्वनिर्णयः, न कारणस्य (अनुमानस्य) दोषस्सः, अपितु अस्माकमेव। अनुमानमप्रमाणं सन्दिग्धत्वात्, यदि तदा स्ववचनविरोधः, अप्रामाण्यमपि अनुमानप्रमाणेनैव साधनात्।[2] अत एव न्यायभूषणकारेणाऽपि उक्तम्- अनुमानस्याप्रामाणिकत्वकथनं

---

[1] जयन्तभट्टः, न्यायमञ्जरी 1/1/6 सूत्रस्था।
[2] उदयनाचार्यः, तात्पर्यपरिशुद्धिः, अनुमानपरीक्षाप्रकरणम्।

लोकविरुद्धं, स्ववचनविरुद्धश्चेति[1]। सांख्यतत्त्वकौमुद्यां वाचस्पतिरपि चार्वाकोक्ताक्षेपस्य समाधानं कुर्वन् एवमाह- नाऽनुमानं प्रमाणमिति वदता लोकायतिकेनाऽप्रतिपन्नस्यासन्दिग्धो विपर्ययस्तो वा पुरुषः कथं प्रतिपद्यते? न च पुरुषान्तरगता अज्ञानसन्देहविपर्ययाशक्या अर्वाक्दृशा प्रत्यक्षेण प्रतिपत्तुम्। नाऽपि प्रमाणान्तरेण, अनभ्युपगमात्। किञ्च परपुरुषवर्तिनो-ऽज्ञानादीन् ज्ञात्वा यदि चार्वाकः परपुरुषं बोधयितुं किमपि वचनं प्रयुङ्क्ते तदा स प्रेक्षावद्भिरुन्मत्तवदुपहसनीयस्स्यात्। तस्मात् परपुरुषवर्तिनोऽज्ञानादयो वचनभेदाद्वा अभिप्राय-भेदाद्वानुमानतव्यैव, अतोऽकामेनाऽपि अनुमानप्रमाणमभ्युपेयमेव।[2] एवमेवानुमानप्रामाण्य-समर्थनाय वैशेषिकव्याख्यातृभिरपि प्रायः एतान्येव वाक्यानि हेतुत्वेन प्रदर्शितानि वर्तन्ते।।

**उपमानप्रमाणसमीक्षा :**

उपमानस्य प्रमाणान्तरत्वमस्ति न वेति विचारः। न प्रमाणान्तरत्वम्, शब्देऽन्तर्भावात् तस्य चानुमान इत। कुतः? आप्तोपदेशरूपत्वात् तस्येति प्रत्यक्षेणाऽप्रत्यक्षसिद्धेश्च शब्दस्यानुमाने अन्तर्भाव इति केचन वदन्ति।[3] नन्वुपमानं सिद्ध्यति चेत् शब्देऽन्तर्भावः, तस्य चानुमाने। तदेव न सिद्ध्यतीति कस्य चन प्रश्नः। तदेतदिदानीमुपमानं साधयित्वा उपमानस्यानुमाने अन्तर्भावः कर्तुं शक्यते न वेति विचारः क्रियते।

उपमानस्य मूलं कारणं हि साधर्म्यम्। तच्च त्रिविधम्- अत्यन्तसाधर्म्यं, प्रायस्साधर्म्यम्, एकदेशसाधर्म्यञ्च। तदेतत्त्रिविधसाधर्म्येणाऽप्युपमानं न सिद्ध्यति। प्रथमन्तावद् यथा गौस्तथा गौरिति, द्वितीयं- यथानड्वान् तथा महिषः, तृतीयन्तु न ह्येकदेशमात्रमादाय सर्वस्य सर्वेण सह साधर्म्यं वक्तुं शक्यम्। एवञ्च त्रिविधस्यापि साधर्म्यस्योपमान-प्रयोजकत्वाभावाद् नोपमानं सिद्ध्यतीति पूर्वपक्षः। तथा च सूत्रम्- **अत्यन्तप्रायैक-**

[1] भासर्वज्ञः, न्यायभूषणम्, अनुमानप्रकरणम्।
[2] वाचस्पतिमिश्रः, सांख्यतत्त्वकौमुदी, प्रमाणप्रकरणम्।
[3] प्रशस्तपादाचार्यः, प्रशस्तपादभाष्यम् विद्यानिरूपणप्रकरणम्।

**देशसाधर्म्यादुपमानासिद्धः**[1] इति। तत्खण्डयन् आह सूत्रकारः- **प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथेक्तदोषाऽनुपपत्तिः**[2] इति। तथा च भाष्यम्- न साधर्म्यस्य कृस्नाल्पप्रायभावमाश्रित्योपमानं प्रवर्तते, किं तर्हि प्रसिद्धसाधर्म्यात् साध्यसाधन-भावमाश्रित्य प्रवर्तते।[3]

साध्यं हि संज्ञासंज्ञिसंबन्धज्ञानम्। संज्ञा नाम पदम्, संज्ञी अर्थः, तयोस्सम्बन्धः शक्तिग्रहः, अयं पिण्डो गवयपदवाच्य इत्याकारकं ज्ञानम्, तत् यस्मात् साधर्म्याद् भवति। कस्मात् भवति? अतिदेशवाक्यार्थसाधर्म्यात्। यथा किञ्चिदंशमादाय यथा वृषभस्तथामहिष इति कोऽपि न प्रयुङ्क्ते। अतः लोको यत्र प्रसिद्धसाधर्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्तते, तत्रैवोपमानसिद्धिः। एतत् सर्वं लोकादेवोन्नेयमिति भावः।

अस्तु तर्ह्युपमानमनुमानमेव। कुतः? **प्रत्यक्षेणाऽप्रत्यक्षसिद्धेः**[4] इति। यथा प्रत्यक्षेण लिङ्गेनाप्रत्यक्षस्य लिङ्गिनोऽनुमानं भवति, तद्वत् प्रत्यक्षेण गवा अप्रत्यक्षस्य गवयस्य प्रतिपत्तिर्भवति, नेदमनुमानाद् विशिष्यते इति। तदेतत्खण्डयति सूत्रकारः- **"नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः"**[5] इति। अप्रत्यक्षे उपमानस्य प्रमाणस्य प्रयोजनं न पश्याम इति हेतोरनुमानाद् भेदोपमानस्येति सूत्रार्थः।

नन्वस्तु अनुमाने नान्तर्भावः, शब्दे त्वन्तर्भवति। गोसदृशो गवय इति वाक्ये गौरुपमानम्, गवय उपमेयः, सादृश्यज्ञानमुपमितिः। एतच्चाप्तोक्तत्वाद् (आप्तवाक्यात्) भवति तस्मात् शब्देऽन्तर्भाव इति। तदप्यनेनैव सूत्रेण खण्डितं भवति। उपमानप्रमाणं हि संज्ञासंज्ञिसम्बद्धज्ञानहेतुत्वेन स्वीक्रियते। उपमानस्यान्यदेवोपमानस्यान्यदेव प्रयोजनं प्रदर्श्य सूत्रकारणैतत्प्रदर्शितं (सूचितं)- यथोपमानमनुमाने नान्तर्भवति, तद्वत् शब्दप्रमाणेऽपि नान्तर्भवतीति। संज्ञासंज्ञिसम्बन्धज्ञानहेतुत्वेनैव हि तत्स्वीकृतम्। न च तदनुमाने शब्दे

[1] न्या0सू0 2/1/44
[2] पूर्ववत् 2/1/45
[3] वात्स्यायनः, 2/1/45
[4] न्या0सू0 2/1/46
[5] न्या0सू0 2/1/47

वान्तर्भावः कर्तुं शक्यः। न हि प्रत्यक्षं वक्तुं शक्यम्। यश्च मनुते पुरतो गवयं पश्यन् पुरुषस्संज्ञासंज्ञिसम्बन्धज्ञानं करोति, अतो न प्रमाणान्तरमुपमानमिति। तदपि न, संज्ञासंज्ञि-सम्बन्धिज्ञानप्रसङ्गः, अतो न प्रत्यक्षेऽपि अन्तर्भाव उपमानस्य। उपमानानुमानयोरन्यदपि भेदं प्रदर्शयति भाष्यकारः- **स्वार्थं परार्थञ्चानुमानं भवति,** न च तथोपमानम्। परार्थमात्रं हि तत्। ननु भवति किल स्वस्याऽप्यध्यवसायो यथा गौस्तथा गवय इति। सत्यमध्यव-सायस्त्वस्माभिरपि न निषिध्यते। कुतः? प्रसिद्धसाधर्म्यात् साध्यसाधनं ह्युपमानम् यस्य त्वुपमेयं प्रसिद्धन्न हि तस्य साध्यसाधनभावो विद्यत इति। अन्यच्च तथेत्युपसंहारात् उपमान-सिद्धेर्नाविशेषः, तथेति समानधर्मोपसंहारात्, समानधर्मो ह्युपमानधर्मः, तस्योपसंहारादित्यर्थः।[1]

## शब्दप्रमाणसमीक्षा

नन्वस्तु तर्हि शब्दप्रमाणस्यानुमानेऽन्तर्भावः। कुतः? अनुपलब्धेरर्थस्यानुमेयत्वात्। यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चादनुमीयते एवं मितेन शब्देनानुपलभ्यमानोऽर्थो-ऽनुमीयते इत्यनुमानं शब्दप्रमाणम्। तथा चाह सूत्रकारः- **शब्दोऽनुमानम् अर्थस्यानुप-लब्धेरनुमेयत्वात्।** अन्यश्च हेतुः- **उपलब्धेरद्विप्रवृत्तित्वात्**[2] इति। प्रमाणान्तरत्वे भिन्ना-भिन्ना प्रवृत्तिः स्यात् यथानुमानोपमेयोः, न चास्ति शब्दानुमानयोः प्रवृत्तिर्भिन्ना, तस्मात् अद्विप्रवृत्तित्वाद् अनुमानान्तर्भावः। अन्यच्च सम्बन्धाच्च इति[3]। सम्बद्धयोः शब्दार्थ-योस्सम्बन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणम्। यथा सम्बद्धयोर्लिङ्गलिङ्गिनोः सम्बन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहणमिव भवति। तस्मादपि शब्दस्य अनुमानेऽन्तर्भावः। तत्खण्डयन्नाह सूत्रकारः- **आप्तोपदेशसामर्थ्यात् शब्दादर्थसम्प्रत्ययः**[4] इति। सत्यम् अनुपलभ्यमानार्थ-विषयमनुमानम्, न पुनः स्वर्गापूर्वदेवताद्यर्थेषु लौकिकस्य प्रत्यक्षमनुमानं वा, अपि तु आप्तोपदेशसामर्थ्यात् शब्दार्थादर्थे सम्प्रत्ययः। न हि शब्दमात्रात् स्वर्गादीन् प्रतिपद्यते किन्तु

---

[1] वात्स्यायनः, न्यायभाष्यम् 2/1/46
[2] न्या0सू0 2/1/49-50
[3] न्या0सू0 2/1/51
[4] न्या0सू0 2/1/52

पुरुषविशेषाभिहितत्वेन प्रमाणत्वं प्रतिपद्य तथाभूताच्छब्दात् स्वर्गादीन् प्रतिपद्यते, न चैवमनुमाने सम्भवति। तथैव चाह वृत्तिकारोऽपि- आप्तस्य भ्रमादिशून्यस्य य उपदेशशब्दस्तत्र यत् सामर्थ्यम् आकांक्षादिमत्त्वं ततः। अथवा आप्तं प्राप्तं यदुपदेशसामर्थ्यम् आकांक्षादिमत्वं ततस्तत्सहकारात्। सावधारणश्चायं निर्देशः। तेन व्याप्तिनिरपेक्षादाकांक्षादिज्ञानादर्थे सम्प्रत्ययः शाब्दबोधस्सम्भवतीति नानुमानान्तर्भावश्शब्दस्येत्यर्थः। शब्दादमुमर्थं प्रत्येमि, न त्वनुमिनोमीत्यनुभवादिति भावः।

यच्चोक्तमद्विप्रवृत्तिकत्वादभेद इति तन्न, अनुमाने व्याप्त्यनुसंधानपूर्वकं लिङ्गदर्शनेन लिङ्गिनो ज्ञानम्, शाब्दस्थले शब्दस्याप्तोपदेशसामर्थ्यादर्थबोधकत्वमतो भवति च शब्दानु-मानयोः प्रवृत्तिभेदः।

यच्चोक्तं सम्बन्धाच्चेति, तन्न शब्दार्थयोर्वाच्यवाचकभावसम्बन्ध एव स्वीकृतः, न संयोगादिरूपः। नहि येनेन्द्रियेण शब्दो गृह्यते, तेनैव तद्वाचकस्य पदार्थस्यापि ग्रहणं भवति। कुतः? अयोग्यत्वात् धूमवह्न्योस्सम्बन्धस्तु प्रत्यक्षदृष्टः। येनेन्द्रियेण धूमवह्निग्रहणं तेनैव तत्सम्बन्धस्यापि ग्रहणम्, न चैवं शब्दे। यदि भवेत् तदा अन्नशब्दोचारणे सहैव भोजनमपि मुखम् एवागच्छेत्। असिशब्दोच्चारणे मुखस्य पाटनमेव भवेत्। दाहशब्दोश्चारणेन दाह एव भवेत् तथा न दृश्यते तस्मात् सम्बन्धाभाव इति[1]। तदुक्तम्- **पूरणप्रदाहपाटनानुपलब्धेश्च**[2] इति।

अन्यच्च शब्दार्थयोस्सम्बन्धो न स्वाभाविकः, धूमवह्न्योस्सम्बन्धस्तु नियतः (स्वाभविकः)। यदि स्वाभाविकस्स्यात् तदा यथाकामं शब्दप्रयोगे न स्यात्, दृश्यते हि ऋष्यार्यम्लेच्छानां यथाकामं शब्दप्रयोगः स्वाभविके तु सम्बन्धस्य जातिविशेषेऽपि न

[1] वात्स्यायनः, 2/1/52 सूत्रस्थं न्यायभाष्यम्
[2] न्या0सू0 2/1/53

व्यभिचरति, न हि तेजःप्रकाशस्य रूपप्रकाशहेतुत्वं जातिविशेषे व्यभिचरति। तथा च सूत्रकारः- **जातिविशेषे चानियमात्** इति[1]।

ननु शब्दस्य प्रामाण्यमेव न सम्भवति, कथमनुमानात् पृथक्कृत्य शब्दस्य प्रमाणत्वं साधयितुमिष्यते। कुतः न प्रामाण्यम्? अनृतव्याघातपुनरुक्तादिदोषाणां सत्त्वात्। तदुक्तं सूत्रकारेण- **तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः**[2] इति। पुत्रकामः पुत्रेष्ट्या यजेत पुत्रकामनावान् पुरुषः पुत्रेष्टियज्ञं कुरु इति शास्त्रं वदति। करणे च न दृश्यते पुत्रजन्म, दृष्टार्थस्यानृतत्वाद् अदृष्टार्थस्य अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिवाक्यानामपि अनृतत्वमेव।

व्याघातश्च- **उदिते होतव्यम्, अनुदिते होतव्यम्, समयाध्युषिते होतव्यमिति। पुनरुक्तश्च- त्रिः प्रथमामन्वाह त्रिरुक्तमामिति।** तदेतन्निराकुर्वन्नाह सूत्रकारः- **न कर्मकर्तृ-साधनवैगुण्यात्**[3] इति। किं फलादर्शनं वेदवाक्यानामप्रामाण्यं मन्यसे? वयं ब्रूमः- फलादर्शनं तु कारणवर्गाणामसामग्र्यं द्योतयति। वर्तते च कर्तॄणामपि साधनत्वं संयुज्यमानौ पितरावेव पुत्रं जनयतः, पितरौ कर्तारौ, संयोगः कर्म, साधनन्तु करणं, त्रयाणामपि गुणयोगादि किल पुत्रजन्म एकस्यापि वैगुण्ये तत्फलं न स्यादेव अत एवाह वार्तिककारेण न ज्ञायते किं पित्रोरसाद्गुण्यात् पुत्रजन्म न भवति, आहोस्वित् इष्टेरसाद्गुण्यात्, लोकोऽपि तथैव वदति न जाने किमर्थं तथा जातं मन्त्राणां न्यूनाधिकभावेन तथा जातं वा? आहोस्वित् दर्भेन्धनादेः करणानां वैगुण्यादित्यादि, कर्तृकर्मव्याघातं प्रदर्शयन्नाह भाष्यकारोऽपि- अथोपजननाश्रयं कर्मवैगुण्यं मिथ्यासम्प्रयोगः, कर्तृवैगुण्यं योनिव्यापादो बीजोपघतश्चेति। सकलकारणानां सत्त्वे किल कार्यं निष्पद्यते एकस्यापि न्यूनाधिक्ये कार्यन्न भवत्येव तावता वेदवाक्यानामप्रामाण्यं वक्तुन्न शक्यते, यदि सर्वथाप्रामाण्यं स्यात्तर्हि कुत्रचिदपि कदापि कार्यन्न निष्पद्येत, दृश्यते च कुत्रचित् कार्यस्य निष्पत्तिः तत्पुनः कथमिति

---

[1] पूर्ववत् 2/1/56
[2] पूर्ववत् 2/1/57
[3] पूर्ववत् 2/1/58

वक्तव्यम्। तस्मान्न प्रामाण्यं वेदस्य। यच्चोक्तं व्याघात इति तदपि न योऽभ्युपगतं हवनकालं भिनत्ति ततोऽन्यत्र जुहोति तत्रायमभ्युपगतकालभेदे दोष उच्यते, तथा च सूत्रं **अभ्युपेत्य कालभेदे दोषवचनात्** इति। यच्चोक्तं पुनरुक्तदोष इति तदपि न पुनः पुनः कथनस्यापि अर्थवत्वे न दोषः, अनर्थवत्वे पुनरुक्तः, अर्थवत्वे त्वभ्यासः शीघ्रं शीघ्रमागच्छेत्युक्ते न पुनरुक्तदोषः, तत्र द्विरुक्तस्य सार्थक्यात् अर्थवत्वात् (प्रयोजनवत्त्वादित्यर्थः)।[1]

किं पुनः प्रतिषेधहेतूद्धरणमात्रात् प्रमाणत्वं सिद्ध्यति शब्दस्य? न **'मन्त्रायुर्वेद-प्रामाण्यवच्च तत्प्रामाण्यं आप्तप्रामाण्यात्'**'[2]। यथा वायुर्वेदेनोपदिश्यते- इदं कृत्वानिष्टं जहाति, तथैव चानुष्ठीयमानस्याविपर्ययः, तेषामुपदेश एवाप्तोपदेश उच्यते, वेदवाक्यानाम-प्याप्तोपदेशत्वात्प्रामाण्यं सङ्गच्छत्येव। लोकेऽपि आप्तपुरुषाणां वाक्यानां प्रामाण्यमनुभूयत एव। अतश्शब्दस्य प्रामाण्यं दुरपह्नवम्।

**अर्थापत्त्यादिप्रमाणसमीक्षा**

इदानीं न्यायदर्शनदृष्ट्या अर्थापत्यादीनामपि प्रमाणान्तरत्वमस्ति न वेति विचारः क्रियते। तत्र अर्थपत्यादीनामपि प्रमाणन्तरत्वं स्वीकर्तव्यमिति पूर्वपक्षिणः। तथा चार्थापत्तिरपीति मीमांसकाः, अनुपलब्धिरपि भाट्टाः वेदान्तिनश्च, ऐतिह्यमपि पौराणिकाः, संभवोऽपि इति ज्योतिर्विदः, चेष्टाऽपीति तान्त्रिकाः। **प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि**[3] इत्यनेन न्यायसूत्रेण प्रमाणानां चतुष्टयनिर्देशोऽयुक्तः। तदुक्तं न्यायसूत्रकारेण पूर्वपक्षस्यापक्रमे- **शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः**[4] इति।

तत्र अर्थापत्तिर्नाम यत्राभिधीयमानेऽर्थे अन्यार्थः प्रसज्यते सोऽर्थापत्तिः। अर्थाद् आपत्तिः= अर्थापत्तिः, आपत्तिः= प्राप्तिः। यथा- **पीनोऽयं देवदत्तो दिवा न भुङ्क्ते** इति

---

[1] वात्स्यायनः न्यायभाष्यम् 2/1/58
[2] न्या0सू0 2/1/69
[3] न्या0सू0 1/1/3
[4] पूर्ववत् 2/2/2

वाक्यश्रवणानन्तरम्, दिवाभुञ्जानत्वे सति पीनत्वं देवदत्तस्य रात्रिभोजनमन्तरा न सम्भवतीति रात्रिभोजनं कल्प्यते। यथा **अग्निहोत्रं जुहुयात्स्वर्गकामः** इति पारलौकिकफलविधायकैः वाक्यैश्च शरीरातिरिक्तात्मनोऽस्तित्वसिद्धिरर्थादापद्यते, नो चेत् तादृशवाक्यानि अर्थशून्यानि स्युः। असत्सु मेघेषु वृष्टिर्न भवतीति कथने सत्सु भवतीति प्रसज्यत इत्यादि। तदेतत्सर्वं समाधत्ते सूत्रकार एतेन सूत्रेण- **शब्द ऐतिह्यानर्थन्तरभावादनुमाने अर्थापत्ति-सम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः**[1] इति। एतदेव व्याचष्टे भाष्यकारः- **सत्यम् एतत् प्रमाणं किन्तु न प्रमाणान्तरम्**[2] इति। यथा दिवाभुञ्जानत्वे सति पीनत्वं देवदत्तस्य रात्रिभोजनमन्तरा न सम्भवतीति रात्रिभोजनं कल्प्यते किल। तत्तु- पीनत्वभोजनयोः कार्यकारणभावात्, भोजनस्य पीनत्वकारणात्, तत्तु वह्निधूमयोरिव भवति अत न प्रमाणान्तरत्वं तस्य। ऐतिह्यञ्च इति होचुरिति अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यम्। सत्यमेतदपि प्रमाणं, किन्तु न प्रमाणान्तरम् **"आप्तोपदेशश्शब्दः"**[3] इति वचनानात् शब्देऽन्तर्भावात्, भेदस्तु शब्दकृत एवेति ज्ञेयः। सम्भवो नाम **अविनाभाविनोऽर्थस्य सत्ताग्रहणात् अन्यस्य सत्ताग्रहणम्।**[4] अस्याऽपि अनुमानेऽन्तर्भावात् न प्रमाणान्तरत्वम्, आढकद्रोणौ चाविना-भाविनौ, व्याप्यस्य सत्ताग्रहणात् व्यापकस्य सत्ताग्रहणम्, अनुमानरूपमेवैतत्।

अभावो नाम- **विरोधी अभूतं भूतस्य।**[5] अविद्यमानं वृष्टिकर्म वृष्टिनिरोधकत्वेन विद्यमानस्य वायु-अभ्रसंयोगस्य बोधकं भवति। तथा च वृष्ट्यभावज्ञानेन तन्निरोधकस्य वायु-अभ्रसंयोगस्य ज्ञानं भवतीति यावत्। अस्याप्यनुमानेऽन्तर्भावः। कथं? मेघस्य सत्त्वेऽपि कार्यानुपपत्त्या कारणस्य प्रतिबन्धकमनुमीयते। एवञ्च प्रमाणानां चतुष्ट्वनिर्देशो यथार्थ एव।

---

[1] न्या0सू0 2/2/2
[2] पूर्ववत्, भाष्यम् 2/2/2
[3] न्या0सू0 1/1/7
[4] न्या0सू0 भाष्यम् 2/2/1
[5] न्या0सू0 भाष्यम् 2/2/2

उदयनोऽपि अर्थापत्तेः प्रमाणान्तरत्वं खण्डयन्नाह- **न चार्थापत्तिरनुमानतो भिद्यते, लोके तदसंकीर्णोदाहरणाभावात्, प्रकारान्तराभावाच्च**[1] इति।

तदेतत्तात्पर्यम्- जीवश्चैत्रो गृहे नास्तीत्युक्ते बहिस्सत्त्वं ज्ञायते अर्थापत्त्या इत्युच्यते। तत्रानियम्यस्य नायुक्तिः, जीवन्निष्ठगृहाभावसम्बन्धि किन्तावदनुपपन्नम् इति सत्त्वाभावे? नहि अव्याप्यमव्यापकं विनाऽनुपपन्नमिति कश्चिद् ब्रूयात्। बहिस्सत्त्वाभावः व्याप्यः अर्थाद् अनुपद्यमानगृहाभावस्याभावस्सर्वत्राऽपि उपलभ्यत इत्येवं व्यतिरेकव्याप्तिज्ञानेनैव तस्य सिद्धत्वात्, न तस्माद् भिद्यत इति। तथा चाह-

**अनियम्यस्य नायुक्तिर्नानियत्तोपपादकः।**
**न मानयोर्विरोधोऽस्ति प्रसिद्धे वाप्यसौ समः।।**[2] इति।

जयन्तस्तु विस्तरशः पूर्वपक्षीकुर्वन्- अर्थापत्तिर्नानुमानम् अनुमानसामग्र्यभावात्। पक्षधर्मतादिसामग्र्या यज्ज्ञानमुत्पद्यते तदनुमानमिति तार्किकस्थितिः, न चात्र सास्ति। अर्थापत्तिस्थले व्याप्तिग्रहणमपि न सम्भवतीत्येतत्सर्वं खण्डयन्नर्थापत्तिर्न प्रमाणान्तरं किन्तु अनुमानमेवेति स्थापितवान्।

**इत्यर्थापत्तिरुक्तैषा षट्प्रमाणसमुद्भवा।**
**एषा विचार्यमाणा तु भिद्यते नानुमानतः।।**[3] इति।

यद्यपि अर्थापत्तौ नान्वयव्याप्तिसंभवोऽथापि व्यतिरेकव्याप्तिस्सम्भवत्येव। तेन विना नोपपद्यत इति च व्यतिरेकव्याप्तिरेव। ननु अभावयोरपि परस्परं व्याप्तिस्तेन च प्रतियोगिनः कथं सिद्धिः? तत्रोच्यते- व्यतिरेकिणश्च प्रतीतिः, तस्मिन् सत्युपपद्यत इत्यन्वयमाक्षिपति। तथा च व्यतिरेकव्याप्तिरन्वयदार्ढ्यायैवेति तात्पर्यम्। तथैव चोक्तं कुसुमाञ्जलौ उदयनाचार्येण। जयन्तश्च अन्वयव्यतिरेकौ च गमकस्य लिङ्गस्य धर्म इति कथमर्थापत्तिर्नानुमानम् इति।

---

1 न्यायपरिशुद्धिः 2/2/2
2 उदयनाचार्यः, न्यायकुसुमाञ्जलिः 3/19
3 जयन्तभट्टः, न्यायमञ्जरी अर्थापत्तिप्रकरणम्, का0 129

वाचस्पतिमिश्रोऽपि प्रमाणान्तरत्वं खण्डयति अर्थापत्तेः। तथा चोक्तम्- **जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्याऽदृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानां साऽप्यनुमानमेवेति। अर्थापत्तौ अन्वयव्याप्तिरपि वस्तुतस्सम्भवत्येव। अनुमानप्रयोगश्च- चैत्रो बहिरस्ति जीवनवत्त्वे सति गृहासत्त्वात् अहमिव।** उभयत्र व्याप्तिं प्रदर्शयति- **यदा खलु सन्नेकत्र नास्ति तदा अन्यत्र अस्ति। यदाव्यापक एकत्रास्ति तदान्यत्र नास्तीति।**[1] यदा जीवतो गृहासत्त्वन्तदा बहिसत्त्वम् इत्यन्वयः, यदा तु बहिस्सत्त्वासत्त्वं तदा जीवतो गृहसत्त्वमिति व्यतिरेकः, स्वशरीरे व्याप्तिग्रहप्रकारो ज्ञेयः। तथा च सतो गृहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव।

केशवमिश्रस्तर्कभाषायाम् अर्थापत्तेः प्रमाणान्तरत्वनिषेधयन्नाह- रात्रिभोजनस्यानुमानविषयत्वादिति, केवलव्यतिरेकानुमानेनैव रात्रिभोजनस्य प्रतीयमानत्वं किमर्थमर्थापत्तिः पृथक्त्वेन कल्पनीयेति। अनुमानप्रकारश्च- अयं देवदत्तो रात्रौ भुङ्क्ते, दिवाभुञ्जानत्वे सति पीनत्वात्। यस्तु रात्रौ न भुङ्क्ते नाऽसौ दिवाऽभुञ्जानत्वे सति पीनः, यथा दिवा रात्रौ चाभुञ्जानोऽपीनः, न चायं तथा, तस्मान्न तथेति।[2]

## अनुपलब्धि ( अभाव ) प्रमाणसमीक्षा

भाष्यकारेणानुपलब्धेरनुमान एवान्तर्भावः कृतः, तत्प्रकारश्च अभावो नाम- **विरोधी अभूतं भूतस्य।**[3] अविद्यमानं वृष्टिकर्म वृष्टिनिरोधकत्वेन विद्यमानस्य वायु- अभ्रसंयोगस्य बोधकं भवति। तथा च वृष्ट्यभावज्ञानेन तन्निरोधकस्य वायु- अभ्रसंयोगस्य ज्ञानं भवतीति यावत्। अस्याप्यनुमानेऽन्तर्भावः। कथं? मेघस्य सत्त्वेऽपि कार्यानुपपत्त्या कारणस्य प्रतिबन्धकमनुमीयत इत्यतः नानुपलब्धिः प्रमाणान्तरम्।

---

[1] वाचस्पतिमिश्रः, सांख्यतत्त्वकौमुदी, प्रमाणप्रकरणम् एवं न्यायवार्तिकतात्पर्यटीका च न्या0सू0 2-2-6
[2] केशवमिश्रः, तर्कभाषा, अर्थापत्त्यादिनामन्तर्भावप्रकरणम्।
[3] न्या0सू0 भा0 2/2/2

उदयनस्तु अनुपलब्धेरनुमाने नान्तर्भावयति, अपितु प्रत्यक्षेऽन्तर्भावयति। तदुक्तं कुसुमाञ्जलौ-

**प्रतिपत्तेरपारोक्ष्याद् इन्द्रियस्यानुपक्षयात्।**
**अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः॥**[1] इति।

यथा भावप्रत्यक्षं प्रति इन्द्रियं कारणं तद्वत् अभावप्रत्यक्षेऽपि कारणं वक्तव्यम्। न हीन्द्रियं वक्तुं शक्यम्, प्राप्तेरेव ग्रहणात् तेन। न हीन्द्रियस्याभावेन सह प्राप्तिः = सन्निकर्षो वक्तुं शक्यम्। अतस्तत्कारणत्वेनानुपलब्धिरेव कारणं वक्तव्यम्। तत्र घटो नास्त्यतो नोपलभ्यते घटाभावज्ञानं प्रति घटस्यानुपलब्धिरेव कारणमिति पूर्वपक्षिणः कथनम्, तन्न भावस्य यथा ग्रहणन्तथा अभवस्याऽपि तेनैव ग्रहणम्, प्रदीपप्रकाशवत्। प्रदीपो यथा भावमभावञ्च द्वयमपि प्रदर्शयति, तद्वत् इन्द्रियमपीत्यर्थः। तथा चोक्तम्- या हि साक्षात्कारिणी प्रतीतिस्सेन्द्रिय-करणिका। यथा रूपादिप्रतीतिः, तथेह भूतले घटो नास्तीत्यपि।

ननु किमिदमुच्यते? इन्द्रियार्थसन्निकर्षजस्यैवेन्द्रियकत्वादभावेन सहेन्द्रियस्य सन्निकर्षा-स्वीकारात् कथमैन्द्रियकत्वमभावस्य? यद्यप्राप्तस्याऽप्यैन्द्रियकत्वन्तदा कुड्यादिव्यवहितस्यापि प्रत्यक्षत्वापत्तिः? प्राप्तेरेव ग्रहणमिन्द्रयैः। तत्रोच्यते- अभावस्याप्यैन्द्रियकत्वं वर्तते, अस्ति हि विशेष्यविशेषणभावसन्निकर्षस्तत्प्रत्यक्षे।

अन्यच्च **इह कुण्डे दधि** इति ज्ञानं हि विशेष्यविशेषणोभयविषयकं चाक्षुषं यथा, तथैव इह भूतले भूतले घढो नास्तीति घटाभावज्ञानं चाक्षुषमेव। न ह्येकं ज्ञानं विशेष्यांशे चाक्षुषं विशेषणांशे मानसमिति सम्भवेत्, प्रमाणभेदे प्रमीतिभेदावश्यम्भावात्। न चेदं विभिन्नज्ञानद्वयम्, तथाननुभावात्। तस्मात् ज्ञानैक्ये सिद्धे विशेष्यग्रहणावश्यकत्वेन चक्षुषैव विशेषणग्रहणमपि स्वीकर्तव्यमेव। एवञ्चानुपलब्धिरपि न प्रमाणान्तरम् इति।[2]

---

[1] उदयनाचार्यः, न्यायकुसुमाञ्जलिः 3/20
[2] उदयनाचार्यः, न्यायकुसुमाञ्जलिः 3/20

जयन्तोऽपि प्रत्यक्षे एवान्तर्भावयति- सत्यम्, अभावः प्रमेयमभ्युपगम्यते, प्रत्यक्षाद्यवसीयमानस्वरूपत्वात्तु न प्रमाणान्तरमात्मपरिच्छित्तये मृगयत इति।[1]

उद्योतकरवाचस्पतिमिश्रादिभिस्तु अनुमाने एवान्तर्भावः कृतः। मेघेषु सत्स्वपि कार्यानुत्पत्त्या कारणप्रतिबन्धकेन वायु-अभ्रसंयोगोऽनुमीयते, अतस्तस्य सामान्यतोदृष्ट एवान्तर्भावः, यत्र न कार्यकारणयोर्गम्यगमकभावस्तत्र सामान्यतोदृष्ट इति[2] तात्पर्य-टीकाकारः। सांख्यतत्त्वकौमुद्यान्तु प्रत्यक्षेऽन्तर्भावः प्रदर्शितो वाचस्पतिना- न हि भूतलस्य परिमाणविशेषात् कैवल्यलक्षणादन्यो घटाभावो नाम अर्थात् यथा घटविशिष्टस्य भूतलस्य ग्रहणमिन्द्रियेण भवति एवं कैवल्यलक्षणस्य भूतलस्यापि (घटाविशिष्टस्य भूतलस्याऽपीत्यर्थः) तेनैव ग्रहणमतो नातिरिक्तत्वमनुपलब्धेः। स्थलभेदेनोभयत्रापि अन्तर्भावस्समीचीन एव।[3] केशवमिश्रस्त्वेवमाह- नन्वभावाख्यमपि पृथक् प्रमाणं वर्तते। तत्कुतो नोच्यते? क्वोपयुज्यते तत्? अभावग्रहणाय। तथा च घटाद्यनुपलब्ध्या घटाभावो निश्चीयते। अतोऽभावप्रमाणेन घटाभावो गृह्यते। तत्समाधानं कुर्वन्नाह- यद्यत्र घटोऽभविष्यत्तर्हि भूतलमिवाद्राक्षद् इत्यादि-तर्कसहकारिणा अनुपलम्भसनाथेन प्रत्यक्षेणैव अभावग्रहणादिति।[4]

अभावस्यैन्द्रियकत्वमस्ति न वेति बहुविस्तरशः विचारयत्ययम्- अभावस्यैन्द्रियकत्वे एव प्रमाणान्तरत्वं निषेद्धुं शक्यते इति अभावस्यैन्द्रियकत्वं समर्थयत्ययम्। नन्वभावस्य कथमैन्द्रियकत्वम्? वस्तु प्राप्यप्रकाशकारित्वं हि तेषाम् (इन्द्रियाणां) स्वभावः। न ह्यभावेन सहेन्द्रियस्य संयोगसमवायौ सम्बद्धौ। द्रव्ययोरेव संयोग इति नियमात्। नापि समवायः, अयुतसिद्धपदार्थानामेव तथा स्वीकारात्। न च विशेष्यविशेषणभावः सम्बन्धः सम्भवति, कुतः? अस्य सम्बन्धत्वासम्भवात्। सम्बन्धो हि सम्बन्धिभ्यां भिन्न एक उभयाश्रितश्च भवति। न च तथास्त्ययं विशेष्यविशेषणभावः। विशेष्यविशेषणभावो न वस्तुभ्यो भिद्यते, वस्तुस्वरूपं

---

1 जयन्तभट्टः, न्यायमञ्जरी- प्रमाणसंख्याविचारकप्रकरणम्

2 वाचस्पतिमिश्रः, तात्पर्यटीका, प्रमाणचतुष्ट्यसिद्धिप्रकरणम्।

3 .........सांख्यतत्त्वकौमुदी, प्रमाणप्रकरणम्।

4 केशवमिश्रः, तर्कभाषा, अर्थापत्त्यादिनामन्तर्भावप्रकरणम्।

हि तत्, अतो विशेष्यविशेषणभावो न सम्बन्धः, तस्मात् सम्बन्धाभावात् नैन्द्रियकत्वमभावस्य। अतोऽभावप्रत्यक्षं प्रति अनुपलब्धेः कारणत्वं वक्तव्यमिति। तत्रायं प्रष्टव्यः- अनुपलब्धेरतिरिक्तप्रमाणत्वस्वीकारे भवतापि कश्चन सम्बन्धो वक्तव्यो न वा? सम्बन्धमन्तरा न हि प्रमाणं प्रमेयं प्रकाशयति, न हि संयोगसमवायौ भवतोच्यते, विशेष्यविशेषणभाव इत्येव वक्तव्यः। तथा च विशेष्यविशेषणभावसम्बन्धेनैवेन्द्रियेणाभावग्रहणसम्भवे किमर्थं प्रमाणान्तरकल्पनेति।[1]

अभावस्य प्रमाणत्वं स्वीकृत्य प्रमाणान्तरत्वमेव निषिध्यते भवता, तच्च न संभवति। कुतः? अभावस्य प्रमाणत्वमेव नास्ति, विषयाभावात्। यदविषयन्तदप्रमाणम्। तथा चाह गौतमः- '**नाभावप्रामाण्यं प्रमेयसिद्धेः**'' इति।[2] अभावनामकं प्रमाणन्तदा स्यात्, यदि तस्य प्रमेयं सिद्ध्येत् तदेव नास्ति। कुतः? अभावस्य तुच्छत्वात्। अतस्तत्र न प्रमाणप्रवृत्तिरिति भावः। वाचस्पतिस्तु एवं वदति नाभावज्ञानं प्रमाणम्। कस्मात्? प्रमेयस्याभावस्यासिद्धेः इति[3]।

ननु अभावप्रमाणं प्रति भावस्य प्रमेयत्वं पूर्वमेवोक्तं कथमिदानीं प्रमेयासिद्धेरित्युच्यते। इति चेत् न- प्रमाणत्वेनाभ्युपगतस्याभावस्य प्रमेयत्वासिद्धेरिति तात्पर्यादयं प्रश्नः। अभावस्य तुच्छत्वात् न कस्यापि ज्ञानविषयो भवितुमर्हतीत्यर्थः। तुच्छत्वे तस्य ज्ञानविषयत्वाभावः, तथा च तादृशस्य प्रमाणत्वमपि न संगच्छते इति तात्पर्यम्।

अभावव्यवहारस्तर्हि कथम्? तस्य तुच्छत्वात्, गमनकुसुमवत्। यदि व्यवहारविषयत्वात् प्रमेयत्वमेव तस्य, तर्हि घटादिवत् स्यात् किन्तु तथा न भवितुमर्हतीति अतः केवलं काल्पनिकोऽयमभावव्यवहार इति पूर्वपक्षः। तत्र सङ्गच्छते- सर्वजनीनाभावप्रत्ययव्यवहारौ न काल्पनिकौ भवितुमर्हतः। नो चेत् विषयाणामपि काल्पनिकत्वं स्यात्, विशेषहेत्वाभावात्। अभावो न तुच्छ इत्यर्थः, अतुच्छत्वे प्रमेयत्वमपि

---

[1] केशवमिश्रः, तर्कभाष, अर्थापत्त्यादिनामन्तर्भावप्रकरणम्।

[2] न्यायसूत्रम् 2/2/7

[3] वाचस्पतिमिश्रः, तात्पर्यटीका, प्रमाणचतुष्टयसिद्धिप्रकरणम्।

सिद्ध्यति। कस्य प्रमेयो भवति? अभावज्ञानस्य। तदेव कदाचित् भावज्ञानं प्रति प्रमाणमपि भवति। तत्तु पूर्वमुक्तमेव- कार्याभावज्ञानेन करणप्रतिबन्धकत्वेन वायु-अभ्रसंयोगस्य ज्ञानमिति। तच्चानुमानरूपमिति ज्ञेयम्।

## सम्भवप्रमाणसमीक्षा

नैयायिकाः सम्भवाख्यं पराभिमतं प्रमाणमपि अनुमाने एव अन्तर्भावयन्ति। तदुक्तं न्यायभाष्यकारेण- अविनाभाववृत्त्या च संबद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवः, तदप्यनुमानमेव इति[1]। तत्राह वाचस्पतिः- सम्भवस्तु यथा खार्यां द्रोणढकप्रस्थाद्यवगमः, स चानुमानमेव। खारित्वं हि द्रोणाद्यविनाभूतं प्रतीतम्, खार्यां द्रोणादि-सत्त्वमवगमयतीति[2]। वार्तिककारेण तु अर्थापत्तेस्समिचिन्या युक्त्यानुमानेऽन्तर्भावकृत्य एतेन सम्भवाऽभावौ व्याख्यातौ इत्युक्तम्। सम्भवोऽनुमानम्, अभावोऽपि अनुमानमेवेत्यर्थः इति[3]। जयन्तेनापि संभवस्यानुमान एवान्तर्भावः कृतः- भिन्नस्सम्भव एष न ह्यनुमितेः पाख्यायि खार्यां खलु द्रोणस्संभवतीति सेयमविनाभावात् मतिः लैङ्गिकी।।इति[4]।।

## ऐतिह्यप्रमाणसमीक्षा

ऐतिह्यस्यापि प्रमाणान्तरत्वं न स्वीक्रियते नैयायिकैः। तथा च ऐतिह्यमपि न प्रमाणान्तरम्, तच्च **आप्तोपदेशश्शब्दः** इति शब्दलक्षणन्न भिन्नं भवति। इति होचुरित्यनिर्दिष्टप्रर्वृकं हि तत्। तदुक्तं भाष्यकारेण- **आप्तोपदेशः शब्दः** इति, न च शब्दलक्षणम् ऐतिह्याद् व्यावर्तते। सोऽयं भेदः सामान्यात् संगृह्यते इति[5]।

वार्तिककारस्यापि सम्मतमिदम्। तथा चोक्तम्- तान्यैतिह्यादीनि एवम्भूतानि लक्षणभेदा-देतेश्वन्तर्भवन्तीति न पृथगुच्यन्ते। न प्रत्यक्षादिप्रमाणव्यतिरेकेण विषया ऐतिह्यादीनां

---

[1] वात्स्यायनः, न्यायभाष्यम् (न्या0सू0 2/2/2)
[2] वाचस्पतिमिश्रः, न्यायवार्तिकतात्पर्यटीका (न्या0सू0 2/2/2)
[3] उद्योतकरः? न्यायवार्तिकम् (न्या0सू0 2/2/2)
[4] जयन्तभट्टः, न्यायमञ्जरी, प्रमाणसंख्याविचारप्रकरणम्
[5] वात्स्यायनः, न्यायभाष्यम् (न्या0सू0 2/2/2)

सम्भवन्त्यश्च न प्रमाणान्तराणि। प्रयोजनभेदेन भिद्यन्त इति तु न वक्तव्यम्, यथैकं चक्षुरनेकनीलादिभिन्नरूपग्रहणप्रयोजनम्। यदि प्रयोजनभेदाद् भेदस्तर्हि इन्द्रियमनेकं प्राप्नोति। एवञ्च सोऽयं भेदः सामान्यात्। न तावत् सन्ति तादृशाः प्रयोजनसामान्यविशेषाः। यैः प्रयोजनवन्ति प्रमाणानि परस्परतो व्यावर्तयेयुरिति[1]।

तात्पर्यकारेणापि शब्द एवान्तर्भावः कृतः- न तत् प्रमाणम्, अनिर्द्रष्टप्रवक्तृकत्वेन सांशयिकत्वात्। आप्तवक्तृत्वनिश्चये तु आगम एव, तथा चोपपन्नः प्रमाणचतुष्टयनिर्देशः इति[2]। जयन्तेनापि शब्द एवान्तर्भाव कृतः- सत्यमपि चागमात् पृथङ्नैतिह्यमिति[3]।।

[1] उद्योतकरः, न्यायवार्त्तिकम् (न्या०सू० 2/2/2)

[2] वाचस्पतिमिश्रः, न्यायवार्त्तिकतात्पर्यटीका (न्या०सू० 2/2/2)

[3] जयन्तभट्टः, न्यायमञ्जरी, प्रमाणसंख्याविचारप्रकरणम्।

## ( घ ) प्रमास्वरूपं

यतः प्रमाणलक्षणस्य प्रमा प्रमात्मकज्ञाननिरूपणाधीनतया प्रमाणलक्षणात्पूर्वं प्रमालक्षणस्य परिज्ञानमावश्यकम्। अतः भिन्न-भिन्न दर्शनसिद्धं प्रमालक्षणमुपपाद्य न्यायमत-सिद्धं प्रमालक्षणमिदानीं विविच्यते।[1]

**न्यायसूत्रप्रदर्शितं प्रमालक्षणम्- प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्क-निर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां-** तत्वज्ञानान्निः-श्रेयसाधिगमः' इति प्रथमन्यायसूत्रेण तत्वज्ञानस्य निःश्रेयसोपायत्वमुक्त्वा निःश्रेयसप्रकारप्रतिपादनपरे **'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः**[2] इति द्वितीयसूत्रे तत्वज्ञानस्य मिथ्याज्ञाननिवर्तकत्वकथनेन तत्वज्ञानं प्रमा इति सूत्रकार मन्यते। मिथ्याज्ञानञ्च भ्रमः। तन्निवर्तकञ्च ज्ञानं प्रमा, तां तत्वज्ञानपदेन व्यवहरन् सूत्रकारः याथार्थ्यं प्रमालक्षणघटकमभ्युपयति। अत्र तस्य भावः तत्वं, तत्वस्य ज्ञानं तत्वज्ञानम्। **विशेष्यवृत्तिप्रकारविषयकं ज्ञानमेव प्रमा** इति लभ्यते।

अत्रेयमाशंका जायते यत्विशेष्यवृत्तिप्रकारविषयकज्ञानत्वस्य स्मृतावपि विद्यमानतया स्मृतेरपि प्रमात्वं स्यात्। ज्ञानपदस्यैव सूत्रे प्रयुक्तत्वेन स्मृतेरपि तत्वज्ञानत्वापत्तिरिति वक्तुं न शक्यते। यतो हि व्यवहाराधीनमेव प्रमात्वस्य निश्चयो जायते। आचार्यैः स्मृतिकारणीभूतानां पदार्थानां प्रमाणत्वेन व्यवहारं न कृतवन्तः। अतः **''स्मृतिर्न प्रमा''** एष एव सिद्धान्तः तिष्ठति। एवञ्च स्मृतेरप्रमात्वेन तत्र तत्वज्ञानत्वसत्वे प्रमालक्षणस्यातिव्याप्तिः स्यात्। इत्यत्र इत्थं प्रकारेण समाधेयं यत् तत्वज्ञानघटकज्ञानपदमनुभवपरमिति सूत्रकाराभितम्। अतः सूत्रकारीयप्रमालक्षणस्य नातिव्याप्तिः।

---

[1] न्या0सू0 1/1/11

[2] न्या0सू0 1/1/2

**भाष्याभिमतं प्रमालक्षणम्-** तृतीयसूत्रस्य भाष्ये **"उपलब्धिसाधनानि प्रमाणानीति समाख्या निवर्चनसामर्थ्यात् बोधव्यं"**[1] इति वदन् वात्स्यायन उपलब्धिः प्रमा इति सूचयति। **"बुद्धिरूपलब्धिर्ज्ञानमित्यनर्थान्तरम्"**[2] इति न्यायसूत्रानुसारेणोपलब्धिपदस्य ज्ञानार्थकत्वं लभ्यते। **निर्विषयकज्ञानस्यासम्भवादर्थविषयकज्ञानत्वमेव प्रमात्वमिति** लक्षणमुक्तभाष्यतो लभ्यते। अतएवोक्तं प्रथमसूत्रभाष्ये **"यत्तदर्थविज्ञानं सा प्रमितिः"**[3] इति। वार्तिककारेणापि **"उपलब्धिहेतुः प्रमाणम्"**[4] इति वदता अर्थविषयकज्ञानत्वमेव प्रमात्वमित्येवं लक्षणं प्रतिपादितम्।

**वाचस्पतिमिश्राभिमतं प्रमालक्षणम्-**

यदि अर्थविषयकज्ञानत्वमेव प्रमालक्षणमुच्यते चेत् तदा अयथार्थानुभवे स्मृतौ च अतिव्याप्तिः स्यात्। इत्येवं विचार्य वाचस्पतिमिश्रेण अर्थाव्यभिचारिस्मृतिभिन्नं ज्ञानं प्रमा इति प्रमायाः लक्षणं प्रतिपादितम्। ज्ञानस्यार्थाव्यभिचारित्वञ्च यथावस्थितार्थविषयकत्वम्। एवञ्च यथावस्थितार्थविषयकं ज्ञानं प्रमा। उक्तञ्च- **"लोकाधीनावधारणो हि शब्दार्थसम्बन्धः। लोकश्च स्मृतेरन्यामुपलब्धिमर्थाव्यभिचारिणीं प्रमामाचष्टे इति।"**[5]

**"इयमेव चार्थाव्यभिचारिता प्रमाणस्य यद्देशकालान्तरावस्थान्तरा विशंवादोऽर्थस्वरूपप्रकारयोस्तदुपदर्शितयोः।"**[6] इति च।

**"अव्यभिचारस्वरूपन्तु भूतार्थपरिच्छेदकत्वम्"**[7] इत्याहुः उदयनाचार्याः। किञ्च दुःखजन्मसूत्रस्य भाष्ये अतस्मिंस्तदिति ज्ञानमित्यनेकविधोदाहरणप्रदर्शनपुरस्सरं प्रतिपाद्य

---

[1] न्या0सू0, पृ0 182
[2] न्या0सू0 1/1/15
[3] न्या0वार्तिक पृ0 1
[4] न्या0वार्तिक पृ0 1
[5] न्या0वार्तिकतात्पर्यटीका- वाचस्पति मिश्रः, पृ0सं0 24, 35
[6] न्या0 वार्तिकतात्पर्यटीका- वाचस्पति मिश्रः, पृ0सं0 24, 35
[7] न्या0 वार्तिकतात्पर्यटीका परिशुद्धिः उदयनाचार्यः, पृ0सं0 81

**"तत्वज्ञानन्तु मिथ्याज्ञानविपर्ययेण व्याख्यातम्।"**[1] इत्यवदत्। तत्रैव वार्तिके **"स्वरूपतस्तु यथावस्थितपदार्थाधिगतिः"**[2] इति तत्वज्ञानलक्षणं प्रतिपादितम्। येन प्रकारेण पदार्थस्य वृत्तिता भवति तत्प्रकारविशिष्टत्वेन तज्ज्ञानमेव तत्वज्ञानम्। अत्रापि स्मृतावतिप्रसङ्गवारणायाधिगतपदमनुभवपरत्वेन व्याख्यातम्।

**भासर्वज्ञाभिमतं प्रमात्वम्-**

न्यायसारे **"सम्यगनुभवसाधनं प्रमाणं"**[3] इत्येवं प्रमाणलक्षणं प्रदर्शितम्। एतद्वाक्येन 'सम्यगनुभवः प्रमा' इति प्रमालक्षणं ज्ञापितं भवति। तत्र सम्यक् चासौ अनुभवश्च इति सम्यगनुभवः। **"अनुभवे सम्यक्त्वञ्च तथाभूतार्थनिश्चयस्वभावत्वं"**[4] इत्येवं न्यायभूषणे प्रतिपादितम्। **"अनुभवे विशेष्यभूतार्थयत्प्रकारेण विशिष्टो भवति, तत्प्रकारविशिष्टतद्विशेष्यकानुभवः प्रमा इति प्रमालक्षणं"**[5] भासर्वज्ञाभिमतम्।

**लक्षणावलीग्रन्थाभिमतं प्रमात्वम्-** सूत्रस्थ तत्वज्ञानशब्दस्य स्थाने **"तत्वानुभूति-पदमदिव्य, तत्वानुभूतिः प्रमा"**[6] इति प्रमालक्षणं लक्षणावल्यां प्रदर्शितम्। एतदेव प्रमालक्षणं शिवादित्यमिश्रेणापि सप्त पदार्थाः विवेचिताः। इत्थं प्रकारेण प्रमालक्षणे कृते सति स्मृतौ नातिव्याप्तिः।

**जयन्तभट्टाभिमतप्रमात्वलक्षणविवेचनम्-** जयन्तभट्टविरचितन्यायमञ्जर्यामित्थमुक्तं- **"कर्तृकर्मविलक्षणा संशयविपर्ययरहितार्थबोधविधायिनी बोधाबोधस्वभावासामग्री प्रमाणमिति"**[7] इदं प्रमाणलक्षणम्। एतदनुसारमित्थं प्रमालक्षणं सम्पद्यते। यत्संशयभिन्नः

---

[1] न्यायभाष्य, पृ0 151
[2] न्यायवार्तिक, पृ0 154
[3] न्यायसार, भासर्वज्ञ, पृ0 11
[4] न्यायभूषण, पृ0 12
[5] न्यायसार, भासर्वज्ञ
[6] लक्षणावली- उदयनाचार्य
[7] न्या0 मञ्जरी, जयन्तभट्ट, पृ0 14

विपर्ययभिन्नश्च अर्थबोधः स एव प्रमा इति। अत्र रहितशब्दः भिन्नार्थकः, परन्तु इत्थं प्रकारेण लक्षण निरूपणे तर्के अतिव्याप्तिः स्यात्। तर्कश्च अप्रमात्मकत्वेन अलक्ष्यः, तत्र संशयविपर्ययभिन्नत्वे सति अर्थविषयकज्ञानत्वस्य विद्यमानत्वादतिव्याप्तिः स्यात्। एवं स्मृतावपि उक्तलक्षणस्य विद्यमानत्वेनातिव्याप्तिः स्यात्। जयन्तभट्टैरेव चाव्यभिचारिणी-मसंदिग्धां अर्थोपलब्धिविदधतीं बोधाबोधस्वभावासामग्रीं प्रमाणमित्यपि निगदितम्। अतः **'अव्यभिचारिणी संशयभिन्नाः चार्थोपलब्धि प्रमा'** इति लक्षणं बोधितम् भवति। अव्यभिचारिणीत्यस्यातस्मिंस्तदवगाहिभिन्ना, अर्थात् तस्मिंस्तदवगाहिनीत्येवमर्थः। तथा च भाष्यं **''यदतस्मिंस्तदिति तद्व्यभिचारि, यत्तु तस्मिंस्तदव्यभिचारि''**[1] इति एवञ्चाव्यभिचारि-पदेन विपर्ययतर्कयोर्द्वयोरपि वारणम्, परन्तु अतस्मिंस्तदिति लक्षणेपि स्मृतावतिव्याप्ति-दुष्परिहरा। **''बुद्धिरूपलब्धिर्ज्ञानमित्यनर्थान्तरमिति''** सूत्रेणोपलब्धिपदस्य ज्ञानसामान्य-वाचकत्वेन स्मृतिसाधारणत्वादिति।

**तात्पर्यटीकापरिशुद्धिगतप्रमालक्षणस्य परीक्षणम्-**

परिशुद्धौ **''उदयनाचार्येण प्रमा चाविपरीतोपलब्धिः''**[2] इत्येवं लक्षणं प्रदर्शितम्। एतल्लक्षणघटकोपलब्धिशब्दः अनुभवपरः। तथा चाभिपरीतानुभवः प्रमेति प्रमालक्षणं निष्पद्यते। अत एव एतदनन्तरं तत्रैव प्रकरणे **''अतोऽविपरीतानुभवजनकत्व-स्वरूपमव्यभिचारित्वमेव प्रमाणमित्यर्थः''**[3] इति पंक्तिर्दृश्यते। अविपरीतः इत्यस्य भ्रमभिन्न इत्येवमर्थः, परन्तु धर्म्यंशे प्रमात्मके भ्रमे भ्रमभिन्नत्वाभावादव्याप्तिदोषः स्फुरितो भवति। अत्र कल्पे।

---

[1] न्या०भा०, पृ० 198

[2] तात्पर्यटीकापरिशुद्धिः,पृ० 79

[3] ता०टी०प०

**कुसुमाञ्जल्युक्तं प्रमालक्षणम्-**

उदयनाचार्याः न्यायकुसुमाञ्जलिग्रन्थे **''यथार्थानुभवो मानमनपेक्षतयेस्यते''**[1] इति कारिकांशेन यथार्थानुभवत्वं प्रमात्वमिति प्रतिपादितवान्। तथैव **''मितिः सम्यक्परि-च्छित्तिः''**[2] इत्यनेन सम्यगनुभवत्वं प्रमात्वमिति प्रमालक्षणं तेनैवोक्तम्। अनुभवपदोपादानेन स्मृतेः प्रमात्वनिरासः। परन्तु किमिदं यथार्थत्वं सम्यक्त्वं वा अनुभवस्येति जिज्ञासा जायते। तत्र कुसुमाञ्जलिकाराणां एष आशयः, यत्र यद्विविद्यते तत्र तद्विषयकत्वमेव यथार्थत्वं भवति। तथाहि भ्रान्तिव्याख्यानावसरे कुसुमाञ्जलौ एवं प्रदर्शिता। **''यत्र यन्नास्ति तत्र तस्यावगतिरिति भ्रान्त्यर्थत्वात्''**[3] इत्यवोचत्। तद्ग्रन्थस्य 'प्रकाश'नामकव्याख्यायां वर्धमानोपाध्यायैः **''एतेन यत्संयत्रास्ति तत्र तज्ज्ञानं प्रमेत्यपि निरुक्तम्''**[4] इत्येवं ग्रन्थकाराशयः प्रकटीकृतः। इत्येवं च तद्वति तत्प्रकारकानुभवत्वं प्रमात्वमित्येवमाचार्याभिमतं निकृष्टं प्रमालक्षणं बोधितं भवति। अत्र यथार्थानुभव इत्यस्य **'यथाभूतः योऽर्थः तथा तदनुभवः'** इत्यर्थः। अर्थो यत्प्रकारकविशिष्टस्तत्प्रकारविशिष्टत्वेन तस्यार्थस्यानुभवयथार्थानुभव-पदेन विवक्षितः। तेन यत्र यद्विद्यते तत्र तद्विषयकाऽनुभव इत्याकारकाऽर्थः लभ्यते इति कुसुमाञ्जलिकाराणां हृदयम्। इदमेव च लक्षणं चिन्तामणिकारैः सिद्धान्तत्वेन स्वीकृतमस्ति।

**वैशेषिकाभिमतप्रमालक्षणम्-** काणाददर्शने तु विद्यैव प्रमात्मकं ज्ञानम्। अप्रमात्मकं ज्ञानञ्चाविद्यापदेन व्यपदेश्यं भवति। तत्र **''इन्द्रियदोषात् संस्कारदोषाच्चाविद्या''**[5] इत्यनेन सूत्रेण दोषजन्यं ज्ञानमविद्या इति अविद्याया लक्षणं निरूप्य तस्या अविद्यायाः **''तद्दुष्टज्ञानम्''**[6] **इत्यपरसूत्रेण दुष्टज्ञानपदेन व्यपदेशं कृत्वा अदुष्टं विद्या''**[7] इति सूत्रेण दोषजन्यज्ञानत्वं विद्यायाः लक्षणमिति ज्ञापितं भवति।

---

[1] न्या0कु0, 4/1
[2] न्या0कु0 4/5
[3] न्या0कु0 (स्तवक-4)
[4] न्या0कु0 (स्तवक-4)
[5] वै0सू0- 9/2/10
[6] वै0सू0- 9/2/11
[7] वै0सू0- 9/2/12

इदानीं दर्शनानन्तराभिमतानि प्रमालक्षणानि विचिन्त्यन्ते।

**भाट्टाभिमतं प्रमालक्षणम्-** पूर्वमीमांसासूत्रकर्तृभिः **''चोदनाधर्मे प्रमाणमित्यत्र अव्यतिरेकोर्थस्यानुपलब्धत्वं संकेतकर्तृपुरुषनिरपेक्षक इति त्रयो हेतवः'' ''अव्यतिरेकस्वार्थेनुपलब्धे तत्प्रमाणं वादरायणस्थानपेक्षत्वात्''**[1] इति सूत्रेणाभिहिता। तत्राव्यतिरेको नाम अबाध्यत्वम्। अर्थस्यानुपलब्धत्वं प्रमाणान्तरेण ज्ञातत्वम्। अनपेक्षत्वञ्च भ्रमविप्रलिप्सादिस्वरूपकारणदोषरहितत्वं। तथा च कारणदोषबाधकज्ञानरहितमज्ञातविषयकं ज्ञानं प्रमेति सूत्रसूचितं प्रमालक्षणम्। तत्र प्रथमविशेषणेन भ्रमसंशययोर्निराकरणम्। द्वितीय-दलविशेषणप्रवेशेन च स्मृतेर्व्यावृत्तिः। इदमेव लक्षणं मनसि निधाय, श्लोकवार्तिके इत्थं प्रतिपादितम्। तथाहि-

**तस्मात् दृढं यदुत्पन्नं न च संवादमृच्छति।**
**ज्ञानान्तरेण तज्ज्ञानं प्रमाणमिति मीयताम्।।'**[2] इति।

श्लोके समागतः प्रमाणशब्दभावार्थकल्युङन्तः प्रमाबोधकः।

एतद् प्रमाणलक्षणं वाचस्पतिमिश्रेण तात्पर्यटीकायामित्थं प्रकारेण निराकृतम्। अज्ञातार्थविषयकत्वं प्रमालक्षणे निवेशयितुं नहि शक्यते। धारावाहिकज्ञानेषु द्वितीयादिज्ञानानां पूर्वपरिज्ञातार्थविषयकत्वेनाव्याप्तिप्रसङ्गात्। यदि च पूर्व-पूर्वज्ञानाविषयीभूतक्षणविशेष-विषयकत्वेन एषामपि प्रमात्वमव्याहतमेव भवति। तथापि अत्यन्तसूक्ष्माणां कालकलाभेदानां मांसलोचनैः ग्रहितुमशक्यत्वात्। क्षणस्यातीन्द्रियत्वेन प्रत्यक्षविषयत्वासम्भवादिति टीकाकृद-भिमतं निराकरणम्।

भाट्टाभिमतप्रमालक्षणस्योदयनाचार्येण इत्थं प्रकारेण खण्डनं कृतम्। भाट्टाभिमतस्य प्रमालक्षणस्य धारावाहिकद्वितीयादिज्ञानेषु जायमानानामव्याप्तिमुपपाद्य दोषान्तरमपि कुसुमाञ्जलिकारैः प्रतिपादितम्। तथाहि अनादिसंसारे **'स्वर्गकामो यजेत'** इत्यादि

---

[1] मी0सू0- 1/1/5
[2] श्लो0वा0, पृ0 66

श्रुतिवाक्यार्थानां यदाकदाचिदेकैकेनापि पूर्वं गृहीतत्वस्याऽवश्यकतया तद्विषयकबोधस्य कदाप्यगृहीतग्राहकत्वरूपं प्रमात्वं न सम्भवति। यदि च प्रकृतजन्मावच्छेदेनाऽगृहीतार्थग्राहित्वं प्रमात्वमुच्यते तथा च जन्मान्तरे ज्ञातत्वेऽपि प्रकृतजन्मान्यज्ञातत्वाद् भवति दोषपरिहारस्तथापि येन पुरुषेण एकस्मिन्नेव जन्मनि वेदार्थो ज्ञातो विस्मृतश्च पुनः श्रुतः तत्र पुनः श्रवणात्मकान्वयबोधस्य ज्ञातविषयकतयाऽज्ञातविषयकत्वं तत्र ज्ञाने प्रतिपादयितुं न शक्यते। इति प्रमालक्षणस्य तादृशज्ञानाव्याप्तेर्दुष्परिहरत्वं स्यादेव।

**प्राभाकराभिमतप्रमालक्षणस्य समीक्षणम्- "अनुभूतिः प्रमाणं सा स्मृतेरन्या"**[1] इत्याहुः प्रकरणपञ्चिकाकाराः। अनुभवत्वं प्रमायाः लक्षणम्। अनुभवत्वञ्च स्मृतिभिन्नज्ञानत्वम्। न च एतादृशलक्षणस्य भ्रमेऽपि विद्यमानत्वादतिव्याप्तिरिति वाच्यम्। शुक्तिरजतादिभ्रमस्थले नहि एकं विज्ञानम्, किन्तु तत्र द्वे ज्ञाने ग्रहणस्मरणात्मकम्। तत्र रजतमिति ज्ञानं स्मरणात्मकं, तस्याऽनुभवात्मकत्वाभावाद् न हि तस्य प्रमात्वप्रसङ्गः। इदमिति ज्ञानन्तु अनुभवात्मकम्। अतस्तस्य प्रमात्वमभिमतमेवेति न हि कस्यापि दोषस्य प्रसङ्गः। इत्येवं प्रभाकरमतानुयायिभिः प्रतिपादितम्, लक्षणमिदं न साधु। अनुवादकवाक्यजन्यज्ञानस्याप्यनुभवरूपत्वात् प्रमात्व-प्रसक्त्या तादृशज्ञानजनकानामनुवादवाक्यानां प्रामाण्यापद्येत। अतो नैतल्लक्षणं साधुतां भजते। इति शास्त्रदीपिकाकाराः वदन्ति। किञ्च प्राभाकरमते सर्वेष्वपि ज्ञानेषु ज्ञानं ज्ञाता विषयश्च तृतयं भासते। तत्र च ज्ञातृज्ञानांशयोः प्रमात्वं प्रत्यक्षत्वञ्चाभ्युपेयते। तदुक्तं प्रकरणपञ्चिकायां-

**सर्वविज्ञानहेतूत्थामितौ मातरि च प्रमा**
**साक्षात् कर्तृत्वसामान्यात् प्रत्यक्षत्वेन सम्मता।।**[2] इति।

तथा च स्मृतेरपि तृतयविषयकतया तत्र स्वांशे ज्ञात्रंशे च प्रमात्वं इष्टं न सिद्ध्येत्। स्मृतेरनुभवरूपत्वाभावात्। इत्यव्याप्तिदोषोऽपि अनुभूतिः प्रमा इति पक्षश्चिन्तनीयः।

[1] प्रकरणपञ्चिका, पृ० 104
[2] प्रकरणपञ्चिका, पृ० 104

**बौद्धाभिमतप्रमात्वसमीक्षणम्-**

**''प्रमाणमविसंवादि ज्ञानमर्थकक्रियास्थितिः। अविसंवादन....''**[1] इत्यनेन धर्मकीर्तिप्रणीतप्रमाणवार्तिकग्रन्थेनाविसंवादिज्ञानं प्रमा इति प्रमालक्षणं प्रदर्शितम्। ज्ञानस्याविसंवादित्वञ्चार्थ क्रियावस्तु प्रापकत्वम्। **येन ज्ञानेन यथाभूतं वस्तुप्रदर्शितं प्रवृत्तोऽपि यदि यथाभूतमेव प्रतिलभते तदा तदविसंवादिज्ञानं प्रमा** भवति। तथा च वस्तुप्रापकप्रवृत्तिजनकज्ञानत्वं प्रमात्वमिति लभ्यते।

परन्तु स्मृतावपि तादृशज्ञानत्वस्य विद्यमानत्वादस्मिन् लक्षणे अव्याप्तिदोषः प्रसज्यते। तन्निरासायानधिगतार्थविषयकत्वं यदि विशेषणं दीयते तदा धारावाहिकद्वितीयादिज्ञाने अव्याप्तिः। किञ्च प्रत्यक्षज्ञानेनोपदर्शितस्य वस्तुनः क्षणिकत्वेनातिक्रान्तत्वात् तत्प्राप्तिर्न हि सम्भवति। इति स्वप्रदर्शितवस्तुप्राकत्वं प्रत्यक्षस्य कथं स्यात्? इत्यनुपपत्तिः। एतन्मते भवति।

अपितु अर्थप्रापकं ज्ञानं प्रमा चेत् भूतभविष्यकानुमितेरर्थप्रापकत्वाभावादप्रमात्वमापद्येत। स्मरणस्यापि क्वचित्स्थले अर्थप्रापकत्वादतिव्याप्तिस्यात्। किञ्च मणिप्रमायां मणिबुद्ध्या भावन् तत्र मणिं प्राप्नोति। मणिप्रमाया मणिबुद्धिश्चान्यथाज्ञानत्वादप्रमा। तत्राप्यर्थप्रापकत्वस्य विद्यमानत्वात् प्रमात्वापत्तिरित्यादि दोषं मनसि निधाय लक्षणमिदं नैयायिकैः उपेक्षितम्। यथाहुः-

**मणिप्रदीपप्रमयोर्मणिबुद्ध्याभिधावतोः**
**मिथ्याज्ञानाविशेषेऽपिविशेषोऽर्थक्रियां प्रति।।** इति।

**सांख्याभिमतप्रमात्वसमीक्षणम्ः-** त्रिविधं प्रमाणमिष्टमिति सांख्यकारिकाविवेचनावसरे तत्वकौमुदीकाराः **''असंदिग्धाविपरीतानधिगतविषया चित्तवृत्तिः प्रमा''**[2] इत्युक्तम्। असंदिग्धपदेन संशयस्याऽविपरीतपदेन च भ्रम विकल्पयोरनधिगतपदेन च स्मृतेः प्रमात्वनिरासः। तथा च **''संशयविपर्ययविकल्पस्मृतिरूपचित्तवृत्तिभिन्ना चित्तवृत्तिः प्रमा''**

---

[1] प्रमाणवार्तिकम्, श्लो0 3
[2] सां0त0कौ0, का0-4

इति प्रमाणलक्षणं सांख्याचार्याणामभिमतम्। चित्तपरिणामात्मिकाया वृत्तेरप्रमाणिकत्वाद् नैतत्प्रमालक्षणं समीचीनं भवति। एष विचारो न्यायमञ्जर्यां दृश्यते।

**जैनाभिमतप्रमालक्षणसमीक्षणम्- "स्वानुपूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणं"** इत्येवं प्रमाणलक्षणं परीक्षामुखपत्रस्थसूत्रेणानभिगतार्थविषयकनिश्चयात्मकज्ञानत्वं प्रमायाः लक्षणम् ज्ञापितं भवति। अत्रापि धरावाहिकज्ञानादिषु अव्याप्तिर्दुष्परिहरा। अत इदमपि लक्षणं साधु पथं नावरोहति।

**अद्वैताभिमतप्रमात्वपरिशीलनम्-** वेदान्तपरिभाषायां **"स्मृतिव्यावृत्तं प्रमात्वमनधिगताबाधितार्थविषयकज्ञानत्वम्। स्मृतिसाधारणन्तु अबाधितार्थविषयकज्ञानत्वं"**[1] इत्येवं प्रमात्वं प्रतिपादितम्। तत्र धारावाहिकज्ञाने क्षणविशेषस्य पूर्वज्ञानागृहीतस्य विषयिकरणादनधिगतविषयकत्वं धारावाहिकज्ञानस्य प्रतिपादितम्। वस्तुतस्तु धारावाहिकज्ञाने ज्ञानभेदः न स्वीक्रियते किन्तु यावत्धरस्फुरणं एकमेव ज्ञानं, अतो नहि धारावाहिकज्ञाने अव्याप्तिसम्भावना इति तत्र समाधानान्तरमपि प्रदर्शितम्। अत्र नीरूपस्य क्षणस्य कथं चाक्षुषज्ञानविषयत्वम्? इत्याकारकशंकायां नीरूपस्य रूपस्येव, नीरूपस्य क्षणस्यापि चाक्षुषत्वं सम्भवति इति समाधानमपि तत्र प्रदर्शितम्।

अत्रेदं चिन्तनीयं द्रव्यनिष्ठलौकिकविषयतासम्बन्धेन चाक्षुषं प्रत्येव रूपस्य कारणत्वं नैयायिका अभ्युपगच्छन्ति। रूपन्तु गुणो इतस्तत्चाक्षुषे रूपस्य कारणत्वात् नीरूपः कालः प्रत्यक्षविषयो न भवितुमर्हति इति नैयायिककृताक्षेपस्य परिभाषाग्रन्थतः तद्व्याख्यानतो वा समाधानं न हि लभ्यते।

**विशिष्टाद्वैतवेदान्तदिशा प्रमात्वविवेचनम्-** विशिष्टाद्वैतमतानुयायिनस्तु सर्वं विज्ञानं यथार्थमेव इत्यभ्युपगच्छन्ति। शुक्तिरजतादिज्ञानमपि शुक्तिकायां रजतावयवानामपि विद्यमानत्वात्। विद्यमानरजतविषयकत्वेन तस्यापि यथार्थत्वमेव इत्येवं वदन्ति। अनया रीत्या

---

[1] परीक्षामुखसूत्रम्- 1/1

सर्वस्य ज्ञानस्य यथार्थत्वेऽपि प्रमाप्रमाचेतीति ज्ञानस्य यो हि विभागः, तं नापलपन्ति। तदुक्तं वेदान्तदेशिकैः-

**"सर्वं ज्ञानं नमानं परमतविजयान्नाप्रमाणं स्वबाधात्**
**मानामानव्यवस्था तदीयमनुमता लौकिकैर्यौक्तिकैश्च इति।"[1]**

तर्हि सर्वज्ञानयाथार्थ्यवादिनां भवतां मते प्रमाप्रमाविभागः किन्निमित्तकः? के वा प्रमाप्रमयोर्लक्षणे? इति शंकायां तत्वमुक्ताकलापे-

**"नाथैरुक्ता यथार्थाविमतमतिरिति न्यायतत्वे तदेतत्**
**भाष्येणोक्तं तदत्र व्यवरितिरुभयी बाधिताबाधिताख्या।"[2]**

इति समाहितम्।

अस्यायमाशयः न्यायतत्वसंज्ञके ग्रन्थे नाथमुनिभिः शुक्तिरजतादिबुद्धिः यथार्थसंवाकाऽतिरिक्तेत्युक्ता। श्रीभाष्यकारैरपि नाथमुन्यभिमतः पक्ष एव **"यथार्थ-सर्वविज्ञानमिति वेदविदाम्मतमिति"[3]** ग्रन्थेनानुकृतः। यच्च कथमेतन्मते प्रमाऽप्रमा चेति विभागः सम्भवति, इत्याशंकायामुच्यते व्यवरितिरुभयी इति। यतोहि ज्ञानजन्या प्रवृत्ति-र्बध्याबाध्यभेदेन द्विविधा। प्रवृत्तेर्बध्यत्वाबाध्यत्वे विफलत्वसफलत्वस्वरूपे। एवञ्च बाध्यप्रवृत्तिजनकीभूतं ज्ञानमप्रमा, अबाध्यप्रवृत्तिजनकं ज्ञानं प्रमा। इत्येवं प्रमाऽप्रमयोर्ल्लक्षणं सम्पन्नं भवति। अन्यथाख्यातिवादिन आख्यातिवादिन इति त्रयोऽपि भ्रमजन्यप्रवृत्तेर्बध्यत्वं प्रमाजन्यप्रवृत्तेरबाध्यत्वञ्च चाभ्युपगच्छन्ति। अतरेतन्मतत्रयसाधारणं एतल्लक्षणद्वयं भवति।

परन्तु एतन्मते मणिप्रभायां मणिबुद्ध्या प्रसारितहस्तः पुरुषः मणिं प्राप्नोति। मणिप्रभायां मणिबुद्धिश्च भ्रमः। तथा च सफलप्रवृत्तिजनकत्वात्मकस्य प्रमालक्षणस्य भ्रमेऽपि विद्यमानत्वादत्र लक्षणे अतिव्याप्तिः प्रसज्येत। एतद्दोषसमाधानाय इत्थं विचिन्तनीयम्।

---

[1] तत्वमुक्ताकलापः, पृ0 179
[2] तत्वमुक्ताकलापः, पृ0 180
[3] श्रीभाष्यम्, पृ0 83

प्रवृत्तिसाफल्यं प्रति नहि मणिबुद्धेः कारणं, अपितु मणेः तत्र सानिध्यमावश्यकम्, अतो नहि दोषप्रसक्तिरिति। एवमेव क्वचिद्‌यथार्थज्ञानानन्तरं प्रवर्तमानोऽपि पुरुषो विषयन्न लभते। इत्थं प्रकारेण प्रमात्मकज्ञानस्यापि बाध्यप्रवृत्तिजनकत्वादप्रमात्वं प्रसज्येत। इत्याशंकायां तत्रापि ज्ञानं न हि प्रवृत्तिवैफल्यस्य प्रयोजनं; अपितु विषयस्य पक्षिणो दूरतोऽपक्रमणम्। अतो न दोषः। उक्तञ्च सर्वार्थसिद्धौ तत्वमुक्ताकलापव्याख्याने-

**"बाध्यव्यवहारहेतुर्ज्ञानमप्रमाणं भ्रान्तिरित्युच्यते। तत्र मणिप्रभादिदर्शने मण्यादि अर्थप्रवृत्तौ तत्संवादोऽन्यायतः। अबाध्यव्यवहारहेतुर्ज्ञानं प्रमाणमभ्रान्तिरिति व्यवह्रिते। तत्र कदाचित् पक्षिबुद्‌बुदादौ प्रवृत्तिविसंवादौ विषयपक्रमादेः।"**[1]

**द्वैताभिमतं प्रमालक्षणसमीक्षणम्:-** मध्वाचार्याः प्रमाणलक्षणाख्य ग्रन्थे यथार्थं प्रमाणमिति प्रमालक्षणं प्रत्यपादयन्। तद्‌व्याख्यायां जयतीर्थश्रीचरणैरेवमुक्तं- **"प्रमाणमितिलक्ष्यनिर्देशः। यथार्थमितिलक्षणोक्तिः। यथार्थं यथावस्थितार्थविषयिकारी। अर्थविषयि-कारित्वमात्रस्य संशयविपर्ययसाधारणत्वात् यथावस्थितेति अर्थविशेषणम्।"**[2] लक्षणमिदं स्मृतावपि विद्यते। तस्यापि यथावस्थितार्थविषयीकारित्वादित्यतिव्याप्तिः प्रसज्यते इति तु नाशंकनीयम्। स्मृतिः **"प्रत्यक्षमैतिह्यं" "अनुमानचतुष्टयम्"**[3]। इति वेदवाक्येन स्मृतेरपि प्रमाणत्वकथनेन स्मृतिः प्रमाणलक्षणलक्ष्यैव, इति तत्रातिव्याप्तेरभावात्, इति द्वैताभिमतं प्रमाणलक्षणम्।

**न्यायाभिमतस्मृतिसाधारणं प्रमात्वम्:-** विश्वनाथन्यायपञ्चाननेन स्वरचितकारिकावल्यां प्रमायाः लक्षणद्वयं प्रदर्शितम्। **"भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा"**[4] अथवा **"तत्प्रकारं यज्ज्ञानं तद्वद्‌विशेष्यकम्, तत्प्रमा"**[5]।

---

[1] सर्वार्थसिद्धिः- तत्वमुक्ताकलापव्याख्या, पृ0 180
[2] प्रमाणलक्षणटीका
[3] तैत्तिरीयभाष्यम्
[4] कारिकावली, 134
[5] कारिकावली, 135

अत्र लक्षणद्वयेऽपि मणिकारप्रदर्शितं पन्थानमुपेक्ष्य ज्ञानपदमेव निवेशितम् नानुभव-पदम्। तथा च यथार्थस्मृतौ उक्तलक्षणद्वयस्यापि विद्यमानत्वादतिव्याप्तिः स्यादित्याकारिका शंका जायते। अत्रैवं समाधेयम्। मुक्तावल्यां स्मृतेः प्रमात्वमिष्टमेव। अतः स्मृतेरपि प्रमालक्षणलक्ष्यत्वात् नातिव्याप्तिः।

न च स्मृतेर्यदि प्रमात्वमभ्युपेयते चेत् तर्हि तत्करणस्य पञ्चमप्रमाणत्वमापद्येत इति वाच्यम्। प्रमाणलक्षणस्य अनुभवघटितत्वेन नहि तल्लक्षणस्य स्मृतिकरणे कथमपि सम्भावना। यथार्थानुभवकारणत्वं हि प्रमाणस्य लक्षणम्। स्मृतिकरणे तादृशलक्षणस्याभावात् न हि तेषां स्मृतिकरणानां प्रमाणत्वापत्तिः। एवमपि कथञ्चित्प्रकारेण युक्तिसंगतमेव प्रतिभाति। महर्षिणा गौतमेन मिथ्याज्ञानविरोधिप्रमाज्ञाने तत्वज्ञानमिति स्मृतिसाधारणज्ञानपदस्यैव प्रयोगदर्शनात् स्मृतेरपि प्रमात्वं तदभिमतम् इत्येवावगम्यते। तेनैव **प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी**ति सूत्रे स्मृतिकरणस्य प्रमाणमध्ये परिगणितत्वाभवादनुभावघटितमेव प्रमाणलक्षणं सम्पादनीयम्।

एतावता प्रबन्धेन प्रमालक्षणविषये प्राचीनानां नैयायिकानां मीमांसादिदर्शनान्तराचार्याणां कीदृशा विवेचनप्रकारा विद्यन्ते इति युक्तायुक्तविवेचनप्रदर्शनपुरस्सरं प्रदर्शितम्। इदानीं मणिकारः कथम्मन्यते कथञ्च प्रमालक्षणं विचिन्तितमित्येतत्सर्वं विचिन्त्यताम्।

मणिकारनिराकृतानि प्रमालक्षणानि विचिन्त्यते। इतः पूर्वं प्राचीनन्यायग्रन्थेषु शास्त्रान्तरीयग्रन्थेषु च प्रदर्शितानि प्रमालक्षणानि अन्यानि च अनूद्य यथायथं दोषानभिधाय स्वयं कानिचित् लक्षणानि प्रदर्शयामास चिन्तामणिकारः। अत्र चिन्तामणिप्रत्यक्षखण्डे नव्यन्यायरीत्या परिष्कृतानि कानिचित् प्रमालक्षणानि नापीत्यादिना अनूद्य अखण्डयत्। तेषु मध्ये कानिचित् मणिकण्ठीयन्यायचिन्तामणिनामकग्रन्थस्यापि भवेयुरिति तर्कयामः। मणिकण्ठस्तावत् गङ्गेशात् किञ्चित्कालपूर्वं समुत्पन्नः एतस्मात् प्राचीनः। तद्विरचितं न्यायचिन्तामणिर्न्यायरत्नत्रयप्रबन्धद्वयं विद्यते। उभयोरपि ग्रन्थयोः प्रायशः अनुमानापेक्षित-

विषयाणामेव विचारः सम्पादितः। तत्रापि समागतानां प्रमालक्षणानां प्रदर्शनं एवं तेषां खण्डनं नापि इत्यादि तत्वचिन्तामणिग्रन्थेन कृतमस्ति। अतः प्रत्यक्षखण्डस्य केचन परिष्काराः मणिकण्ठीयन्यायचिन्तामणिग्रन्थत उद्धृताः स्युरिति कथयितुं शक्यते। अथवा स्वयमेव मणिकृता सम्भावितान् परिष्कारान् परित्यज्य सभासु वादप्रसङ्गे पण्डितप्रवराणां मुखाद् निर्गतान् परिष्कारान् अनूद्य खण्डितम् मणिकृता। एष स्वसिद्धान्तः प्रतिपादयितुं शक्यते। इदानीं मणिग्रन्थे निराकृतानि पूर्वग्रन्थस्थानि प्रमालक्षणानि खण्डितानि पर्यालोचयामः।

( 1 ) प्रथमं मणौ प्रमात्वजनिमत्वं प्रमाया लक्षणमिति मतमनूद्य खण्डितम्। एतच्च मतं तात्पर्यटीकापरिशुद्धावुदयनाचार्या एवमदूषयन्। यदि प्रमात्वं जातिः स्यात् तर्हि प्रमात्वस्थज्ञान-निष्ठस्य मनोमात्रग्राह्यत्वं स्यात्। एवञ्च प्रमात्वमनुमेयमिति सिद्धान्तविलोपः स्यात्। किञ्च जातेर्व्याप्यवृत्तित्वनियमात् प्रमात्वं ज्ञाने सर्वांशेन समवेतं स्यात्। तथा च भ्रमे प्रमात्वं चेत् सः प्रकारांशेऽपि प्रमा भवेत्। प्रकारांशे नास्ति चेद् धर्म्यंशेऽपि प्रमात्वं न स्यात्। अपिच प्रमात्वं न जातिः साक्षात्कारित्वादिना सांकर्यात्। प्रमात्वं विहाय साक्षात्कारित्वं भ्रमात्मकप्रत्यक्षे विद्यते। एवं साक्षात्कारित्वं विहाय प्रमात्वमनुमित्यादौ विद्यते। उभयोः समावेशः साक्षात्कारिप्रमायाम्। अतः प्रमात्वस्य न जातित्वम्। इत्थं प्रकारेण प्रमात्वं परिशुद्धौ आचार्येण समीक्षितम्। चिन्तामणिग्रन्थेऽपि एतान्येव दूषणानि प्रकारान्तरेण प्रदर्शितानि नाधिको विशेषः।[1]

( 2 ) यच्च मीमांसकादिभिः यथार्थमज्ञातविषयकं ज्ञानं प्रमा इत्युक्तं तदपि प्राचीनग्रन्थोक्तदिशा धारावाहिकद्वितीयज्ञानादावव्याप्त्यैव खण्डितम्।[2]

( 3 ) यदपि कुसुमाञ्जलिग्रन्थे यथार्थानुभवप्रमा इत्युक्तं तदपि चिन्तामणिग्रन्थे इत्थं प्रकारेण खण्डितम्। यथा अथो यस्य सः यथार्थः। यथार्थश्चासौ अनुभवश्च यथार्थानुभवः। यथा शब्दः सादृश्यवाचकः। अतएव असादृश्यार्थको यथा शब्दस्यैवाव्ययीभावसमासत्वेन विधीयमानतया सादृश्यार्थे अव्ययीभावसमासस्य प्राप्त्यभावात्। एवञ्च स्वसदृशार्थकऽनुभव एव यथार्थानु-

---

[1] त०चि०, पृ० 409
[2] त०चि०, 416

भवशब्देन अभिधीयते। तत्रानुभवे अर्थसादृश्यं येन प्रकारेण वाच्यः नहि घटत्वादिना सम्भवति। ज्ञाने घटत्वादेः अभावेन घटत्वादिना घटादिस्वरूपार्थ सादृश्यस्य ज्ञाने अभावात्। यदि च येन केनापि रूपेण सादृश्यमुच्यते तदा भ्रमेऽपि सत्तादिना अर्थ सादृश्यस्य विद्यमानतया अतिव्याप्तिः प्रसज्येत्। एतद्विषये तर्कभाषाकार एवं प्रदर्शितवान्-

**अबाधितत्वेन रूपेण अर्थसादृश्यमनुभवे विवक्षितम्। एवञ्च यथा सदृशोऽबाधितोऽर्थ यस्य सः यथार्थः। तादृशोऽनुभवः अबाधितार्थविषयकोऽनुभवः स प्रमा। अतो नहि कोऽपि दोषः।**

वस्तुतस्तु यथाभूतोऽर्थ यथावस्थितऽर्थो वा यस्य सः इति मध्यमस्य भूतशब्दस्याव-स्थितशब्दस्य वा लुप्तबहुब्रीहीसमासः यथार्थशब्दे भवति। यथार्थस्चासौ अनुभवश्चेति विग्रहस्तत्र सम्पद्यते। अतएव **''यथावस्थितपदार्थाधिगतिः''**[1] प्रमा इति न्यायवार्तिकमपि संगच्छते। **''यथाभूतस्वार्था यति-नृपति-सूक्तिर्विजयते''**[2] इति वेदान्तदेशिकवचनमपि यथार्थशब्दस्य उक्तां व्युत्पत्तिमेव ज्ञापयति। मणिकारोक्तदूषणन्तु स्थूलदृष्ट्या इत्थं अवधेयं पण्डितैः।

( 4 ) गुणदोषयोरननुगतत्वात् गुणजन्यानुभवत्वं दोषाभावजन्यानुभववत्वं वा लक्षणं नहि कर्तुम् शक्यते। यदि च प्रमाजनकत्वेन गुणानां भ्रमजनकत्वेन च दोषाणामनुगमः क्रियेत तदापि प्रमाज्ञाने तज्जनकत्वरूपगुणत्वज्ञानम्। एवं गुणत्वज्ञाने च तज्जन्यत्वरूप-प्रमात्वज्ञानमित्यन्योन्याश्रयः।''[3]

( 5 ) यच्चोक्तमबाधितानुभवः प्रमा इत्युक्तं तदपि न समीचीनम्। विपरीतप्रमैव बाधः। तथा चाऽविपरीतप्रमाविषयभूतार्थविषयकानुभवः प्रमा इति फलितम्। तत्र च प्रमात्वज्ञाने सत्येव

---

[1] न्यायवार्तिकम्, पृ0 154

[2] यतिराजसप्ततिः, श्लो0 54

[3] तत्वचिन्तामणिः,

विपरीतप्रमाज्ञानं। विपरीतप्रमाज्ञाने सत्येव तदघटितप्रमात्वज्ञानम्। इत्येवं रीत्या अत्राविकल्पे अन्योन्याश्रयः प्रसज्यते।[1]

( 6 ) यच्च बौद्धैः संवादी अनुभवः प्रमा इत्युक्तं तदपि न साधु। संवादित्वं नाम प्रमायां विषयो यथा उल्लिख्यते तथा ज्ञानान्तरेण तस्योल्लिख्यमानत्वमिति। इदञ्च लक्षणं भ्रमेऽपि गच्छति। शुक्तौ रजतं ज्ञानं हि यथोल्लिख्यते इदं रजतमिति तथैव रजतप्रमापि उल्लिख्यते।

( 7 ) संवादिपदस्य समर्थप्रवृत्तिजनकार्थकत्वमभ्युपेत्य सफलप्रवृत्तिजनकानुभवः प्रमा इत्यपि लक्षणं कर्तुं न शक्यते। उपेक्षात्मिकायां प्रवृत्तिजनकत्वस्याभावेनाव्याप्तिप्रसङ्गः स्यात्। यदि च समर्थप्रवृत्तिजननयोग्यत्वं प्रमात्वमिति लक्षणं क्रियते, उपेक्षात्मकप्रमाणं प्रवृत्त्युपधायकत्वस्या-विद्यमानत्वेऽपि प्रवृत्तिजननयोग्यताया विद्यमानत्वाद् नाव्याप्तिसम्भावना इति वाच्यम्, प्रवृत्तिजननयोग्यत्वं हि प्रवृत्तिजनकतावच्छेदकधर्मवत्वम्। स च धर्मः प्रमात्वस्वरूपमेव इत्यतः आत्माश्रयदोषदूषितमेव लक्षणं भवति।

(8) यच्च तत्वानुभवः प्रमा इति लक्षणं लक्षणावल्यामुक्तं तदपि लक्षणं नहि साधु। तत्वशब्दो हि वस्तुवाचकः। एवञ्च वस्तुविषयकानुभवः प्रमा इति लक्षणं फलितं भवति। वस्तुनः एव सर्वेषु ज्ञानेषु मानमस्तीति भ्रमेऽपि लक्षणमिदं गच्छति। इति अतिव्याप्तिः, अस्मिन्लक्षणे दोषः। एतानि प्राचीनग्रन्थेषु प्रतिपादितानि लक्षणानि मणिकारेण दूषितानि भवन्ति। एतत्परमपि पञ्चदशलक्षणानि मणिकारेण दूषितानि विद्यन्ते।

**चिन्तामणिकारदिशा सिद्धान्तितप्रमालक्षणविमर्शः**

अधुना मणिग्रन्थानुसारं कानिचित्प्रमाया लक्षणानि विविच्यन्ते-

( 1 ) न्यायकुसुमाञ्जलीस्थचतुर्थस्तबके इत्थं लक्षणं कृतम् **"यत्र तदस्ति तत्र तस्यानुभवः प्रमा"** इत्येवं लक्षणमुरीकृत्य पक्षान्तरेण तद्वति तत्प्रकारकानुभवो वा प्रमेत्युक्तं मणिग्रन्थे।

---

[1] तत्वचिन्तामणिः,

**अनयोर्द्वयोलक्षणयोः को भेदः? इति चेदत्र आलोककाराः''**[1] **''यत्र धर्मिणि येन सम्बन्धेन यो धर्मोऽस्ति तत्र धर्मिणि तत्धर्मप्रतियोगिकतत्सम्बन्धावगाह्यनुभवः प्रमेत्यर्थः''** इत्येवं प्रथमं लक्षणं विविच्य **''तद्वद्विशेष्यकतत्प्रकारकोनुभवः प्रमेत्यर्थः।''** इति द्वितीयलक्षणं व्याख्यातम्। सम्बन्धः विषयकत्वं प्रथमलक्षणेऽस्ति। धर्मप्रकारकत्वञ्च द्वितीयलक्षणे निविष्टम्। इत्याकारको भेदः प्रतीयते। परन्तु द्वयोर्लक्षणयोर्यतः कोऽपि भेदो नानुभूयते विना शब्दविन्यासभेदम्।

प्रकाशकारास्तु[2] प्रथमे तत्प्रकारकत्वं तद्वैशिष्ट्यविषयकत्वं द्वितीये च तद्विशेषण-ज्ञानजन्यत्वमिति भेदः। इत्थं रीत्या प्रतिपादितवन्तः। मणिकारैरपि इत्थमेव प्रतिपादितम्- **''तत्प्रकारकत्वञ्च तद्वैशिष्ट्य विषयकत्वं तद्विशेषणज्ञानजन्यत्वं वा।''**

वस्तुतस्तु प्रथमलक्षणे निर्विकल्पके अव्याप्तिः। निर्विकल्पकज्ञानान्यवैशिष्ट्य-विषयकत्व रहितत्वात्। द्वितीयलक्षणस्य ईश्वरज्ञाने अव्याप्तिः। तस्य नित्यतया तत्र तद्विशेषण-ज्ञानजन्यत्वाभावादिति दोष उभयोरेव प्रसज्येत। मणिग्रन्थे ईश्वरस्य **''तद्विशिष्टविषयज्ञानं न तत्प्रकारकम्''** इत्यवोचत्। तेन तत्प्रकारकत्वं यदि तद्वैशिष्ट्यविषयकत्वरूपं तदैव ईश्वर-ज्ञानस्य एतल्लक्षणलक्ष्यत्वम्। यदा तु तद्विशेषणज्ञानजन्यत्वं तत्प्रकारकत्वमित्येवमभ्युपेयते चेत् तदा ईश्वरज्ञानमलक्ष्यमेव इति सूचितम्। वदन्ति च प्रकाशकाराः। तथा च द्वितीयलक्षणे तदीयप्रमा न संग्राह्येति भावः इति।''[3]

निर्विकल्पके तु प्रकारत्वाभावात् तत्प्रकारकत्वघटितं प्रमालक्षणं नहि सम्भवति। अथ च् तद्विशेषणज्ञानजन्यत्वमपि निर्विकल्पके नास्ति। अत इदमपि लक्षणं नहि सम्भवति। अतएव प्रकारताघटितं अप्रमालक्षणमपि तत्र नास्ति। स्वञ्च प्रमाप्रमाविलक्षणंज्ञानं निर्विकल्पकं भवतीति मणिकारा आशेरते।

---

[1] तत्वचिन्तामणिः- आलोकः

[2] तत्वचिन्तामणिः, पृ0 436

[3] तत्वचिन्तामणिः- प्रकाश

वस्तुतस्तु तदभाववद्विशेष्यकतत्प्रकारकज्ञानभिन्नोनुभवः प्रमा इत्येवं लक्षणे कृते सति निर्विकल्पकमपि प्रमात्वेन संगृहीतं भवति। अतएव मणिग्रन्थे तदन्यत्वे सति अनुभवत्वमेव प्रमात्वमिति लक्षणान्तरमपि प्रतिपादितम्। अतएव प्रकाशकृता निर्विकल्पकसाधारणं लक्षणान्तरमाह तदन्यत्वे इति पूर्वोक्तमणिग्रन्थस्यावतरणं कृतम्।

भ्रमात्मकज्ञाने धर्म्यंशे प्रमात्वमपि यत्र यदस्ति तत्प्रकारकत्वमित्यनेन संगृहितं भवति। यत्तच्छब्दघटितत्वेन लक्षणस्याननुगमस्तु नहि यत्रावसरं प्राप्नोति। लक्ष्यानुमानेसति लक्षणाननुगमो दोषावहो भवति। अत्र प्रमारूपं लक्ष्यमननुगतमेव। अतस्तदनुसारेण लक्षणमप्यननुगतं भवत्येवेति नहि कश्चिद्दोषः।

(2) मणिकृता स्वकीयग्रन्थे निर्विकल्पकसाधारणमन्यदपि लक्षणमुक्तम् **''विषयताश्रयावृत्यप्रकारकानुभवः प्रमा इति।''** विषयता चात्र विशेष्यतारूपा। एवञ्च विशेष्यताश्रये यो न वर्तते धर्मः, तत्प्रकारकत्वाभाववान् प्रमा इत्यर्थः लभ्यते। अयं घट इत्याकारकप्रमायां विशेष्यताश्रये घटे वर्तमानावेव इदन्त्व घटत्वस्वरूपधर्मौ प्रकारौ, तदवृत्तिधर्मः पटत्वादिर्नहि तत्र प्रकारः। इत्येवं रीत्या अयं घट इत्याकारकप्रमायां भवति लक्षणसमन्वयः। इदं रजतमित्याकारकभ्रमे तु विशेष्याकृतेरजतत्वस्य प्रकारकत्वाद् विशेष्यावृत्तिप्रकारकत्वमेव तत्र विद्यते। न तु तदप्रकारकत्वमिति नातिव्याप्तिः। भ्रमांशभूतरजतत्वांशे विषयताश्रयावृत्तिप्रकारकत्वम्। इदंत्वंशे विषयताश्रयावृत्तिप्रकारत्वाभावश्च विद्यते। अभावस्याव्याप्यवृत्तित्वाभ्युपगमात्। अतो भ्रमस्य प्रमात्वं प्रकारांशे च अप्रमात्वमपि उपपद्यते।

अत्रेदं विचिन्त्यते, एतल्लक्षणे गगने गगनत्वं इत्याकारकप्रमायां गगनमेव प्रकारः। तच्चावृत्तिपदार्थत्वेन विषयताश्रयावृत्तिः। तथा च विषयाताश्रयावृत्तिर्गगनप्रकारकत्वमेव गगने गगनत्वमित्याकारकप्रमायां विद्यते। अतोऽत्राव्याप्तिः। न च विषयमाश्रयावृत्ति सम्बन्धप्रयोग्यप्रकारकत्वं विवक्षितं गगनत्वे गगनस्यावृत्तित्वेऽपि तत्र गगनसम्बन्धस्य विद्यमानत्वेन विषयताश्रयगगनत्वावृत्तिसम्बन्धपदेन घटादिसम्बन्धस्यैव धर्तुं शक्यतया, तत्प्रतियोगी यद्घटादिस्तदप्रकारकत्वं गगने गगनत्वमिति प्रमायां विद्यते एव इति नाव्याप्तिदोषः, इति

वाच्यम्। एवमपि सर्वं प्रमेयमित्याकारकप्रमायां सर्वस्यापि विषयत्वेन विषयताश्रयावृत्तिसम्बन्धस्याऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यात्। अतः लक्षणमिदं नहि युक्तिसंगतमित्याहुः प्रकाशकाराः।[1]

एतद्विषये शिखामणिकाराणामेष[2] आशयो यत् **स्वविषयताश्रयावृत्तिसम्बन्धप्रतियोगिप्रकारकभिन्नानुभवः प्रमा,** इत्येव प्रमालक्षणमात्रं विवक्षितम्। स्वपदं भेदप्रतियोगिपरम्। यत्र ज्ञाने स्वविषयताश्रयावृत्तिसम्बन्धप्रतियोगिप्रकारकत्वं प्रसिद्धं तत्परमेव बोध्यम्। **'इदं रजतं'** इत्याकारके भ्रमात्मकज्ञाने स्वविषयताश्रयशुक्त्यवृत्तिर्यः सम्बन्धरजतत्वसम्बन्धः तत्प्रतियोगिरजतत्वप्रकारकत्वं प्रसिद्धम्। तदन्यत्वञ्च सर्वं प्रमेयमित्याकारकप्रमायां सुलभम्। अतो लक्षणेऽस्मिन् न कोऽपि दोषः।

(3) यत्प्रकारिका या विषयता तत्प्रकारसमानाधिकरणविषयताकानुभवः स्वप्रकारसमानाधिकरणविषयताकोनुभवो वा इति लक्षणान्तरद्वयमपि कर्तुं शक्यते।[3] उभयत्रापि विषयतापदं विशेष्यतापरमेव। **'अयं घटः'** इति प्रमायां घटत्वरूपप्रमाप्रकाराधिकरणघटनिष्ठ विशेष्यताकत्वमयं घट इति ज्ञाने विद्यते। एवं प्रथमलक्षणस्य समन्वयः, द्वितीयलक्षणस्य च समन्वयः कर्तुम् शक्यते। **'इदं रजतं'** इत्याकारकभ्रमे तु प्रकारभूतरजतत्वाधिकरणं वृत्तित्वं शुक्तिनिष्ठविशेष्यतायां न विद्यते, अतो नातिव्याप्तिः।

परन्तु निर्विकल्पके प्रकारघटितं द्वयमपि लक्षणं नास्तीत्यव्याप्तिः। अत्र लक्षणे प्रसक्ता भवति। सा च निर्विकल्पकस्य प्रमात्वमप्रमात्वञ्चानभ्युपगम्य तस्य लक्ष्यत्वमभ्युपगम्यैव तद्वारणीया।

**(4) विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिप्रकारकविषयताप्रतियोग्यनुभवः प्रमा** इत्यपि प्रमालक्षणं[4] भवितुमर्हति। **'अयं घटः'** इति प्रमायां घटो विशेष्यः तन्निष्ठात्यन्ताभावो नहि

---

[1] तत्त्वचिन्तामणिः- प्रकाशः

[2] न्यायशिखामणिः

[3] तत्त्वचिन्तामणिः

[4] तत्त्वचिन्तामणिः

घटत्वात्यन्ताभावः, अपितु पटत्वात्यन्ताभाव एव तदप्रतियोगि घटत्वं, तत्प्रकारिका विषयता घटनिष्ठविशेष्यताख्या विषयता, तन्निरूपकत्वस्यायं घट इत्याकारकप्रमात्मकज्ञाने विद्यमानतया भवति लक्षणसमन्वयः।

अत्रेदं विचिन्तनीयमित्थं प्रकारेण प्रमालक्षणे कृतेऽपि गगने गगनत्वमिति प्रमायामव्याप्तिरस्त्येव। विशेष्यभूते गगनत्वे विद्यमानो योऽत्यन्ताभावस्तत्प्रतियोगि-गगनप्रकारकत्वस्यैवोक्तप्रमायां विद्यमानत्वात्। अतो विशेष्यनिष्ठात्यन्ताभावाप्रतियोगि-सम्बन्धप्रकारकविषयतानिरूपकाभावत्वं प्रमात्वमिति विवक्षणीयम्। विशेष्यभूते गगनत्वे गगनाभावस्य विद्यमानत्वेऽपि तत्र गगनसम्बन्धस्य विद्यमानतया विशेष्यनिष्ठात्यन्ताभावपदेन गगनसम्बन्धाभावस्य धर्तुमशक्यता तत्र विद्यमानात्यन्ताभावपदेन घटादिसम्बन्धाभाव एव धर्तव्यः। तदप्रतियोगिगगनसम्बन्धस्तत्प्रतियोगि गगनप्रकारकविषयतानिरूपकत्वस्य गगन-गगनत्वमिति प्रमायां विद्यमानतया नाव्याप्तिसम्भावना। एवमत्यन्ताभावे प्रतियोग्य-समानाधिकरणत्वं विशेषणमुपादेयमन्यथा **'वृक्षः कपिसंयोगवान्'** इति प्रमायामव्याप्तिः स्यात्।

**( 5 )** विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयत्वप्रतियोग्यनुभव इत्यपि लक्षणं सम्भवति।[1] **'अयं घटः'** इति प्रमायां या इदन्त्वावच्छिन्नविशेष्यता तस्यां विशेष्यनिष्ठा-त्यन्ताभावप्रतियोगिपटत्वाद्यनवच्छिन्नत्वं विद्यते। अतो लक्षणसमन्वयः। अत्रापि लक्षणे गगने गगनत्वमिति प्रमायामव्याप्तिनिरासाय विशेष्यनिष्ठात्यन्ताभावप्रतियोगिसम्बन्धप्रतियोगिप्रकारान-वच्छिन्नविषयतानिरूपकत्वं परिष्करणीयम्। एवञ्च **'वृक्षः कपि- संयोगवान्'** इत्याकारक-प्रमायामव्याप्तिवारणाय अत्यन्ताभावे प्रतियोगिवैयधिकरण्यं निवेशनीयम्। इदञ्च लक्षणं निर्विकल्पकसाधारणं भवति।

---

[1] तत्वचिन्तामणिः

( 6 ) विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारकविषयत्वानिरूपकोऽनुभवः प्रमालक्षणम्।[1] एतदपि लक्षणं निर्विकल्पकसाधारणमेव एतदपि लक्षणं पूर्वोक्तरीत्यैव परिष्करणीयमस्ति।

विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयतानिरूपकोऽभावो वा प्रमा।[2] **'अयं घटः'** इति प्रमायां विषयताधिकरणं पुरोवर्तिविशेष्यभूतो घटस्तन्निष्ठान्ताभावः पटत्वात्यन्ताभावस्तत्प्रतियोगि पटत्वं तदनवच्छिन्नपुरोवर्तिनिष्ठविषयता तन्निरूपकत्वस्य **'अयं घटः'** इति प्रमायां सत्वाद् भवति लक्षणसमन्वयः।

सर्वेष्वेतेषु लक्षणेषु पूर्वपक्षग्रन्थः प्रदर्शितः इमौ घटपटौ इति समूहालम्बन-प्रमायामव्याप्तिरूपो दोष इत्थं प्रकारेण परिहरणीयः। घटत्वावच्छिन्नायां विषयतायां स्वसमानाधिकरणात्यन्ताभावप्रतियोगिपटत्वानवच्छिन्नत्वम्। पटत्वावच्छिन्नविषयतायाञ्च तादृश-घटत्वानवच्छिन्नत्वं विद्यते। इति तादृशविषयताद्वयनिरूपकत्वमुक्तप्रमायामक्षतम्। उक्तञ्च **"समूहालम्बने च विषयताभेदात् न प्रमाऽप्रमालक्षणे अव्याप्त्यतिव्याप्ती**'ति। इत्येमेव च नवीनतरेषु ग्रन्थेषु क्रोडपत्रादिषु च भिन्न-भिन्नप्रकारेण प्रमालक्षणं परिष्क्रितं दृश्यते। यथा-स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरूपकत्वमित्यादयः परिष्कारा विद्यन्ते। इति शम्।

---

[1] तत्वचिन्तामणिः

[2] तत्वचिन्तामणिः

## ( ङ ) न्यायमते प्रमात्वस्य परतस्त्वविचारः

सर्वाण्यपि आस्तिकदर्शनानि तापत्रयपीडितानां जनानां तापत्रयनिवृत्तिपुरस्सराऽऽत्यन्तिकदुःखध्वंसात्मकमुक्तिप्राप्त्यर्थमेव तत्तन्महर्षिभिः प्रणीतानि सन्ति। तच्च दर्शनमास्तिक-नास्तिकभेदेन द्विविधम्। तत्रापि आस्तिकदर्शनानि न्यायदर्शनं, वैशेषिकदर्शनं, पूर्वमीमांसा, उत्तरमीमांसा, सांख्य-योग दर्शन भेदेन षड्विधम्। एवं चार्वाक, जैन, बौद्ध भेदेन त्रिविधं नास्तिकदर्शनमुपलभ्यते।

एतेषु दर्शनेषु विशेषतः प्रमाणतत्वानां प्रमेयतत्वानाञ्च विवेचनं दृश्यते।

**प्रमाणञ्च प्रमात्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वरूपम्। प्रमेयत्वञ्च यथार्थज्ञानीयविषयताश्रयत्वरूपम्।** उभयविधमपि पदार्थतत्वं प्रमात्वघटितम्। अतः प्रमात्वज्ञानमन्तरा प्रमाणतत्वस्य प्रमेयतत्वस्य वा कथमपि बोधगम्यं भवितुं नार्हति। अतः प्रमात्वस्य भेदपुरस्सरं स्वरूपज्ञानमावश्यकम्। एतदर्थं प्रथमं प्रमाया लक्षणं तस्य प्रमात्वस्य स्वतस्त्वं परतस्त्वं वा इति विचिन्त्यते।

तच्च **प्रमात्वं याथार्थ्यरूपम्। याथार्थ्यञ्च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्व-रूपम्।** यथा रजते इदं रजतमिति ज्ञानं यथार्थज्ञानम्। अत्र ज्ञाने रजते रजतत्वं प्रकारतया भासते। रजतञ्च विशेष्यतया भासते। अतः एतज्ज्ञानं रजतत्ववति रजते रजतत्वप्रकारकं, अतः अस्य ज्ञानस्य प्रमात्वं तार्किकैः अभ्युपेयते।

अत्रेयमाशंका जायते यदि तद्वद्विशेष्यकत्वे सति तत्प्रकारकानुभवत्वं यथार्थानुवस्य लक्षणं क्रियते चेदयं घटः इत्याकारकस्य प्रमात्मकज्ञानस्य घटत्ववद्घटविशेष्यक-घटत्वप्रकारकज्ञानत्वेनायं घटः इत्याकारकप्रमायां लक्षणसमन्वयसम्भवेपि, घटे घटत्वमिति प्रमायामव्याप्तिः प्रसज्येत। घटत्वस्य घटवत्वाभावात् तत्र घटत्वविशेष्यकघटप्रकारकप्रमायाम-व्याप्तिः प्रसज्येत।

अत्रेदं विचार्यते चेदिदं समस्तदर्शनाद्यभिमतप्रमाणानां यत्प्रामाण्यं तत्किं स्वतो ग्राह्यं परतो ग्राह्यं वा? एतद्विषये वादिनामनेकविधाः विप्रतिपत्तयः विद्यन्ते। तत्र परतस्त्वं प्रमात्वस्य नैयायिकाः स्वीकुर्वन्ति। एवं मीमांसकाः विशिष्टाद्वैतवेदान्तिनश्च प्रमात्वस्य स्वतस्त्वं स्वीकुर्वन्ति।

उक्तञ्च न्यायग्रन्थे-

**"प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः।"[1]**

**"दोषोऽप्रमायाः जनकः प्रमायाश्च गुणो भवेत्॥"[2]**

तत्र इत्थं प्रकारिका विप्रतिपत्तिर्जायते। ज्ञानगतं प्रामाण्यं तदप्रामाण्याऽग्राहक-यावज्ज्ञानग्राहकसामग्री ग्राह्यन्नवा? अत्र विप्रतिपत्तिवाक्ये तद्वद्विशेष्यकत्वविशिष्टतत्प्रकार-कत्वस्य घटत्वपटत्वादिविषयभेदेन भिन्नतया किमपि प्रामाण्यं यावज्ज्ञानग्राहकसामग्रीग्राह्यं भवितुं नार्हति।

इत्थं प्रकारेण ज्ञानप्रामाण्ये पक्षे तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्री ग्राह्यत्व-स्याप्रसिद्धिः प्रसज्येत। अतः यद्धर्मघटितं प्रामाण्यं यदा पक्ष क्रियते तदा तद्धर्मप्रकारकज्ञान-ग्राहकसामग्री ग्राह्यत्वस्यैव साध्यता करणीया। न तु सामान्यतः यावज्ज्ञानग्राहकसामग्री ग्राह्यत्वस्य साध्यता। अतो नाप्रसिद्धिः।

एवञ्च ज्ञानप्रामाण्यं तदप्रामाण्याग्राहिका यावतीज्ञानग्राहिका सामग्री तज्जन्यग्रह विषयो नवा? इत्याकारकः संशयो जायते। अत्र ज्ञानप्रामाण्यमिति पक्षवाचकं पदम्। तत्र तात्पर्य-वशाद् तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टं ज्ञानम्। 'प्र' शब्द विशिष्टेन 'मा' धातुना बोध्यते। भावल्युटा च तादृशमेव ज्ञानत्वं बोध्यते। भावप्रत्ययस्य प्रकृत्यर्थातिरिक्ता बोधकत्वात्।

---

[1] न्या०सि०मु०, गुणखण्ड, का०सं०- 135
[2] न्या०सि०मु०, गुणखण्ड, का०सं०- 131

करणल्युटा च तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकज्ञानकरणत्वं तद्धितान्तेन बोध्यते। ल्युडन्त प्रमाणशब्दादुभयत्र **'गुणवचनब्राह्मणादिभ्यः कर्मणि च'**[1] इति सूत्रेण भावार्थकः **'ष्यञ्'** प्रत्ययो भवति। स च भावप्रत्ययः प्रकृत्यर्थतावच्छेदकस्य बोधको भवति। अनया रीत्या प्रामाण्यपदं प्रमात्वप्रमाकरणत्वोभयार्थकम्। एतयोः द्वयोर्मध्ये ज्ञानस्यैव यत्प्रामाण्यमित्यर्थकस्य ज्ञानकरणत्वे नहि अतिव्याप्तिः। प्रमाणत्वस्येन्द्रियादिष्वपि विद्यमानतया नहि ज्ञानत्व नियतत्वं व्याप्यत्वं प्रमा करणत्वरूपे प्रामाण्ये भवितुर्हति। अपितु भाव व्युत्पत्या प्रमात्वे एव ज्ञानत्वं व्याप्यत्वम्। अतः स्वभावतः ज्ञानपदोपस्थाप्यज्ञाप्तिगतप्रामाण्यमेव पक्ष पदेन गृहीतं स्यात्। अतः पक्षघटकीभूतज्ञानपदं विशेषणतयोपात्तम्। तेन ज्ञप्तिगतप्रामाण्यस्यैव पक्षता लभ्यते। अर्थात् तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वस्वरूपं ज्ञानं प्रामाण्यमेव पक्षः। अस्यां विप्रतिपत्तौ तद्वतितत्प्रकारकज्ञानत्वरूप प्रामाण्यस्य घटत्वपटत्वाद्यात्मकतत्तदर्थभेदेन भिन्न-भिन्नस्वरूपतया कस्यापि प्रामाण्यस्य यावज्ज्ञानग्राहकसामग्री ग्राह्यत्वासम्भवात्। तत्तज्ज्ञानगतं प्रामाण्यं तत्तज्ज्ञानग्राहकसामग्री ग्राह्यन्नवा इत्याकारकसंशयस्य बोधनाय विशिष्टसाध्यघटकघटत्वादिप्रकारकज्ञानबोधनाय ज्ञानपदं साध्यकुक्षौ निविष्टम्। अतः तत्तज्ज्ञानगतं प्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्री ग्राह्यन्नवा? इति न्यायग्रन्थेषु इत्थं रीत्या प्रतिपादनं दृश्यते।

अस्यां विप्रतिपत्तौ मीमांसकानां विधिकोटिः। मीमांसकमते ज्ञानगतप्रमात्वे तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वरूपं स्वतस्त्वमभ्युपगतम्। न्यायमते च ज्ञानगतप्रमात्वे तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वभावरूपं परतस्त्वं स्वीकृतमस्ति। इत्थं प्रकारेण विप्रतिपत्तौ विधिकोटिः मीमांसकानां निषेधकोटिश्च नैयायिकानां भवति।

अत्र विप्रतिपत्तौ घटत्वादिप्रकारकज्ञानग्राहकाऽऽत्मादिजन्ययावद्ग्रहविषयत्वस्य घटत्वादिप्रकारकग्रहेऽपि विद्यमानत्वेन घटत्वादिप्रकारकज्ञानग्राहकजन्ययावद्ग्रहान्तरगतत्वेन गुरूमतभिन्नमते तादृशयावद्ग्राह्यत्वस्याप्रसिद्ध्या सामग्रीपदमुपात्तम्। यद्यपि ज्ञानत्वविशिष्ट-

[1] ल०सि०कौ०, अथ त्वतलोरधिकारः, सू०- 5/1/124

विषयकयावद्ग्रहोपादानेन ज्ञानत्वे प्रसिद्धेरुपपादनं कर्तुं शक्यते। एवञ्चाप्रसिद्धिभयेन सामग्रीग्रहणमनावश्यकमेव स्यात्। तथापि घटत्ववति घटत्वप्रकारकत्वरूपे प्रामाण्यात्मकपक्षे बाधापत्तेवारयितुमशक्यतया, सामग्रीपदोपादानमावश्यकम्।

इदं ज्ञानमप्रमा इत्याकारकज्ञानग्राहकसामग्र्या प्रामाण्यस्यागृहीतत्वेन बाधापत्तिः स्यात्। तद्वारणार्थं तद्प्रामाण्यावच्छेदकावच्छेदेन तद्वद्वृत्तिर्भिन्नार्थकमप्रामाण्यग्राहकपदमुपात्तम्। तदप्रामाण्याग्राहकेऽत्यन्ताप्रामाण्यग्रहः इदं ज्ञानमप्रमा इति शब्दप्रयोगजनको ग्रहः ज्ञातता प्रत्यक्षजनिकायाः सामग्र्याः वारणार्थं ज्ञानग्राहकेति उपात्तम्।

एषः स्वतः परतः विषयकः प्रामाण्यविचारः चिरकालात्प्रचलितः विद्यते श्रूयते च। यदा शंकराचार्यः शास्त्रार्थविचाराय मण्डनमिश्रग्राममगच्छत्। तत्र गत्वा तद्ग्रामस्य स्त्रीभिः तेन पृष्टः यत्मण्डनमिश्रगृहं कुत्र विद्यते? तदा ताभिरूक्तं यत्-

**''स्वतः प्रमाणं परतः प्रमाणं वीराङ्गना यत्र गिरं गिरन्ति।**
**द्वारस्थनीडान्तरसन्निरूद्धाः जानीहि तन्मण्डनपण्डितौकः?॥''**

इत्थं प्रकारेण सर्वदैव प्रामाण्यविषये स्वतस्त्व परतस्त्व विचारः प्राचीनकालादेव प्रचलमानोऽपि।

**न्यायशास्त्रे** मीमांसकानां मतं पूर्वपक्षत्वेनोद्धृत्य स्वमतेन प्रामाण्यस्य परतस्त्वं प्रतिपादितमस्ति। तत्रैव प्रथमं मतत्रयसिद्धं यत्स्वतस्त्वं तदित्थं प्रकारेण विवेचयितुं शक्यते। मीमांसकमते ज्ञानगतं तद्वति तत्प्रकारकत्वरूपं प्रामाण्यं स्वत एव गृह्यते न तु परतः। तत्रापि प्राभाकरमते ज्ञानस्य स्वप्रकाशतया तज्ज्ञानप्रामाण्यं तेनैव गृह्यते। यस्मात्कारणाज्ज्ञाने गृह्यमाणे तन्निष्ठज्ञानत्वरूपसामान्यधर्मेण ज्ञानगतं प्रामाण्यमपि स्वत एव गृह्यते तस्य स्वतः ग्राह्यत्वे नहि कश्चन प्रतिबन्धकः। तन्मते सकलस्यापि ज्ञानस्य प्रमा-प्रमातृ-प्रमेयात्मकतृतीयविषयकत्वेन तन्मते घटादिज्ञानस्यायं घटः, घटमहं जानामीत्याकारकत्वेन ज्ञानस्य यथा स्वतः भानं भवति।

ज्ञानञ्च ज्ञातृ-प्रमात्व-प्रमाविषयकमेव भवति। अतः ज्ञाने गृहीते ज्ञानगतं प्रमात्वमपि स्वतो गृह्यते।

**मिश्रास्तु** अयं घटः इति ज्ञानानन्तरं घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानवानहमित्याकारकोपनीतभानापरसंज्ञकेनानुव्यवसायात्मकेन ज्ञानेन ज्ञानमपि गृह्यते ज्ञानगतं प्रामाण्यमपि ज्ञानग्राहकेनानुव्यवसायेन गृह्यते।

**भाट्टमते** सर्वं ज्ञानमतीन्द्रियं भवति। तादृशज्ञानजन्या ज्ञातता च प्रत्यक्षा। तया ज्ञानं ज्ञाननिष्ठं प्रामाण्यञ्चानुमीयते। तेषां मतेनानुमानाकारः इत्थं भवति। इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञाततात्वात्। या यन्निष्ठयत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या। यथा पटनिष्ठपटत्वप्रकारकज्ञातता पटविशेष्यकपटत्वप्रकारकज्ञानजन्या तथैव इयमपि ज्ञातता घटवृत्तिघटत्वप्रकारकज्ञाततात्ववति। अतः इयमपि ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्यैव।

इत्थं रीत्यानुमानेन ज्ञानं ज्ञानगतं प्रामाण्यञ्च गृहीतं भवति। इति भाट्टानां मतमस्ति। अस्मिन् मतत्रये एव यया सामग्र्या ज्ञानं गृह्यते तयैव सामग्र्या ज्ञानगतं प्रामाण्यमपि गृह्यते। एष एव स्वतस्त्वपदार्थः अर्थात् ज्ञानग्राहकातिरिक्तसामग्र्यजन्यः स्वतस्त्वपदार्थो भवति। एतन्मतत्रयसिद्धप्रामाण्यगतस्वतस्त्वनिरसनपुरस्सरं स्वमतसिद्धं ज्ञानग्राहकातिरिक्तसामग्रीजन्यत्वरूपं परतस्त्वं साधयितुमाह मणिकारः।

तत्र प्रथमं ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्री ग्राह्यन्नवेति प्रथमा विप्रतिपत्तिरस्ति। अत्र विप्रतिपत्तौ ज्ञानप्रामाण्यपदेन पक्षनिर्देशः कृतोऽस्ति। पक्षवाचकज्ञानपदे ज्ञानानां प्रामाण्यमिति षष्ठी समासः। षष्ठ्याश्च निष्ठत्वमर्थः। तथा च प्रत्यक्षादिप्रमात्मक ज्ञाननिष्ठं यत्प्रमात्वस्वरूपं प्रामाण्यं तत्किं तदप्रामाण्याग्राहकसामग्रीग्राह्यमुत वा सामग्रीग्राह्यत्वाभाववदित्याकारिका संशयात्मिका विप्रतिपत्तिः। तदप्रामाण्यमित्यत्र तस्य ज्ञानस्याप्रामाण्यं

तदप्रामाण्यमयथार्थज्ञानत्वं (तदग्राहिका यावती सामग्रीज्ञानसाधनं) तया प्रामाण्यं गृह्यते नवा इत्यर्थो लभ्यते।

अप्रामाण्यस्याग्राहिका या सामग्री सा प्रामाण्यस्य ग्राहिका भवति तथा सामग्र्या प्रामाण्यं गृहीतमेव स्यात्। नञ्द्वयसमभिव्याहारस्थले प्रकृत्यर्थस्यैव बोधनादतः गृह्यते इति विधिकोटिः सा यदि स्यात् तदा ज्ञानप्रामाण्यं स्वतोग्राह्यं स्यात्। यदि च न गृह्यते इति निषेधकोटिः स्यात्तदा ज्ञानानां प्रामाण्यं परतो ग्राह्यं स्यात्। इत्थं प्रकारेण निषेधकोटिः नैयायिकानाम्। विधिकोटिः मीमांसकानाम्।

तत्र **नैयायिकाः** इत्थं प्रकारेण समस्त प्रमाणानां प्रामाण्यं परतः एव गृह्यते तेषामयमाशयः। प्रत्यक्षादिज्ञानानन्तरं संशयस्य दृश्यमानत्वेन तत्र ज्ञाने जायमानस्य संशयस्य निवृत्तिः प्रमात्वस्य च निश्चयः अनुमानादिप्रमाणेनैव भवितुमर्हति। तथाहि यत्र क्वचित्स्थले जलादौ वृक्षाधिष्ठितान् पक्षिणः दृष्ट्वा कश्चित्पिपासुः पश्यति तदा जलसन्निधिपक्षिनिवासयोः पौनःपुण्येन साह्यचर्यदर्शनेन व्याप्तिस्मरणं भवति। ततः पूर्वाननुभूतस्थलं जलाशयञ्गच्छति। तत्र यदि तेन जलं लभ्यते तदा जलपानं कृत्वा सन्तुष्टः तिष्ठति। यदि च तत्र स्थाने गतेऽपि जलप्राप्तिर्न भवति तदा तस्य संदेहो जायते। यत्मदीयज्ञानं प्रमा न वा? अस्मादेवानुमीयते इदं जलज्ञानं प्रमा सफलप्रवृत्तिजनकत्वादित्यनुमानेनोक्तज्ञाने प्रमात्वं गृह्यते। अत एव चक्षुरादिसन्निकर्षेण जलज्ञानस्य जायमानत्वेऽपि तत्र नहि प्रमात्वस्य तस्मिन् ज्ञाने निश्चयः, अपितु तत्र सन्देह एव जायते। तादृशसन्देहनिवृत्तिश्चानुमानेन प्रमात्वनिश्चयादेव भवति। एतदेव परतस्त्वं न्यायाभिमतम्।

कथं जलज्ञानसमये एव ज्ञानेन साकं प्रामाण्यमपि कुतो न गृह्यते। तत्रेदं विचिन्तनीयं स्यात्। यदि प्रथमं ज्ञानमेव ज्ञातं न भवति तदा धर्मिज्ञानस्यासत्वे कारणाभावादनेक-विरूद्धधर्मावगाहिज्ञानात्मकः संशय एव न स्यात्। तस्मात्कारणात्प्रथमं ज्ञानन्तु गृह्यते परन्तु ज्ञानगतं प्रामाण्यं न गृह्यते इत्यवश्यमेव स्वीकार्यम्। अतः ज्ञानग्रहणानन्तरं ज्ञानगतं

प्रामाण्यमनुमानेनैव ग्राह्यं भवति। यतोहि जलप्राप्तिर्स्थले इदं ज्ञानं प्रमा सम्वादिप्रवृत्ति-जनकत्वात्यत्सम्वादि प्रवृत्तिजनकं न भवति तत्प्रमा न भवति। यथा भ्रमः।

इदञ्च ज़लज्ञानं नहि **'सम्वादिप्रवृत्तिजनकत्वाभाववत्तस्मान्न प्रमात्वाभाववत्'** इत्येवं पञ्चावयवसहकृतानुमानेन ज्ञानगतं प्रमात्वं गृह्यते। यद्यपि सम्वादिप्रवृत्तिजनकत्वरूप-हेतोः पक्षे सिद्धे एव, तेन हेतुना पक्षे प्रमात्वं साधयितुं शक्यते। प्रकृतस्थले च सम्वादिप्रवृत्तिजनकत्वस्याप्रसिद्धतया तेन हेतुना एतज्ज्ञाने प्रमात्वसाधनं कर्तुं न शक्यते। यतः पक्षे सम्वादिप्रवृत्तिजनकत्वस्वरूपहेतोः असिद्धत्वेन तस्य सत्वं एतज्ज्ञाने न हि सम्भवति। अतः एष हेतुः स्वरूपासिद्ध एव। एतदपि वक्तुं न शक्यते सम्वादिप्रवृत्तिजनकत्वं तावत्सफलप्रवृत्तिजनकत्वरूपम्। अतः एष हेतोः नाप्रसिद्धिः। प्रकृते च सम्वादिप्रवृत्तिजनकत्वं तादृशजलज्ञानरूपपक्षे विद्यते एव। अत एव नैष हेतोः स्वरूपासिद्धत्वम्। इत्थं प्रकारेण सामान्यतः अनुमानेन ज्ञाने प्रामाण्यमनुमितं भवति।

इत्थं प्रकारेण सामान्यतः अनुमानप्रमाणेन ज्ञाने प्रमात्वसिद्धिः कर्तुं शक्यते। तदनन्तरं विशेषानुमानेनापि ज्ञानगतं प्रामाण्यमनुमातुं शक्यते। यथा पृथिवीत्वप्रकारकं ज्ञानं प्रमा गंधव-द्विशेष्यकपृथिवीत्वप्रकारकज्ञानत्वात्। अथ च इदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्व-प्रकारकज्ञानत्वात्। अत्र एवं शंकितुं न शक्यते यदेतयोः अनुमानयोः पक्षे हेतुज्ञानमसिद्धम्। यतः पृथिवीत्वप्रकारकज्ञानरूपे पक्षे पृथिवीत्वप्रकारकत्वं स्वतः एव ज्ञातं भवति। एवं जलत्वप्रकारकज्ञानरूपे पक्षे जलत्वप्रकारकत्वमपि स्वत एव गृहीतं भवति। इयं पृथिवीति ज्ञानस्य स्वभावतः पृथिवीत्वप्रकारकत्वात्। एवं जलत्वप्रकारकत्वज्ञानस्यापि स्वत एव जलत्वप्रकारकत्वात्। अतः स्वत एव पक्षे तत्तत्धर्मप्रकारकत्वरूपहेतोः विद्यमानतया नोक्त विशेषानुमानयोः स्वरूपासिद्धत्वशंका। आभ्यां विशेषानुमानाभ्यामपि प्रामाण्यं ज्ञानेषु सिद्ध्यति। अतः प्रामाण्यस्य परतस्त्वमेव स्वीकार्यम्।

न च तत्तद्धर्मप्रकारकत्वं यदि ज्ञाने स्वत एव गृह्यते चेत्तर्हि ज्ञानगतं प्रमात्वमपि तादृशधर्मप्रकारकत्वरूपमेव तदपि कथन्न स्वतो गृह्यते। इति वाच्यमिन्द्रियार्थसन्निकर्षादिना जायमाने अयं घटः इति ज्ञाने घटविशेष्यकत्वं घटत्वप्रकारकत्वञ्च यद्यपि स्वतः गृह्यते ज्ञानस्य विषयमन्तरा भानास्वीकारात्। अतः घटविशेष्यकत्वस्य घटत्वप्रकारकत्वस्य च स्वतः गृहीतत्वे तद्रूपं घटविशेष्यकत्वसमानाधिकरणघटत्वप्रकारकत्वस्वरूपं प्रमात्वं कुतो न गृह्यते इति वाच्यम्। अयं घटः इति ज्ञाने पृथक्पृथग्घटविशेष्यकत्वं घटत्वप्रकारकत्वञ्च यद्यपि स्वतः गृह्यते, परन्तु घटविशेष्यकत्वविशिष्टघटत्वप्रकारकत्वात्मकं प्रमात्वं स्वतः न गृह्यते अपितु अनुमानेन तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वस्वरूपं प्रामाण्यमनुमानेनैव गृह्यते। इत्थं प्रकारेण नैयायिकाः प्रामाण्यस्य परतस्त्वं प्रतिपादयन्ति।

अत्रेदं विचिन्त्यते यत् न हि केवलं तद्धर्मप्रकारकत्वमेव प्रमात्वमपितु तद्वद्विशेष्यकत्व-विशिष्टतत्प्रकारकत्वस्वरूपं प्रमात्वम्। इति कथनमसङ्गतम्। सर्वेषामेव ज्ञानानां यथार्थत्वा-त्भ्रमज्ञानस्य चाविद्यमानत्वात् प्रमालक्षणे तद्वद्विशेष्यकत्वविशेषणदानं व्यर्थमेव स्यात्। लक्षणे अव्याप्त्यादिदोषवारकाणां विशेषणानामेव सार्थक्यं स्वीकारात्। अतः तद्धर्मप्रकारकत्वमेव प्रामाण्यं स्वीकर्तव्यं तस्य च ज्ञानग्राहकसामग्र्या एव गृहीतत्वेन ज्ञाने प्रामाण्यग्रहार्थमनुमानादेः ज्ञानग्राहकातिरिक्तसामग्र्यन्तरकल्पनायाः अनुचितत्वात्प्रामाण्यं स्वत एव गृह्यते इत्येव स्वीकर्तव्यम्।

इत्थं प्रकारेण प्रमायां गुणजन्यत्वात्परतस्त्वं, यतः प्रमासाधारणकारणं गुण एव भवति यथा प्रत्यक्षप्रमायां संयोगादिरूपः इन्द्रियार्थसन्निकर्षः कारणमेवमनुमित्यात्मकप्रमोत्पत्तौ व्याप्त्यादिज्ञानात्मको गुणः कारणमेवमुपमितिप्रमायां सादृशज्ञानं कारणमेवं शाब्दप्रमायां पदज्ञानं कारणम्। अतः प्रमात्वावच्छिन्नकार्यतानिरूपितकारणतावत्वस्य गुणे स्वीकारात्प्रमायां गुणजन्यत्वमेव प्रमात्वम्। एवमप्रमोत्पत्तौ दोषः कारणं भवति। अतः अप्रमात्वा-

वच्छिन्नकार्यतानिरूपितकारणतावत्वस्य दोषे विद्यमानत्वात्दोषस्यैवाप्रमोत्पत्तौ जनकत्वात्तादृश-दोषजन्यत्वरूपं परतस्त्वमप्रात्वे विद्यते। उक्तञ्च विश्वनाथेन-[1]

**दोषोऽप्रमायाः जनकः प्रमायास्तु गुणो भवेत्।**
**पित्तदूरत्वादिरूपो दोषो नानाविधो मतः॥**
**प्रत्यक्षे तु विशेष्येणविशेषणवता समम्।**
**सन्निकर्षो गुणस्तु स्यादथत्वनुमितौ पुनः॥**
**पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत्।**
**शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः॥**
**शाब्दबोधे योग्यतायास्तात्पर्यस्याथ प्रमा।**

मीमांसकास्तु प्रत्यक्षादीनि सर्वाण्यपि प्रमाणानि स्वतः प्रामाण्यवन्तीति वदन्ति। यदि प्रमाणस्य प्रामाण्यं प्रमाणान्तरेण परीक्षितं स्यात् तदा तादृश प्रमाणान्तरस्यापि प्रामाण्यं प्रमाणान्तरेणैव परीक्षितं स्यादिति अनवस्था स्यात्। अतोऽपि ज्ञानगतं प्रामाण्यं परतः एव गृह्यते। यद्यज्ज्ञानगतं प्रामाण्यं तत्सर्वं नहि स्वतः उत्पद्यते न वा स्वतः बुद्ध्यति। तदभाववति तत्प्रकारकत्वाभावरूपस्य विशेष्यवृत्तिरप्रकारकत्वादेशश्च प्रामाण्यस्य स्वतस्त्वयोगात् नहि सर्वमेव प्रामाण्यं स्वतः गृह्यते, अपितु प्रामाण्यं न्यायमते तद्वद्विशेष्यकत्वविशिष्ट-तत्प्रकारकत्वरूपमेव तच्च गुणेनैव जायते।

[1] न्या0सि0मु0, गुणनिरूपण, का0सं0 131-134

## (च) प्रस्तुतशोधस्य महत्त्वम्

अस्मिन् शोधप्रबन्धे इन्द्रियार्थसन्निकर्षात्मकं प्रत्यक्षप्रमाणं तदेव निरूपणीयमस्ति। यतोहि चक्षुषा घटेन सह प्रथमं संयोगः, ततः घटघटत्वे इत्याकारकं निर्विकल्पकं, ततश्च विशिष्टज्ञानात्मकं सविकल्पकं उत्पद्यते। इत्येषा प्रक्रिया प्रत्यक्षस्यात्र ये तार्किकाः व्यापारवत्वे सति असाधारणकारणत्वं करणत्वं स्वीकुर्वन्ति तेषां मते निर्विकल्पकज्ञानं फलं, इन्द्रियार्थ सन्निकर्षो व्यापारः इन्द्रियं करणं अतः इन्द्रियस्य प्रत्यक्षज्ञानकरणत्वात् इन्द्रियमेव प्रत्यक्ष-प्रमाणपदव्यवहारार्थं भवति। येषां मते च साक्षात् फलजनकस्यैव करणत्वं स्वीकृतं, तन्मते इन्द्रियार्थसन्निकर्ष एव प्रत्यक्षप्रमाणं भवति। तादृशप्रत्यक्षप्रमाणस्य इन्द्रियार्थसन्निकर्षस्य रूपत्वबोधनाय एषः शोधप्रबन्धः प्रस्तूयते मया।

प्रत्यक्षानुमानोपमानशब्दरूपप्रमाणेषु प्रत्यक्षस्यैवोपजीव्यत्वात् महत्वमस्ति। तत्र व्याप्तिग्रहमन्तराऽनुमानं न प्रथते व्याप्तिग्रहे च प्रत्यक्षमेव प्रमाणम्। वह्निधूमयोः महानसादौ साहचर्यं प्रत्यक्षप्रमाणेनैव गृह्यते। गृहीतसाहचर्यः पर्वतादौ अविच्छिन्नधूमरेखां दृष्ट्वा पूर्वगृहीत-साहचर्यरूपां व्याप्तिं स्मरति, तदनन्तरञ्च अयं धूमः वह्निव्याप्यः तद्वान् च 'अयं पर्वतः' इति परामर्शोत्पत्तिर्जायते।

परामर्शज्ञानोत्तरञ्चानुमितिः प्रमा उदेति। अतः अनुमानप्रमाणे प्रत्यक्षप्रमाणमुपजीव्यत्वेन कारणं भवति।

एवमुपमानप्रमाणे च प्रत्यक्षस्योपजीव्यत्वमस्ति। उपमानं नाम सादृश्यज्ञानम्। तच्च प्रत्यक्षमन्तरा न सम्भवति। अतः तत्रापि प्रत्यक्षस्योपजीव्यत्वमस्ति। शब्दश्रवणमन्तरा शाब्दबोधो न जायते। शब्दश्रवणञ्च प्रत्यक्षमेव। अतः तत्रापि प्रत्यक्षस्योपजीव्यत्वम्।

अनुमानादिप्रमाणानामुपजीव्यत्वादेव प्रत्यक्षस्य प्राधान्यं प्रथमप्रामाण्यञ्च भवति। यतश्च प्रत्यक्षमेव प्रमाणेषु प्रथममुपजीव्यत्वं महत्तमं प्रमाणमस्ति। अतः एतद्विषये किञ्चिद्विचारणीयमिति कृत्वा प्रत्यक्षप्रमाणविचारे मन्मतिः प्रवक्ता।

तत्र प्रत्यक्षप्रमाणे सन्निकर्षाणां महत्वमस्ति। यतः इन्द्रियाणि करणभूतानि तेषां करणत्वं व्यापारमन्तरा न सम्भवति। अतः व्यापाररूपेण सन्निकर्षा अभिमताः सन्ति। ते च सन्निकर्षाः इन्द्रियजन्यत्वे सति इन्द्रियजन्यज्ञानस्य जनकाः सन्तीति व्यापारत्वं तत्र संगच्छते। ते च सन्निकर्षाः संयोगादिरूपेण षड्विधो लौकिकाः सन्ति। एवञ्च ज्ञानलक्षणा सामान्यलक्षणा योगजादिभेदेन त्रिधा अलौकिकसन्निकर्षाः सन्ति।

सन्निकर्षविषये दार्शनिकानां वैमत्यमस्ति। केचन दार्शनिकाः समवायपदार्थं न स्वीकुर्वन्ति। तेषां मते संयोगः, संयुक्ततादात्म्यादिरूपेण लौकिकाः सन्निकर्षा अभिमताः सन्ति। वेदान्तिनः ज्ञानलक्षणाप्रत्यासत्तिं सामान्यलक्षणाप्रत्यासत्तिञ्च न स्वीकुर्वन्ति। अतः तेषां मते अलौकिकाः सन्निकर्षा ना सन्ति। यतः तैः योगिप्रत्यक्षस्यापि प्रामाण्यं ना स्वीकुर्वन्ति। अतः तेषां मते योगिगम्यज्ञानस्यानुभवमात्रम्।

येषां दार्शनिकानां मते अभावपदार्थो नाभिमतः। तेषां मते विशेष्यविशेषणभावरूपः सन्निकर्षः न स्वीक्रियते। यतः अभावप्रत्यक्षज्ञानायैव विशेष्यविशेषणभावरूपः सन्निकर्षः अभिमतः यदि च अभावपदार्थ एव नास्ति तदा तद्ज्ञानाय विशेष्यविशेषणभावरूप-सन्निकर्षस्याऽऽवश्यकतैव नास्ति। एवं बहुविधः प्रवादः सन्निकर्षविषये अस्ति। अतः यथामतिविवादनिराकरणाय एतद्शोधप्रबन्धस्य महत्वं भविष्यति, कृत्वा अनुसन्धाने मन्मतिः प्रवर्तते। एतच्छोधप्रबन्धे यावन्तः प्रथिता वादा निरूपिताः सन्ति।

सन्निकर्षविषये दार्शनिकानां या विमतिः सापि प्रदर्शिताऽस्ति। विविधदर्शनेषु यत् सन्निकर्षस्वरूपं समुपलभ्यते तत्सर्वमपि संगृह्य अत्र शोधप्रबन्धे संयोजितमस्ति।

अतः सन्निकर्षजिज्ञासुनामयं शोधप्रबन्धः महते उपकाराय भविष्यति। यतः सन्निकर्षविषये यावन्तः विचारा दर्शनेषु निर्दिष्टास्ते समेपि विचाराः अत्र शोधप्रबन्धे सन्निवेषिताः सन्ति।

अथ च यद्गुरुभ्यः किञ्चित् सन्निकर्षविषये अवगतं यच्च स्वमत्या विचारितं तदपि अत्र निबन्धे सन्निविष्टम्।



# प्रथमोऽध्यायः

## (क) प्रत्यक्षस्वरूपविवेचनम्

एतत्प्रत्यक्षलक्षणपरिशीलने प्राचीनैरुद्भावितानि प्रत्यक्षलक्षणानि विविच्य तन्निरसन-पुरस्सरं मणिकारप्रदर्शितानि लक्षणानि सम्यक् परिष्कृत्य तत्स्वरूपमिदानीं प्रदर्श्यते। अतः मूलग्रन्थाऽऽरभ्य प्रत्यक्षलक्षणविकासक्रमं शास्त्रान्तरप्रदर्शितप्रत्यक्षलक्षणञ्च विमृश्य मणिकृदभिमतानि लक्षणानि पर्यालोचयिष्यते।

प्रत्यक्षलक्षणबोधनेच्छया प्रवृत्तं न्यायशास्त्रं तावदिदम्- **''इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्''**[1] इति न्यायसूत्रम्। अस्मिन् सूत्रे षट्पदानि विद्यन्ते। तत्र प्रत्यक्षमिति पदं लक्ष्यस्य बोधकम्। तदितराणि पञ्चपदानि प्रत्यक्षलक्षणबोधकानि। तत्र प्रथमं प्रत्यक्षपदस्य व्युत्पत्तिमवलम्ब्य विचारः प्रदर्श्यते।

**प्रत्यक्षपदव्युत्पत्तिः-** प्रत्यक्षपदस्य ज्ञानविषये, इन्द्रिये, घटादिविषये चेति त्रिविधेष्वर्थेषु प्रयोगः दृश्यते। एवञ्च एतदर्थत्रयवाचकत्वेन प्रत्यक्षशब्दस्य व्युत्पत्तौ महद्वैचित्र्यं भवति। तथा च अक्षिणी प्रतीति विग्रहे **''लक्षणेनाभिप्रती आभिमुख्ये''**[2] इति पाणिनिसूत्रेण अव्ययीभावे **'टच्'** प्रत्यये **'यस्येति च'**[3] इति सूत्रेण ईकारलोपे 'प्रत्यक्ष' इति जायते। यतोहि **''अव्ययीभावे शरत्प्रभृतिभ्यः''**[4] इति टच् प्रकरणे व्याकरणसूत्रमस्ति। तत्रैव सरत्प्रभृतिगणे **'प्रतिपरसमनुभ्योऽक्षणः'** इति गणसूत्रमस्ति। तस्य प्रतिपरसम

---

[1] न्या0सू0- 1-1-4
[2] पा0सू0- 2-1-14
[3] पा0सू0- 6-4-148
[4] पा0सू0- 5-4-107

इत्येतत्पूर्वकाक्षिशब्दान्तादव्ययीभावाट्टच् प्रत्ययो भवतीति भावः। ततः परमुत्पन्नायाः विभक्तेः **''नाव्ययीभावादतोम्-त्वपञ्चम्याः''**[1] इति सूत्रेण अमादेशेकृते प्रत्यक्षमिति रूपं सिद्धयति।

परन्तु विषयपरत्वेन यदा प्रत्यक्षशब्दस्य प्रयोगः क्रियते तदा प्रत्यक्षो घटः प्रत्यक्षा क्रिया इत्याकारकः विशेष्यसमान लिङ्गक एव प्रयोगोदृश्यते। तस्य चाव्ययीभावसमास पक्षे कथं निर्वाहः? इत्याशंका जायते। तत्र भट्टोजीदीक्षितेन[2] सिद्धान्तकौमुद्यामेवं समाहितम्। यज्ज्ञानपरकात् प्रत्यक्षशब्दात् **'अर्शादिभ्योऽच्'**[3] इति सूत्रेण मत्वर्थीये अच् प्रत्यये कृते तद्धितान्तत्वात् प्रंतिपादक संज्ञायां तदवयवसुपोलुकि प्रत्यक्षशब्दः प्रत्यक्षवदर्थकः भवति च तस्य प्रत्यक्षशब्दस्य विशेष्यवाचकपद समलिङ्गकत्वमिति न प्रत्यक्षो घटः प्रत्यक्षा क्रिया इत्यादि प्रयोगानुपपत्तिः इति। **'न्यायभूषणकारास्तु'**[4] लिङ्ग विशेष समर्थने काठिन्यमवलोकयन्तः प्रत्यक्षशब्दे अव्ययीभावसमासं नाभ्युपगच्छन्ति अपितु 'प्रतिगतमक्षं प्रत्यक्षं' इति **'कुगतिप्रादयः'**[5] इति पाणिनिसूत्रेण तत्पुरुषसमासः। अत्र अक्षशब्दः इन्द्रियवाचकः, प्रतिगतमित्यस्य च प्राप्तमित्यर्थः। एवञ्च यदिन्द्रियं प्राप्नोति तत्प्रत्यक्षम्। ज्ञानं साधनत्वेनेन्द्रियं प्राप्नोति। विषयश्च ज्ञापकत्वेनेन्द्रियं प्राप्नोति। इत्येवं प्रकारेण साक्षात्कारविषयोभय साधारणः प्रत्यक्षशब्दः निष्पद्यते। तदनुसारिलिङ्गञ्चलभते। न च तत्पुरुष पक्षे अक्षशब्दस्य नपुंसकलिङ्गत्वात् **'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः'**[6] इति पाणिनीसूत्रेण समासे नपुंसक लिङ्गमेव स्यादिति वाच्यम्। **'द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः'**[7] इत्यनेन वार्तिकेन गतिसमासे परवल्लिङ्गत्वस्य प्रतिषेधान्न समानलिङ्गकत्वानुपपत्तिः। इत्थं

---

[1] पा०सू०- 2-4-83
[2] सि०कौ०- पृ० 64
[3] पा०सू०- 5-2-127
[4] न्या०सू०- पृ० 84
[5] पा०सू०- 2-2-18
[6] पा०सू०- 2-3-26
[7] पा०सू० (वार्तिक)- 2-3-26

प्रकारेण न्यायसारप्रतिपादितं गतिसमासमेव प्रशस्तपादभाष्येपि अभ्युपगतम्। तथाहि **''अक्षमक्षं प्रतीत्योत्पद्यत''**[1] इति प्रत्यक्षम्।

तत्रैव न्यायकन्दली[2] **''अक्षमक्षं प्रतीत्य प्राप्य यदुत्पद्यते तत्प्रत्यक्षं प्रमाणम्।'' कुगति प्रादयः इति प्रादिसमासः। प्रतिगतमक्षं प्रत्यक्षामित्यनेनास्याभिधेयलिङ्गता। प्रत्यक्षं ज्ञानं, प्रत्यक्षा बुद्धिः, प्रत्यक्षः प्रत्ययः इति।** इत्येवं व्युत्पत्तिं प्रदर्शयन्तः न्यायकन्दलीकाराः गतिसमासमेव स्वीकृतवन्तः।

किरणावल्यामपि[3] **''प्रत्यक्षमिति कुगतिसमासः। अव्ययीभावे हि परवल्लिङ्गतायां प्रत्यक्ष बुद्धिः इति प्रयोगानुपपत्तिः स्यात्।''** इत्यनेन ग्रन्थेन एष एव पक्षेऽभ्युपगतः।

वस्तुतस्तु गतिसमासपक्षे टच्प्रत्ययसम्पादनार्थं शरप्रभृतिगणे अस्य पाठः व्यर्थः स्यादिति। अव्ययीभावसमासपक्ष एव श्रेयान्। विशेषलिङ्गता च मत्वर्थीयाच्चप्रत्ययात् साधनीया भवति। अतः भट्टोजीदीक्षितमार्ग एव प्रशस्तः भाति। परन्तु भट्टोजीदीक्षितपक्षेपि अक्षिशब्दस्य चक्षुरिन्द्रियमात्रपरत्वात् चाक्षुषमिव ज्ञानं प्रत्यक्षपदेन गृहीतं स्यात्। इन्द्रियान्तरैः जायमानानां ज्ञानानां संग्रहो न स्यात्। अतः चाक्षुषज्ञानवाचकः प्रत्यक्षशब्दः भट्टोजी-दीक्षितरीत्या इतरेन्द्रियजन्यज्ञानसंग्राहकः। प्रत्यक्षशब्दश्चेन्द्रियसामान्यवाचकाक्षशब्दघटितः तत्पुरुषरीत्या समर्थनीयः इति स्वीकुर्मः।

वात्स्यायनभाष्ये तु **''प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि''**[4] इति सूत्रव्याख्यानावसरे अक्षस्याक्षस्य प्रतिविषयं वृतिः प्रत्यक्षमिति वर्णितम्। तत्रैव च वार्तिककारः

---

[1] प्र०पा०भा०- पृ० 186
[2] न्या०क०- पृ० 188
[3] किरणावली०, पृ० 276
[4] न्या०सू०- 1-1-3

अयञ्च सूत्रविवक्षायां "**अव्ययीभावः समासः**" इत्यवोचत्। तात्पर्यटीकारोपि[1] "**अक्षमक्षं प्रति वर्तते इति विगृह्याव्ययीभावे कृते सर्वेन्द्रियावरोधो भवति।** इति अव्ययीभावसमासमेव सूत्रस्थप्रत्यक्षशब्दे भवति। इति प्रतिपादितवान्। परन्तु अव्ययीभावपक्षे विभक्तेः '**नाव्ययीभावादतोम्**'[2] इति पाणिनिसूत्रेण अमादेशविधानात् प्रत्यक्षस्य इत्यादि प्रयोगः न सिद्ध्येत।

न्यायवार्तिककारास्तु[3] "**कः पुनरन्यत्र समासः। प्रादिसमासोयं द्रष्टव्यः। प्रतिगतमक्षं प्रत्यक्षमिति गत्यन्तरं प्रतिपादितम्। प्रत्यक्षानुमानेत्यादि सूत्रे प्रत्यक्षशब्दे अव्ययीभावसमासः इत्युक्तेपि न क्षतिः।**" अन्यत्र तु प्रादिसमास एव युक्तः वार्तिककारः।

तत्र च तात्पर्यटीकायामित्थमुक्तं[4] "**प्राप्तापन्नालम्पूर्वगतिसमासेषु परवल्लिंगता प्रतिषेधादविधेयलिङ्गोपादनात् प्रत्यक्षोर्थः प्रत्यक्षाबुद्धिः, प्रत्यक्षं ज्ञानमित्यभिधेय लिङ्गता सिद्धा भवति।**" इति गतिसमासपक्ष एव टीकाकारैः आदितः परन्तु गतिसमासपक्षेऽपीन्द्रिये प्रत्यक्षशब्दः नहि संघटते। यतोहि आत्मानमिन्द्रियं हि न प्राप्तमिति।

अथ च प्रतिगतमक्षं प्रत्यक्षमितिगतिसमासं वदन्तः सर्वेपि भूषणकारादयः प्रतिशब्दस्य द्वितीयान्तेनाक्षशब्देन समासं स्वीकुर्वन्ति। परन्तु द्वितीयान्तेन शब्देन साकं प्रतिशब्दस्य समासः दुर्लभः। '**कुगतिप्रादयः**'[5] इति सूत्रे प्रादयो गताद्यर्थे प्रथमया इति वार्तिकेन गताद्यर्थे विद्यमानानां प्रादीनां प्रथमान्तेनैव समासस्यानुशासनात्। अत एव प्रगतः आचार्यः प्राचार्यः इत्येव भाष्यादौ उदाहरणं प्रदर्शितम्। प्रथमान्तेनाक्षशब्देन प्रतिशब्दस्य समासे तु विषयं ज्ञानं वा ज्ञापकत्वेन कारणत्वेन वा लब्धमिन्द्रियमेव प्रत्यक्षशब्दाभिलप्यं स्यात् न तु विषयः ज्ञानं वा। तस्मात् किमत्र कर्तव्यमिति महती विचिकित्सा प्रवर्तते।

---

[1] ता०टी०- पृ० 188
[2] पा०सू०- 2-4-83
[3] न्या०वा०-
[4] ता०टी०- पृ० 188
[5] पा०सू०- 2-2-18

अत्रेत्थं प्रतीयते इन्द्रियपरः प्रत्यक्षशब्दः प्रतिगतमक्षं प्रत्यक्षमिति प्रथमान्तेन अक्षशब्देन प्रतिशब्दस्य समाससम्पादनात् प्रयोगोपपत्तिः। अत एव विश्वनाथपञ्चाननेन प्रत्यक्षलक्षण-सूत्रवृत्तौ इत्थमुक्तं- **"प्रतिगतमक्षं प्रत्यक्षमितियोगादिन्द्रियवाचकत्वात् प्रत्यक्ष-शब्दस्य"** इति। ज्ञानपरस्य विषयपरस्य वा प्रत्यक्षशब्दस्य तु यद्यपि अक्षिणीप्रति प्रत्यक्षमिति सामान्यार्थक प्रतिशब्द घटितादव्ययीभावादर्शादिभ्यो अचि प्रत्यये कृते सति अस्य सिद्धिर्भवितुं नार्हति। अक्षि शब्दस्य चक्षुरिन्द्रियमात्रबोधकत्वेन चाक्षुषज्ञानस्यैव प्रत्यक्षशब्दतः लाभेन इन्द्रियान्तरजन्यज्ञानस्य प्रत्यक्षशब्दतः लाभासम्भवात्। तथापि अक्षमक्षं प्रति प्रत्यक्षमिति यथा शब्दार्थान्तमभूतवीप्सायां **"अव्ययं विभक्ती"**[1]त्यादि सूत्रेण अव्ययीभावसमासे कृते **"अर्शऽऽादिभ्योऽच्"**[2] इत्यनेन सूत्रेण अचि प्रत्यये निष्पन्नः प्रत्यक्षशब्दः इन्द्रियसम्बद्ध विषयवत् ज्ञानमिन्द्रियसम्बद्धज्ञानवन्तं विषयं वा बोधयति। अतः प्रत्यक्षस्य ज्ञानस्य प्रत्यक्षस्य घटस्य इत्यादयः प्रयोगाः जायन्ते। वीप्सायां अव्ययीभावः इति विचार्यैव प्रशस्तपादभाष्ये **"अक्षमक्षं प्रतीत्यपदुत्पद्यते ज्ञानम्"** इत्यभिहितम्।

पदमञ्जर्यामपि च **अव्ययीभावे सरत्प्रभृतिभ्यः**[3] इति सूत्रेण प्रत्यक्षशब्दमधिकृत्य यथार्थे वीप्सायामव्ययं विभक्तीत्यादिना अव्ययीभावः इति प्रोक्तम्।

भट्टोजीदीक्षितस्तु परोक्षशब्दनिर्वचनावसरे मनोरमायामक्ष्णः परमितिविग्रहः। अक्षिशब्दः इन्द्रियसामान्यपरः इत्यवोचत्। तद्रीत्या प्रत्यक्षशब्देपीन्द्रियपरस्याक्षिशब्दस्य 'प्रतिना सह लक्षणे नाभिप्रती' इति समासः सुलभः। तथापि अक्षि शब्दे लक्षणा समाश्रयणीया भवतीति क्लेशकरः। अतो वीप्सायामव्ययीभावाद**र्शादिभ्योऽच्**[4] इत्यनेन अच्प्रत्ययघटितमेव व्याख्यानं युक्तिसंगतं भवति।

---

[1] पा0सू0- 2/1/6
[2] पा0सू0- 5/2/127
[3] पा0सू0- 5/4/107
[4] पा0सू0- 5/2/127

यत्तु न्यायबिन्दुव्याख्याकर्तृणा धर्मोत्तराचार्येण **''प्रतिगतमाश्रितमदनम्। अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः''**[1] इति प्रोक्तम्। तन्न साधु, प्रादयो गताद्यर्थे प्रथमया इति विशिष्यगताद्यर्थे प्रथमान्तेन समासस्य प्रदर्शितत्वात् क्रान्ताद्यर्थे इत्यत्र आदिपदेन गतरूपार्थस्य ग्रहीतुमशक्यत्वादिति।

**सूत्रोक्तप्रत्यक्षपदं प्रत्यक्षप्रमापरम्-** सर्वथा प्रत्यक्षलक्षणसूत्रघटकीभूतं प्रत्यक्षपदं प्रत्यक्षप्रमापरमेव। तस्य प्रमापरत्वमभ्युपगत्यैव भाष्यवार्तिकयोः व्याख्यानदर्शनात्। यदि च **''प्रत्यक्षानुमानोपमान शब्दाः प्रमाणानि''**[2] इति पूर्वसूत्रे प्रत्यक्षप्रमाणस्योद्देशात्तदनुसारेण प्रत्यक्षप्रमाणस्यैवात्र सूत्रे लक्षणमुच्यते इत्येवं विचार्यते तदा यदितिपदस्याध्याहारं कृत्वा यस्मात् प्रमाणादिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं भवति। तत्प्रत्यक्षं प्रमाणमिति योजनीयं भवेत्। तदा तु प्रमाण परं प्रत्यक्षपदं स्यात्। वस्तुतस्तु प्रत्यक्षप्रमायाः लक्षणे कृते तत्साधनत्वं प्रत्यक्षप्रमाणस्य लक्षणमिति सुखेन ज्ञातुं शक्यते इत्यभिप्रायवान् सूत्रकारः प्रत्यक्षप्रमायाः लक्षणमुक्तवान्। इत्येवमभ्युपगम्यमानेन वार्तिककारेण ज्ञानपरमेव प्रत्यक्षपदमत्र सूत्रे व्यवस्थापितम्। तथा च प्रत्यक्षमिति लक्ष्यनिर्देशः इति सिद्धं भवति। इतराणि तु पञ्च पदानि प्रत्यक्षस्य लक्षणप्रतिपादकानि विद्यन्ते। एतावता अस्मिन् सूत्रे पञ्चलक्षणानि प्रतिपादितानीत्येवं भ्रमो न विधेयः। पञ्चभिरपि पदैः सम्मिल्य एकमेव प्रत्यक्षलक्षणं प्रतिपादितं भवति। पञ्चानां पदानां मध्ये एकस्य द्वयोः त्रयाणां चतुर्णां वा अपनयने लक्षणमिदमतिव्याप्ति दोषदूषितं स्यात्, अतः पञ्चानामपि पदानामेकलक्षणे प्रवेशः आवश्यकः इति।

**भाष्यवार्तिककाराभिमतप्रत्यक्षस्वरूपविचारः**

भाष्यवार्तिकाभ्याञ्च इत्थमवगम्यते यदिन्द्रियार्थसन्निकर्षोत्पन्नत्वं प्रत्यक्षस्य लक्षणं एतावन्मात्रस्य लक्षणे प्रतिपादिते सुखदुःखयोरपीन्द्रियविषयकसंयोगानन्तरमेवोत्पद्यमान-तयाऽतिव्याप्तिः स्यात्। तद्वारणाय ज्ञानपदमावश्यकम्। यद्यपि भाष्यकारेण भाष्ये

---

[1] न्या0बिं0- पृ0 8
[2] न्या0सू0- 1-1-3

सुखदुःखातिव्याप्तिवारणप्रयोजनकत्वं ज्ञानपदस्य स्वगिरा नोक्तं न वा व्यञ्जितं तथापि वार्तिककारेण स्पष्टमुद्भावितम्। इत्थं हि वार्तिकं-[1] **''अथ ज्ञानग्रहणं किमर्थं? सुखादिव्युदासार्थम्। इन्द्रियार्थ-सन्निकर्षात् सुखदुःखेपि भवतः। तद्व्युदासार्थमाह ज्ञानमिति''** इति। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्येवन्मात्रनिवेशे च सर्वेषामेवेन्द्रियार्थ-सन्निकर्षोत्पन्नानां ज्ञानानां विषयाणामवधेयेन रूप, रसादि शब्देन रूपमिति ज्ञानं रस इति ज्ञानमित्येवं व्यपदेशात् शब्द विषयकमपि अस्तीति वक्तव्यम्। एतादृशञ्च शब्दतादात्म्यापन्नार्थ-विषयकं प्रत्यक्षमापसज्येत। इत्यव्यपदेश्यपदमुक्तम्। शब्दार्थसम्बन्धज्ञानमन्तरापि जायमानं ज्ञानमेव प्रत्यक्षम्। शब्द तादात्म्यापन्नार्थविषयकं ज्ञानन्तु शब्दार्थयोः तादात्म्यरूपस्य सम्बन्धस्य ज्ञानमपेक्षत इति भवति तद्वारणम्।

एवमपीन्द्रियार्थसन्निकर्षादुत्पन्ने शुक्तिरजतादिभ्रमे अतिव्याप्तिवारणाय अव्यभिचारि पदम्। तदभाववति तत्प्रकारकं ज्ञानं व्यभिचारि। अतादृशमव्यभिचारि, भ्रमस्य च व्यभिचारित्वात् नहि तत्रातिव्याप्तिः। दूरस्थव्यक्तेः चक्षुःसंयोगानन्तरं जायमाने 'स्थाणुर्वा पुरुषो वा' इति संशये अतिव्याप्तिवारणाय व्यवसायात्मकपदप्रवेशः। तदर्थश्च निश्चयात्मकः, संशयस्य च निश्चयरूपत्वाभावात्तत्र नातिव्याप्तिः।

इत्थं प्रकारेण समस्तमेकं लक्षणं निस्पद्यते इति भाष्यकाराणां वार्तिककाराणाञ्चा-ऽऽशयः। तथाचोक्तं वार्तिके[2] **''लक्षणञ्चेदं अतः संदेहः किं समस्तमुतासमस्तमिति। समस्तमित्याह यस्मात् एकशोऽनुमान सुखशाब्दविपर्ययसंशयज्ञानानि निवर्तन्ते इति।''** अत्र लक्षणे इन्द्रियार्थसन्निकर्षजन्यन्त्वानुपादाने अनुमितावतिव्याप्तिः। अतस्तदुपादान-मित्याशयेनानुमानेत्युक्तम्।

इत्थं प्रकारेण शास्त्रकारैः अनेकविधानि प्रत्यक्षलक्षणानि प्रदर्शितानि सन्ति। तेषां लक्षणानां समीक्षणमत्र क्रियते।

---

[1] न्या०वा०- पृ० 203
[2] न्या०वा०- पृ० 206

सामान्यतः इन्द्रियार्थसन्निकर्षजन्यः किं वा यथार्थानुभव एव प्रत्यक्षपदव्यपदेश्यं भवति। तथा च अस्माकं पुरतः स्थितेन घटेन सह अस्मदीय चक्षुरिन्द्रियस्य सन्निकर्षे जाते अयं घटः इत्येवं घटविषयकं ज्ञानं जायते तदेव प्रत्यक्षम्। दूरे स्थितस्य कस्यचन पुरुषस्य नेत्रेन्द्रियेण सह सन्निकर्षे जाते अयं घटः इत्याकारकं यज्ज्ञानमुत्पद्यते तत् नहि यथार्थं ज्ञानं, अपितु भ्रमात्मकं ज्ञानं, अतो न तत्प्रत्यक्षम्। तदनन्तरं सन्देहरहितं भ्रमरहितञ्च यज्ज्ञानं तदेव प्रत्यक्षम्। एवं प्रकारेण निष्कृष्टमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं फलात्मकं प्रत्यक्षं प्रमात्मकञ्च प्रत्यक्षं भवति। तत्करणञ्च प्रत्यक्षप्रमाणस्य लक्षणम्।

प्रत्यक्षप्रमायामात्मनः मनसा सह सन्निकर्षात् मनसश्चेन्द्रियैः सह संयोगादिन्द्रियाणाञ्चार्थैः सह सन्निकर्षात्प्रकृष्टप्रकाशादीनां सहकारादात्मनि यज्ज्ञानमुत्पद्यते तदेव प्रत्यक्षम्। तत्राऽऽत्मनि प्रत्यक्षज्ञानोत्पत्तौ सम्बन्धत्रयं कल्प्यते। अर्थानां बहिरिन्द्रियाणाञ्च सन्निकर्षो जायते। ततश्चेन्द्रियाणि बाह्यपदार्थविषयकं ज्ञानं मनः प्रति निवेदयन्ति। मनश्चात्मानं प्रति समर्पयति। तत एव प्रत्यक्षज्ञानं पूर्णतां प्राप्नोति। अतएवोक्तं भाष्ये- **''इन्द्रियस्यार्थेन सः सन्निकर्षात् यज्ज्ञानं तत् प्रत्यक्षं न तर्हीदानीमिदं भवति। आत्मा मनसा संयुज्येत मनः इन्द्रियेण इन्द्रियमनर्थेनेति।''**[1]

उक्तविवेचनया प्रत्यक्षज्ञानं प्रति मनसः सातिशयं महत्त्वं परिज्ञातं भवति। मनसोऽनुपस्थिताव्यवस्थितत्वे वा प्रत्यक्षज्ञानं नोत्पद्यते। एतावता च प्रत्यक्षोत्पत्तये इन्द्रियमनसोः संयोगः अत्यावश्यकः। अन्येषु च प्रमाणेष्वपि सत्यपि मनसो महत्वे नैतादृशं प्रतिपादितमस्ति। अस्मिंश्च न्यायदर्शने प्रत्यक्षज्ञाने बहिरिन्द्रियमनःसंयोगस्य विवेचनस्यास्ति वैज्ञानिकं महत्वमिति।

[1] न्या०भा०, सूत्र- 1/1/4, पृ०सं० 21

**गौतमोक्त प्रत्यक्षस्वरूपविचारः**

महर्षिणा गौतमेन प्रदर्शितं प्रत्यक्षलक्षणन्तु **अव्यपदेश्यमव्यभिचारि व्यवसायात्मकं ज्ञानं प्रत्यक्षम्।**[1]

ननूपर्युक्तव्याख्यानेन प्रत्यक्षज्ञानं प्रति मनसः अपरिहार्यत्वमुपपादितम्। न्यायसूत्रेण इन्द्रियार्थसन्निकर्षोत्पन्नमित्युक्तम्। इन्द्रियं विभजता महर्षिणा **"घ्राणरसनचक्षुस्त्वक्-श्रोत्राणीन्द्रियाणि भूतेभ्यः।"**[2] इत्येवमिन्द्रियविभजनेन न मनः परिगणितम्। किञ्च प्रमेय-परिगणनावसरे च इन्द्रियमनसोः पृथक्-पृथक्त्वेन परिगणनस्य दर्शनात् मनसो नेन्द्रियत्व-मुपपद्यते। तेन चात्मादिज्ञाने इन्द्रियार्थसन्निकर्षजन्यत्वाभावे अप्रत्यक्षत्वापत्तिः इति चेन्न, मनसः इन्द्रियत्वाभ्युपगमात्। यदि मनसः इन्द्रियत्वमभ्युपेतं तदा किमर्थमिन्द्रियविभजनसूत्रे साक्षात् नोक्तम्। इति चेत्, धर्मभेदात्। कोऽसौ धर्मभेदः? प्रथमं तावत् बहिरिन्द्रियाणि भूतजन्यानि सम्बद्धानि वा, द्वितीयञ्च तानि प्रतिनियतविषयकानि भवन्ति। मनस्तु अनियतविषयकम्। **"भौतिकानीन्द्रियाणि नियतविषयकानि सगुणानामिन्द्रियभावेति। मनस्तु अभौतिकं सर्वविषयञ्च नास्य सगुणस्येन्द्रियभावः।"**[3]

किञ्चान्येषु समानतन्त्रेषु वैशेषिकादिषु मनसः इन्द्रियत्वेनोक्तत्वादस्मिंश्च शास्त्रे अप्रतिसिद्धत्वाच्च मनसः इन्द्रियत्वे न काप्यापत्तिः। **"तन्त्रान्तरसमाचाराच्चैतत् प्रत्येतव्यमिति परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः।"**[4]

उक्तलक्षणेन ज्ञायते यद् महर्षिणा गौतमेन प्रत्यक्षप्रमाणप्रत्यक्षप्रमित्योः न हि भेद कृतः। न्यायभाष्ये वात्स्यायनेन **"इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज्ज्ञानं तत्प्रत्यक्षम्।"**

---

1 न्यायसूत्र- 1/1/4
2 न्यायसूत्र- 1/1/12
3 चा0भा0, सूत्र सं0- 1/1/4, पृ0सं0- 25-26
4 न्या0भा0, सू0सं0- 1/1/4, पृ0सं0- 26-27

इत्येवं वदता मुख्यत्वेन ज्ञानस्यैव प्रत्यक्षत्वं व्याख्यायता प्रत्यक्षप्रमाप्रमाणयोः वाचकं एकमेव प्रत्यक्षपदमित्येवमभ्युपेत्य द्वयोर्भेदश्च प्रतिपादितम्।

**''अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु सन्निकर्षज्ञानं वा।''**[1] यद्यपि तत्रानन्तरकालिकैः नैयायिकैः इन्द्रियस्यैव प्रत्यक्षत्वं प्रतिपादितम्। तथापि भाष्यकारेण ज्ञानस्येव सन्निकर्षस्य प्रत्यक्षत्वं व्याख्यातम्, न तु इन्द्रियस्येति। तेन च फलाव्यवहितकारणं करणमिति करणलक्षणस्य किं वा प्रमाणलक्षणस्य बीजमुक्तमिति प्रमाणीभवति। एतस्मात् वाक्यात् यदा सन्निकर्षः तदा ज्ञानं प्रमिति। यदा ज्ञानं तदा **''हानोपादानोपेक्षा बुद्धयः फलमितिः।''**[2]

वार्तिककारेणापि भाष्यकारेणेव **''इन्द्रियेण अर्थस्य सन्निकर्षात् यदुत्पद्यते ज्ञानं तत् प्रत्यक्षमिति''**[3] वचनात् मुख्यत्वेन ज्ञानस्य प्रत्यक्षत्वं स्वीक्रियते। केचित्तु सन्निकर्षमेव **''प्रत्यक्षं वर्णयन्ति न तन्न्याय्यं प्रमाणाभावात्, उभयन्तु युक्तं परिच्छेदकत्वात्''** इति वदता सन्निकर्षस्य ज्ञानस्य च प्रत्यक्षत्वं स्वीकृतम्।

भाष्यकारवार्तिककाराभ्यां सूत्रस्य स्वतः पूर्णत्वस्य स्वीकृतत्वेपि वाचस्पतिमिश्रेण प्रमाप्रमाणयोः स्पष्टतया भेदस्याङ्गीकृतत्वात् सूत्रे यतः इति पदस्याध्याहृतत्वेन यतः तादृश प्रत्यक्षं ज्ञानं भवति, तदेव प्रत्यक्षप्रमाणमित्यभिहितम्। **''अत्र च यत इति अध्याहृत्य यत्तदोर्नित्याभिसम्बन्धात् तत्प्रत्यक्षमिति प्रमाणवाची प्रत्यक्षपदं योजनीयम्।''**

## जयन्तभट्टाभिमतप्रत्यक्षस्वरूपविचारः

जयन्तभट्टेनापि प्रमाप्रमाणयोरभेदमन्वानां मतं सम्यगुपस्थाप्य तथासति प्रमाणस्य स्वरूपहानिप्रसङ्गः, लोके च प्रमायाः फलत्वं न तु करणस्येति। प्रमाणादभिन्नमेव फलमस्तु।

---

[1] न्या०भा०, सू०सं०- 1/1/3, पृ०सं०-18
[2] न्या०भा०, सू०सं०- 1/1/3, पृ०सं०-18
[3] न्यायभाष्य, सू०सं०- 1/1/4, पृ०सं०-21

"तदेव चक्षुरादि जनितं कपित्थादिपदार्थदर्शनं विषयप्रकाशेन व्याप्रियमाणमिवाभातीतिकरणमुच्यतामुतदेव विषयानुभवस्वभावत्वात् स्थलमिति कथ्यताम्। तदिदमनुपपन्नं प्रमाणस्य स्वरूपहानि प्रसङ्गात्। करणं हि प्रमाणमुच्यते प्रमीयतेऽनेनेति। प्रमाप्रमाणमिति तु फले प्रमाणशब्दस्य साधुत्वात्, व्याख्यानमात्रं कृतिः करणमितिवत्। तथा च लोकः फलत्वमेव ज्ञानस्यानुमन्यते न करणत्वम्। तथाहि एवं वदति चक्षुषा पश्यामि, लिङ्गेन जानामि इति, नतु ज्ञानेन जानामि इत्येवं व्यपदिष्यन् कश्चिद् दृश्यते।"[1] सूत्रकारेण तु ज्ञानमेव प्रत्यक्षत्वेनोक्तं न तु तत्करणम्। यदि ज्ञानस्य करणमेव प्रत्यक्षं स्यात् तर्हि प्रथमसूत्रकारेण सः सङ्गतिः। इति चेत्। यतः इति पदमध्याहृत्य यतः तथा प्रत्यक्षज्ञानं जायते तदेव प्रत्यक्षमित्याह जयन्तभट्टः-

"यतः शब्दाध्याहार मात्रेण निरवद्य लक्षणोपवर्णनसमर्थसूत्रपदसङ्गतिसम्भवात्। ननु समानाधिकरण एव ज्ञानप्रत्यक्षपदे कथं न व्याख्येये किं यतः शब्दाध्याहारेण? उक्तमत्र करणस्य प्रमाणत्वात् ज्ञानस्य च तत्फलत्वात् फलकरणयोश्च स्वरूपभेदस्य सिद्धत्वात्। तदत्र प्रमाणतायां सामग्रयाः तज्ज्ञानं फलमिश्यते। तेन चक्षुरादेमुपजनयतः करणत्वं ज्ञानस्य फलत्वमेवेति युक्तस्तथा व्यपदेशः- प्रमाणस्य प्रमाणत्वं तस्मादभ्युपगम्यताम्। भिन्नं फलमुपेतव्यमेकत्वेतदसम्भवात्।। यतः इन्द्रियार्थसन्निकर्षोत्पन्नत्वादि विशेषणविशेषितं ज्ञानाख्यं फलं भवति तत्प्रत्यक्षम्।"

एवञ्चेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं यतः प्रमाणाज्जायते तत् प्रत्यक्षम्। एतद्विषये उदयनाचार्यस्यापि ऐकमत्यं दृश्यते। एतावता उपर्युक्त लक्षणलक्षितं ज्ञानं यतः जायते तदेव प्रमाणमिति। त्रिशुको भेदः? इति जिज्ञासायां एवमुच्यते- टीकाकार परिशुद्धिकाराभ्यां सन्निकर्षादेः इन्द्रियादिरूपकरणादेर्वा प्रमाणत्वं स्वीकृतम्। भट्टेन च सामग्र्याः प्रमाणत्वं व्याख्यातमिति।

[1] न्यायमञ्जरी- प्रथमो भागः

## भासर्वज्ञाभिमतप्रत्यक्षस्वरूपविचारः

भासर्वज्ञस्य यथार्थपरोक्षानुभव साधनमेव प्रमाणमभिदधाति। **''सम्यग् परोक्षानुभव साधनं प्रत्यक्षम्।''**[1] अनुभवश्च परोक्षापरोक्षभेदेन द्विविधा। परोक्षानुभवश्च शब्दात्मकः। अपरोक्षानुभवश्च प्रत्यक्षात्मकः। तदर्थं सम्यगिति पदं प्रयुक्तम्।

ननु अनुमानागमयोरपि फलयोः सुखादिवदपरोक्षत्वात् तत्रापि प्रत्यक्षत्व प्रसङ्गः इति चेन्न। अपरोक्षपदस्य जाति निमित्तत्वादनुमानागमाभ्यां जातस्य सुखादेः। अपरोक्षानुभव विषयकत्वेपि अपरोक्षत्व जातेरभावात्। एतावतात्र ज्ञानगता परोक्ष जातियुक्तस्यैवापरोक्षानुभव विषयत्वं, तस्यैव साधनस्य प्रत्यक्षत्वमिति।

एतद् प्रत्यक्षलक्षणस्य नहि सूत्रकारीयप्रत्यक्षेण न विरोधः। **''अपरोक्षत्वस्याव्यवहितत्वेन बोधितत्वात्। अव्यवहितत्वञ्चेन्द्रियार्थसन्निकर्षोत्पन्नत्वमेव।''**[2] तच्च यतो भवति तदेव प्रत्यक्षमिति उक्ते सूत्रकारीय लक्षणे नव्यनैयायिकैः मुख्यतः गङ्गेशोपाध्यायेन अनेकविधानदोषानुद्भाव्यभिन्नमेव लक्षणं निष्पादितमिति। (क) इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षत्वमिति प्रत्यक्षलक्षणस्यानुमाने स्मृतौ चातिव्याप्तिः।

(ख) योगज रूपस्यालौकिक प्रत्यक्षस्य इन्द्रियार्थसन्निकर्षत्वाभावादव्याप्तिः।

(ग) प्रत्यक्षस्य विवेचनमिन्द्रियाधारमाश्रित्येन्द्रियविवेचनस्य च प्रत्यक्षाधारमाश्रित्य सम्पादितत्वाच्चक्रक दोषग्रस्तत्वात् नहि लक्षणमिदं समीचीनं प्रतिभाति। प्रत्यक्षत्वमिति प्रत्यक्षलक्षणं कृतम्। यच्च साक्षात्कारित्वमिन्द्रियसन्निकर्षजन्यमेव भवति। इममेवाऽऽश्रित्य गंगेशोपाध्यायानन्तर कारिकैः प्राचीनन्यायधारामवलम्ब्य ग्रन्थनिर्मातृभिरपि साक्षात्कारि प्रमाकरणं प्रमाणमिति लक्षणं व्यधायि। पाश्चात्य तार्किकैरपि साक्षात्कारित्वमेव प्रत्यक्षस्य प्रमुख लक्षणत्वेन व्याख्यातम्। साक्षात्कारित्वरूपं लक्षणं केवलं प्रत्यक्षे एव संगच्छति। ज्ञातृज्ञेयोर्मध्ये न किमपि

---

[1] न्यायसार भूमिका, पृ0सं0-34
[2] न्यायभूषण- प्रत्यक्ष परिच्छेद

अत्र व्यवधायकं भवति। प्रत्यक्षार्थमनुमानादेरपि नावश्यकता। अनुमानादौ व्याप्तिज्ञानादेः व्यवधानं भवति। उपमितौ च सादृश्यज्ञानं मध्ये अपेक्षितं भवति। शाब्दबुद्धौ च पदज्ञानमपेक्षितं भवति। प्रत्यक्षे तु नान्यस्य कस्यापि अपेक्षा जायते। एतदर्थमेव गंगेशोपाध्यायेन प्रत्यक्षस्य ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति लक्षणं कृतम्।

## ईश्वरीयप्रत्यक्षस्वरूपविचारः

उपर्युक्ते गौतमीये अन्यैश्चानुमोदिते लक्षणे ईश्वरप्रत्यक्षस्य नित्यत्वेनेन्द्रियसन्निकर्षाजन्यतया प्रत्यक्षलक्षणस्याव्याप्तिः स्यात्, तद्वारणार्थमपि ज्ञानाकरणं ज्ञानं प्रत्यक्षमिति लक्षणं कृतवान् मणिकारः। प्रत्यक्षं नित्यमनित्यं वा स्यात् तत्कारणमध्ये ज्ञानस्याप्रवेशात् नहि ज्ञानं कस्मिन्नपि प्रत्यक्षे करणं भवितुमर्हति। अतः अस्य लक्षणस्य सर्वत्र प्रत्यक्षे संघटितत्वात् नाव्याप्तिदोष प्रसङ्गः। अनुमानादौ तु ज्ञानमेव करणत्वेन समायाति अतो न तत्रातिव्याप्तिः। गौतमीयलक्षणस्य लौकिकप्रत्यक्षे एव संघटितत्वेपि नव्यमतसिद्ध प्रत्यक्षलक्षणस्योभयत्रापि संघटितत्वात्। प्राचीननैयायिकलक्षणे समागतानां दोषाणां समाधानं सुकरम्। परन्तु यथा सूत्रकारीयलक्षणस्य निर्दुष्टत्वाभावः तथा एतल्लक्षणं न निर्दुष्टम्। सविकल्पकज्ञाने अव्याप्तेः तस्य निर्विकल्पकज्ञानकरणकत्वात्। अतः सूत्रकारीयं लक्षणमेव साधु। ईश्वरज्ञाने अव्याप्तेषु तादवस्थ्यम्। इति चेत् सत्यं परमत्रावधेयम्। यत् सूत्रकारीयं लक्षणं नहीश्वर प्रत्यक्षस्य लक्षणं किन्तु जीवप्रत्यक्षस्यैव तल्लक्षणलक्ष्यत्वमभ्युपेत्य सूत्रकारीय लक्षणस्य निर्दुष्टता व्यवस्थापनीया। अनेन इदमायाति यत्प्राचीनानां मते इन्द्रियार्थसन्निकर्षोत्पन्नमसंदिग्धं निश्चयात्मकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणम्। एवं नव्यमतानुसारं साक्षात्कारिणी प्रमा ज्ञानाकरणकं ज्ञानं प्रत्यक्षमित्थं द्विविधं लक्षणं प्रदर्शितम्।

**सूत्रकारीय लक्षणघटकपदप्रयोजनम्-** सूत्रकारीय प्रत्यक्षलक्षणे इन्द्रियार्थसन्निकर्षोत्पन्नमिति पदादतिरिक्तानि पञ्चपदानि विद्यन्ते। उक्तपदे चोत्पन्नपदं विहायेन्द्रियमर्थः

सन्निकर्षश्च एतानि त्रीणि पदानि विद्यन्ते। अनया रीत्या अष्टसंख्याकानि पदानि संजातानि। तन्मध्ये प्रत्यक्षपदं विहाय अन्येषां पदानां विवेचनमिदानीं क्रियते-

**इन्द्रियम्-** सूत्रे इन्द्रियार्थसन्निकर्षोत्पन्नमित्यत्र घटकीभूतयो इन्द्रियसन्निकर्षयोर्मध्ये किं तावदिन्द्रियम्? इत्यत्र प्रथमं तावदिन्द्रियविषये उच्यते। यत् न्यायशास्त्रपरिगाणितेषु षोडशपदार्थेषु प्रमेयपदार्थः।[1] स चात्मादिभेदेन द्वादशविधः। तत्र तृतीयं प्रमेयमिन्द्रियं भवति। तस्य लक्षणमकृत्यैव भेदं प्रदर्शयति सूत्रकारः- **''घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः''**[2] इति सूत्रेण। स्वविषयग्रहणे कारणानि तानीन्द्रियाणि भवन्ति। अतश्चोच्यते। भोगसाधनानीन्द्रियाणीति। भोगस्तावत् सुखदुःख साक्षात्कारः। यद्यपि कस्यापि लक्षणमुक्त्वैव विभागः करणीयो भवति। अत्र च लक्षणमनिष्पाद्यैव कथं विभागः क्रियते इति चेत्। घ्राणादीनामुपदेशेनैव पदनिर्वचनात् लक्षणस्योक्तत्वादिन्द्रियोद्देश मात्रावगमात् नैषदोषः- **''समाख्या निर्वचन सामर्थ्यात् स्वविषयग्रहणलक्षणानीन्द्रियाणीति।''**[3]

**समीक्षा-** वस्तुतस्तु नामनिर्देशादेव तत्तदिन्द्रियाणां लक्षणस्यान्तरनिहितत्वान्नोक्त दोषाणामवसरः। कथं? जिघ्रत्यनेनेति घ्राणम्। जिघ्रति नाम गन्धविषयकं ज्ञानं करोति। ज्ञानं तावत् साक्षात्कार एव। एतावता च "जिघ्रति" इत्यनेन गन्धविषयकसाक्षात्कार साधनमिति फलितोऽर्थः। तथैव रसयति अनेन इति रसनम्। चष्टे इति चक्षुः। त्वक् स्थानमिन्द्रियमिति त्वक्। शृणोत्यनेनेति श्रोत्रम्। इत्थं विध व्युत्पत्तिभिः साक्षात्कार साधनमेव इन्द्रियम्। एतच्च स्पष्टीकरोति वार्तिककारः- करणस्वभावतानि इन्द्रियाणीति। इन्द्रियाणां यत् स्वविषयग्रहणं तेन गृह्यन्त इति स्वविषयग्रहण लक्षणत्वं वेदितव्यमसाधारणत्वादिति। इन्द्रियामतीन्द्रियत्वेन तानि

---

[1] न्या0सू0- 1/1/8

[2] न्या0सू0- 1/1/11

[3] न्या0भा0, सू0सं0- 1/1/12, पृ0सं0-40

चानुमेयानि- **''इन्द्रियाणामतीन्द्रियत्वात् सर्वदा स्वविषयोपलब्धिकारणत्वेनैव अनुमातव्यानीति।''**[1]

नैयायिकास्तावदिन्द्रियाणां करणत्व प्रसाध्यात्मनोऽधिष्ठातृत्वं निष्कृष्टमिन्द्रियलक्षण-मित्थमुक्तं- **''शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनः संयोगाश्रयत्व-मिन्द्रियत्वमिति।''**[2] अत्र लक्षणे यदि ज्ञानकारण मनः संयोगाश्रयत्वमात्रं निवेश्यते तदा-ऽऽत्मचर्मणोरतिव्याप्तिः। विशेषणोपादाने चाऽऽत्मनः चर्मणश्च ज्ञानकारणमनः संयोगा-श्रयत्वेऽपि शब्देतरेषामुद्भूतरूपाणां सुखादीनामात्मनि रूपस्य च चर्मणि विद्यमानत्वात् नातिव्याप्तिः। श्रोत्रस्योद्भूतशब्दस्याऽऽश्रयत्वात् तद्वारणाय शब्देतरेति विशेषणम्। तदनुपादाने उद्भूतविशेषगुणानाश्रयत्वे सतीत्यस्यैवोपादाने उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे विद्यमानत्वादव्याप्तिप्रसङ्गात् शब्देतरपदोपादानम् उद्भूतपदं विहाय शब्देतरविशेषगुणानाश्रयत्व-मात्रस्योपादाने चक्षुरादौ स्थितानां रूपादीनाञ्च विशेषगुणत्वात् चक्षुरादीनाञ्च रूपादि विशेषगुणाश्रयत्वात् चक्षुषादौ इन्द्रियलक्षणस्याव्याप्तिप्रसङ्गात्। तद्व्युदासायोद्भूतपदमुपात्तम्। तदुपादाने च चक्षुरादि गतस्य रूपादेरनुद्भूतत्वात् नाव्याप्तिप्रसङ्गः। शब्देतरोद्भूतसंयोगादेः चक्षुरादौ सत्वात् विशेषपदमुपात्तम्। संयोगादेः उद्भूतत्वेपि-

**''बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सासिद्धिको द्रवः।**[3]
**अदृष्टभावनाशब्दाः अमी वैशेषिकगुणाः।''**[4]

इति कथनात् विशेषगुणत्वाभावात्। चक्षुरादौ चोद्भूतसंयोगादेरविशेष्य आश्रयत्वेऽपि उद्भूतविशेषस्यानाश्रयत्वात् नहि अव्याप्तिः। यदि ज्ञानकारणसंयोगाश्रयत्वमिति विशेष्यदलं नोपादीयते तदा तस्यापि कालस्य विशेषगुणाश्रयत्वाभावादतिव्याप्ति प्रसज्येत। तद्वारणाय

---

1 तात्पर्यटीका
2 न्या0सि0मु0- प्रत्यक्षखण्ड
3 न्या0सि0मु0- प्रत्यक्षखण्ड का0-90
4 न्या0सि0मु0- प्रत्यक्षखण्ड का0-91

विशेष्यदलम्। ज्ञानकारणमनःसंयोगाश्रत्रयत्वाभावात् कालेनातिव्याप्तिः। आदिपदेन दिशः ग्रहणं क्रियते।

एवं विधमुक्तलक्षणलक्षितमिन्द्रियं प्रथमं तावत् बाह्याभ्यन्तरभेदात् द्विविधं भवति। बाह्यं तावत् पूर्वोक्तं पञ्चविधमाभ्यन्तरमिन्द्रियं मनः। तेषु मनसो विषयः आत्मा तद्गतं सुखदुःखादिकञ्चबाह्यनाञ्च पञ्चविधानामिन्द्रियाणां यथा क्रमं गन्ध, रस, रूप, स्पर्श, शब्दादयो विषयाः। येषां विवरणमधः करिष्यते। यद्यपि सांख्यादिदर्शनेषु कर्मेन्द्रियाणि चादाय दशविधानि बाह्येन्द्रियाणि परिलक्षितानि सन्ति। परन्तु नैयायिकाः वैशेषिकाश्च कर्मेन्द्रियाणि न स्वीकुर्वन्ति। अतः कर्मेन्द्रियाणामिन्द्रियत्वेन न्यायशास्त्रेऽस्वीकारात् बाह्येन्द्रियपदेन घ्राणादीनि पञ्चविधानीन्द्रियाणि। एवमन्तरिन्द्रियत्वेन मनसः एव प्रतिपादनादिमिन्द्रियाणां स्वरूपं विविच्यते।

**घ्राणेन्द्रियम्-** यद्यपि न्यायसूत्रे इन्द्रियलक्षणं नोपलभ्यते न वा घ्राणादीनां तत्तदिन्द्रियाणामपि लक्षणमपि न लभ्यते। भाष्यकारेण व्युत्पत्तिबलेन घ्राणमित्थं प्रकारेण लक्षितं- **''जिघ्रत्यनेनेति घ्राणं गंधं गृह्णातीति।''**[1] इत्थप्रकारेण यद्गन्धग्राहकमिन्द्रियं तद्घ्राणमिति। अत्र ग्राहकं तावत् न ग्रहणकर्तृ प्रत्युत इन्द्रियार्थसन्निकर्षे अर्थ ज्ञाने च सहयोग कर्तृ तथा क्षममिति यावत्। घ्राणेन्द्रियञ्च पार्थिवं भवति, तत्साधनाय इत्थं प्रकारकमनुमानं भवति- **''घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्, कुङ्कुमगन्धाभिव्यञ्जक गोघृतवत्।''**[2] अनेन च घ्राणेन्द्रियेण संयुक्तसमवायसम्बन्धेन गन्धः गृह्यते।

**रसनेन्द्रियम्-** समाख्यानिर्वचनसामर्थ्यादेव रसनेन्द्रियमपि सिद्धं भवति। **''रसयत्यनेनेति रसनं, रसनं गृह्णातीति।''**[3] एतल्लक्षणन्तु रसविषयकप्रत्यक्षजनकत्वे सतीन्द्रियत्वम्।

---

[1] न्यायभाष्य, 1/1/12, पृ0सं0-40
[2] मुक्तावली- प्रत्यक्षखण्ड
[3] न्यायभाष्य, 1/1/12, पृ0सं0-40

एतच्चेन्द्रियं जिह्वाग्रवर्ति जलीयञ्च भवति। एतच्चेन्द्रियमितीन्द्रियमेव भवति। तत्सिद्धश्चानुमान प्रमाणेन भवति। अनुमानाकारश्च **"रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात्, सत्तुरसाभिव्यञ्जकोदकवत्।"**[1] अनेन रसनेन्द्रियेण संयुक्तसमवायसम्बन्धेन रसस्य प्रत्यक्षं जायते।

**चक्षुः-** रूपस्योपलब्धौ साधनीभूतमिन्द्रियमेव चक्षुः। **"चष्टे अनेन इति चक्षुः, रूपं पश्यतीति।"**[2] रूपविषयकप्रत्यक्षजनकत्वे सतीन्द्रियत्वं चक्षुषो लक्षणम्। तच्च चक्षुः कृष्णताराग्रवर्ति भवति। अत्र लक्षणे विशेषणदलं यदि न दीयते तदा विशेष्यभूतस्येन्द्रियत्वस्य घ्राणादावपि विद्यमानतयाऽतिव्याप्तिः स्यात्। तन्निराशाय रूपविषयकप्रत्यक्षजनकत्वे सतीति विशेषणमुपात्तम्। विशेष्यदलानुपादाने च चक्षुः संयुक्तसमवायात्मके सन्निकर्षेऽतिव्याप्तिः स्यात्, अतः विशेष्यदलम्। चक्षुः पदञ्चादादिचणीयात् **"चक्षिङ् व्यक्तायां वाचि"** इत्यस्माद्धातोः **"चक्षेः शिच्च"**[3] इत्यनेन **'उसि'** निष्पद्यते, तस्यार्थः रूपग्राहकमिन्द्रियं भवति। चक्षुरिन्द्रियं तैजसं तदप्यतीन्द्रियं तज्ज्ञानञ्चानुमानादेव भवति। अनुमानाकारश्च- **"चक्षुः तैजसं द्रव्यत्वे सति परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्, प्रदीपवत् प्रभावद्वा।"**[4] अस्मिंश्चेन्द्रिये किरणजातानां सत्वादुन्मीलिते सति चक्षुर्गोलकात् कनीनिकातो वा किरणजातानि वस्तूनि संयुक्तानि भवन्ति। तथा च संयोगसन्निकर्षेण घटादिद्रव्यस्य द्रव्यगतरूपादीनाञ्च संयुक्तसमवायसम्बन्धेन चक्षुषा ग्रहणं भवति।

**त्वक्-** स्पर्शस्योपलब्धौ साधनीभूतमिन्द्रियं त्वक्। अतः उच्यते **"इन्द्रियं स्पर्शग्राहकं त्वक्"।**[5] निष्कृष्टं तल्लक्षणन्तु **स्पर्शविषयकप्रत्यक्षजनकत्वेसति इन्द्रियत्वम्।**

---

[1] मुक्तावली- प्र0ख0
[2] न्या0भा0, सू0सं0- 1/1/12, पृ0सं0-40
[3] औणादिक सूत्र
[4] मुक्तावली- प्र0ख0
[5] तर्कसंग्रह- प्र0ख0

अयमुष्णः, अयं शीतः, इत्याकारकं यत् प्रत्यक्षं तज्जनकत्वेसतीन्द्रियत्वं त्वगिन्द्रिये विद्यते। अतः लक्षणसमन्वयः। विशेष्यमात्रस्योपादाने चक्षुरादावतिव्याप्तिः। विशेषणमात्रस्योपादाने च आत्मन्यतिव्याप्तिः। एतद्दोषपरिहारार्थमुभयपदोपादानम्। यथा चक्षुरादेः प्रदेशस्य घटस्य वा सन्निकर्षे अन्यघटस्यासन्निकर्षः अप्रत्यक्षञ्च न तथा त्वचः। प्रत्युत एक घटस्य शरीरस्य एक देशस्थया त्वचासः सन्निकर्षे जाते अन्यदेशस्थया त्वचा अन्यस्य घटस्य सन्निकर्षसम्भवात् ज्ञानस्य च सम्भवात् तच्च त्वगिन्द्रियं सर्वशरीरवृत्ति भवति। नखादीनान्तु रक्तादि मलरूपतया नावयवत्वम्। **''वस्तुतो नहि दृश्यमाना त्वगिन्द्रियं भवति। अपितु तदन्तरनिहित-मतीन्द्रियमितित्वक् स्थानमिन्द्रियं, त्वक् तदुपचारः, स्थानादिति।''** एतच्चेन्द्रियं वायवीयं तत्रानुमानञ्च **''त्वक् वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्चकत्वात्, अङ्गसङ्गि सलिलशैत्याभिव्यञ्जक व्यजनपवनवत्।''**[1] त्वक् पदञ्च तुदादिगणीयत्वात् त्वचसम्वरणे इत्यस्माद्धातोः क्विपि सिद्ध्यति। त्वगीन्द्रियेण संयुक्तसमवायसम्बन्धेनाऽऽत्मनि द्रव्यगतस्पर्शज्ञानं जायते।

**श्रोत्रम्-** शब्दस्योपलब्धौ साधनीभूतमिन्द्रियं श्रोत्रं भवति। अन्यानीन्द्रियाणि भौतिकानि किं वा पृथवी, जल, तेजो, वायुरूपभूतजन्यानि। आकाशस्य नित्यत्वात् श्रोत्रन्तु न हि आकाशस्वरूपभूतजन्यं, अपितु आकाशात्मकम्। यथा घटान्तरभूतमाकाशं घटाकाशमित्युज्यते तथैव कर्णशष्कुल्यवच्छिन्नमाकाशं श्रोत्रमित्युच्यते। ननु आकाशस्य नित्यत्वात् श्रोत्रस्य चाऽऽकाशविशेषस्वरूपत्वात्, बधिरस्यापि शब्दश्रवणं स्यात्, बाधिर्यं वा न स्यात्, इति चेत् सत्यम्। परमदृष्टस्य सहायकत्वात् श्रोत्रस्यादृष्टविशिष्टाकाशत्वात्। तथा चापेक्षिता दृष्टाभावात् भवति बाधिर्यम्। आकाशस्य एकत्वेऽपि तदुपाधेः कर्णशष्कुल्यादेर्भेदात् श्रोत्रं पुरुषभेदेन भिन्नं-भिन्नं भवतीति विज्ञेयम्। श्रोत्रपदञ्च 'श्रु' श्रवणे इत्यस्माद्धातोः शृणोत्यनेन इत्यस्मिन्नर्थे 'ष्ट्रनि' प्रत्यये निष्पद्यते। तथा च शब्दग्राहकमिन्द्रियं श्रोत्रमित्यर्थः भवति। एतच्चेन्द्रियं शब्दग्रहणे समवायसम्बन्धेन सहकारि भवति।

---

[1] मुक्तावली- प्र०ख०

**मनः- सुखाद्युपलब्धि साधनमिन्द्रियं मनः।**[1] उपलब्धिश्च साक्षात्कारः। तथाहि सुखादि विषयक प्रत्यक्षनिष्ठकार्यतानिरूपितकारणताश्रयत्वेसतीन्द्रियत्वं मनसोलक्षणम्। सुखादि-विषयकप्रत्यक्षन्तु अहं-सुखीत्याद्यकारकम्। तत्करणत्वस्येन्द्रियत्वस्य च मनसि विद्यमानत्वात् भवति लक्षणसमन्वयः। मनसः करणत्वञ्च- **''सुखादिसाक्षात्कारः सकर्णकः जन्यसाक्षात्कारत्वात् चाक्षुषादि साक्षात्कारवत्''** इत्यनुमानेन सिद्धयति। उपर्युक्तमनसः लक्षणे विशेष्यभूतस्येन्द्रियत्वमात्रस्योपादाने चक्षुरादावतिव्याप्तिः। सत्यन्तमात्रपदस्योपादाने चात्मनि अतिव्याप्तिः। अतः तन्निवारणार्थं विशेष्यविशेषणोभयपदोपादानम्।

ननु **शब्देतरोद्भूत विशेषगुणानाश्रयत्वे सति ज्ञानकारणीभूत मनः** संयोगाश्रयत्वस्वरूप इन्द्रियलक्षणे मनसः प्रवेशात्। एवं सुखाद्युपलब्धि साधनमिन्द्रियं मनः इति मनसोलक्षणे इन्द्रियत्वस्य च प्रवेशाद्भवत्यन्योन्याश्रयदोषः। एवञ्च मनसो लक्षणे इन्द्रियत्वस्य निवेशेन तल्लक्षणस्य मनः पदघटितत्वादात्माश्रयत्वमिति चेन्न। इन्द्रियत्वस्य जातित्वाभावेऽपि मनसत्वस्य जातित्वेनेन्द्रियलक्षणे प्रविष्टस्य मनसः स्वरूपतो भानात्। तथा च भाने इन्द्रियलक्षणे मनसः प्रविष्टत्वेऽपि नेन्द्रियाधिकमात्रं काप्यापत्तिः। आत्माश्रयविषये च मनस्त्वजातिभावं सुखाद्युपलब्धिकारणत्वं वा इति मनसः लक्षणस्याङ्गीकृतत्वात् नहि कश्चन दोषः। **मनश्च कीदृशमित्याकारकजिज्ञासायामात्रोच्यते।**

सर्वेषामिन्द्रियाणां स्वस्वविषयेषु युगपद् सन्निकर्षस्य सत्वेपि एकदा एकस्य विषयस्य ज्ञानसम्भवात्। सर्वत्रज्ञाने स्वस्वविषयग्राहकबाह्येन्द्रियाणि अतिरिच्य किञ्चनसामान्यं तत्वमपेक्षितं भवति। यस्य सहकारमन्तरा ज्ञानं नोत्पद्यते इति बोधः सञ्जायते। तावता च मनसः अव्यापकत्वमणुत्वञ्च सिद्धं भवति।

---

[1] तर्कसंग्रह- प्र०ख०

उक्तञ्च न्यायसूत्रे- **''ज्ञानायौगपद्यादेकं मनः''**[1] **''यथोक्तहेतुत्वाच्चाऽणुः''**[2]। मनसः अनेकत्वे महत्वे वा सर्वेन्द्रियसन्निकर्षात् युगपद्विषयाणामुपलब्धिः स्यात्। तथानुभवाभावात् सिद्धमुक्तपूर्वम्। किञ्चन खादतः पश्यतो वा सावधानस्य जनस्य युगपदनुभूयमानस्य नैकविषयस्य ज्ञानस्य सत्वादेकदा, एकविषयकमेव ज्ञानं न किन्तु नैक विषयकमित्यपि न वाच्यम्। तत्रापि क्रमेणैव ज्ञानोत्पत्तेरभ्युपगमात्। यथा एकत्र संस्थापितेषु शतदल- कमलपत्रेष्वपरितः सूच्या भेदने कृते शीघ्रतावशात् एकदैव सूची भेदः इति मिथ्यात्मिका यौगपद्य प्रतीतिर्जायते। तथैव मनसः एकत्वेपि अत्यन्तवेगशालित्वात् रौध्र्यात् ज्ञानेन्द्रियैः सह सम्बन्धसद्भावात् यौगपद्य प्रतीतिरनुभूयते। उक्तञ्च एतद्सर्वं न्यायभाष्ये- **''न युगपदनेकक्रियोपलब्धेः''**[3] इति न्यायसूत्रस्थे **अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति, पन्थानं पश्यति, शृणोत्यारण्यजान शब्दान विभेति, व्याललिङ्गानि बुभुत्सते, स्मरति च गन्तव्यं स्थानीयमिति क्रमस्याऽग्रहणात् युगपदेताः क्रिया इति प्राप्तं मनसो बहुत्वमिति।''**[4]

तदनन्तरसूत्रस्थभाष्ये **''अलातचक्रदर्शनवत्तदुपलब्धिराशुसंचारात्।''**[5] ''आशुसंचारादलातचक्रस्य भ्रमतो विद्यमानः क्रमो न गृह्यते, क्रमस्याग्रहणादविच्छेदबुद्ध्या चक्रवद् बुद्धिर्भवति। यथा बुद्धीनां क्रियाणां चाशुवृत्तित्वात् विद्यमानः क्रमो न गृह्यते। क्रमस्याग्रहणाद् युगपत् क्रिया भवन्तीति अभिमानो भवतीति।''[6] एतावता न्यायसिद्धान्ते इत्थं प्रकारेण मनसस्स्वरूपं प्रदर्शितम्-

(क) मनः आन्तरिन्द्रियम्

(ख) आत्मगत सुखादीनां स्वविषयकत्वेपि प्रत्येकेन्द्रियजन्यज्ञाने च सहकारित्वम्

---

[1] न्यायसूत्र- 3/2/58
[2] न्यायसूत्र- 3/2/61
[3] न्यायसूत्र- 3/2/59
[4] न्यायभाष्य- 3/2/59, पृ0सं0- 335-336
[5] न्यायसूत्र- 3/2/60
[6] न्यायभाष्य- 3/2/60, पृ0सं0- 336

(ग) प्रतिशरीरं भिन्नमेकैकम्। अनेकत्वे च ज्ञानयौगपद्यापत्तिः।

(घ) क्रियावत्वाभावे क्रमेणेन्द्रैय सः सन्निकर्षाभावात्

(ङ) तथा च क्रियावत्वात् मूर्तत्वं मूर्तत्वेऽपि अवयवरहितत्वात् फलतोवयवानाश्रितत्वाच्च नित्यम्।

(च) वेगादिगुणाश्रयत्वात् क्रियाश्रयत्वाच्च द्रव्यम्।

(छ) कर्णत्वादचेतनम्, चेतनत्वे च एकस्मिन्शरीरे चेतनद्वयसत्वे व्यवस्थानुपपत्तेः। तथा च उपर्युक्तकथनाद् मनसो वैशिष्ट्यं महत्वचोद्धारितं भवति।

**अर्थपदार्थचिन्तनम्-** ज्ञेयो विषय एव अर्थपद वाच्यो भवति। स एव पदार्थपदने व्यवह्रयते। येन चेन्द्रिवयेण यद्विषयकं ज्ञानमुत्पद्यते स च विषयः अर्थ इत्यभिधियते। इन्द्रियाणि तावन्न स्वग्राहकानि अपितु ग्राह्याणां विषयाणां सान्निध्ये एव ग्राहकाणि भवन्ति। तथा च घ्राणजज्ञानार्थं घ्राणातिरिक्तान्यदपि किञ्चिदपेक्षितं भवति। येन विना न जिघ्रेत् घ्राणम्। बाह्यपदार्थविषये दर्शनानामनेकविधानि मतानि दृश्यन्ते। विज्ञानवादिबौद्धमते क्षणिकविज्ञानस्यैव वास्तविकसत्ता दृश्यमानानामनुभूयमानानां वा वस्तूनान्तु कल्पनामात्रो वेग। शून्यवादिनां बौद्धानां मते च विज्ञानस्यापि सत्ता नास्ति। अद्वैतवेदान्तिनां मते सर्वं जगत् निर्विशेषाद्वैतरूपस्य ब्रह्मणो जृम्भण मात्रम्। तदेव ब्रह्म सदात्मकं तदतिरिक्तं सर्वं जगत् भ्रममात्रम्। न्यायवैशेषिकदर्शनेषु सर्वैः अनुभूयमानानां बाह्याभ्यन्तरोभयविधानां पदार्थानामस्तित्वं निर्विवादतया सिद्धम्।

अर्थपदेन तावदस्माभिः अनुभूयमाना दृश्यमाना वा सर्वे पदार्थाः ग्राह्याः। सूत्रे तु मुख्यत्वेन निर्देशनात् गन्धरसरूपस्पर्शशब्दा अर्थपदेन बोधिता भवन्ति। उक्तञ्च महर्षिणा गौतमेन **''गन्धरसरूपस्पर्शशब्दादीनां स्पर्शपर्यन्ताः पृथिव्याः''**[1] गुणाः तदर्थाः। एते एव अर्थाः सूत्रस्य प्रत्यक्षलक्षणघटकीभूत अर्थपदेन वाच्या भवन्ति।

---

[1] गो०सू० – 3/1/60

## (ख) प्रत्यक्षस्य प्रामाण्यव्यवस्थापनम्

प्रत्यक्षस्वरूपनिरूपणात्प्राक् प्रत्यक्षस्य प्रामाण्यमस्ति नवेति विचार्यते-

**प्रमाणस्य भावः प्रामाण्यम्।** प्रमाणे प्रकारीभूतो धर्मः प्रामाण्यपदेन अभिधीयते। प्रमा जनकत्वं प्रमाणत्वम्। प्रमा च तद्वत्तत्प्रकारकज्ञानविशेषः। स एव प्रमाणे प्रकारीभूत-धर्मत्वेन प्रतीयते। तदुक्तं-

**''यदपि प्रमाण विशेषमनधिगतार्थग्राहित्वमभिधियते परैस्तदपि न साम्प्रतम्, प्रमाणस्य गृहीततदितरविषयप्रवृत्तस्य प्रामाण्ये विशेषाभावात्।''**[1]

तत्र भवेन्नाम परोक्षज्ञानजनकप्रमाणेषु यथार्थजनकज्ञानसन्देहः। प्रत्यक्षप्रमाणे हि यथार्थज्ञानजनकत्वे संदेहो नास्ति। अतः प्रत्यक्षस्य प्रामाण्यं सर्वैः दार्शनिकैः स्वीक्रियते।

तत्र भ्रमात्मकमपि प्रत्यक्षज्ञानं भवति। तत्र दुष्टेन्द्रियसन्निकर्षेण जायमानतया तज्ज्ञानस्य प्रमात्वमेव नास्ति। अतः संदेहजनकत्वे इन्द्रियादि नाम प्रामाण्यस्याऽपत्तिरेव नास्ति। उक्तञ्च जयन्तभट्टेन- **''प्रमाणस्य तु न किञ्चिद् बाध्यं पश्यामो येन तदप्रमाणमिति व्यवस्थापयामः।''**

वह्नयनुष्णः द्रव्यत्वाज्जलवदित्यनुमाने प्रत्यक्षबाधः विद्यते। यतः त्वगिन्द्रिय-सन्निकर्षात्वह्निविषयिणी उष्णता प्रतीयते। अतः एतादृशानुमाने प्रत्यक्षबाधः वर्तते। एवमेव नेह नानास्ति किञ्चन इति श्रुत्या प्रपञ्चेऽतात्विकत्वं बोध्यते। परन्तु तत्रापि हानोपादानव्यवहार-विषयतया प्रपञ्चे प्रत्यक्षतः सत्वं प्रतीयते। अतः शब्दप्रमाणस्यापि प्रत्यक्षेण बाधो भवति। परन्तु प्रत्यक्षप्रमाणे किमपि प्रमाणं बाधकं नास्ति। अतः प्रत्यक्षस्य प्रामाण्यमव्याहतम्।

प्रामाण्यपदेन प्रमात्वस्यापि ग्रहो भवति। **'प्र'** पूर्वक **'मा'** धातोः भावे **'घञ्'** प्रत्यये सति निष्पन्नं प्रमाणपदम् यथार्थज्ञानबोधकमस्ति। तत्प्रकारीभूतः धर्मः प्रमाणपदेनाभिधीयते।

---

[1] न्या०मं०

अतः प्रमात्वं प्रामाण्यञ्च समानार्थकबोधकौ शब्दौ। तत्र प्रमात्वस्य स्वतो ग्राह्यत्वे परतो ग्राह्यत्वे च विवादः। तत्र नैयायिकाः प्रमात्वस्य स्वतो ग्राह्यत्वं न स्वीकुर्वन्ति-

**"प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः॥"**[1]

विप्रतिपत्तिस्तु- "ज्ञानप्रामाण्यं, **तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वेति"** बोध्या। अत्र यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षः तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्-ग्राह्यत्वमेव साध्यं, न तु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वमिति लाभार्थं विशिष्टसाध्यघटक-घटत्वादिप्रकारकज्ञानपरं पक्षे 'ज्ञान' पदं बोध्यम्। तदप्रामाण्येत्यादिसाध्ये तत्पदेन यद्धर्म-घटितज्ञानप्रामाण्यं पक्षः तद्धर्मघटितज्ञानं ग्राह्यं, तादृशज्ञानाऽप्रामाण्याऽग्राहिका यावती तादृश-ज्ञानग्राहिकासामग्री तज्जन्यग्रहविषयत्वं न वेत्यर्थः। तादृशो ग्रहः गुरूमते व्यवसायः, स च **'अयं घटः घटत्वेन घटमहं जानामी'**त्याकारकः समूहालम्बनात्मको घटत्वधर्मघटितो यदि तदा **'अयं घटः घटत्वेन घटमहं जानामी'**त्याकारकसमूहालम्बनज्ञानप्रामाण्यं पक्षः, तादृश समूहालम्बनज्ञानाप्रामाण्याऽग्राहिका यावती तादृशसमूहालम्बनज्ञानग्राहिकासामग्री चक्षुः संयोगादिरूपा, तज्जन्यतादृशसमूहालम्बनव्यवसायविषयत्वं ज्ञानप्रामाण्येऽस्तीति समन्वयः। भट्टमते तादृशग्रहोऽनुमितिः। तन्मते सर्वमेव ज्ञानमतीन्द्रियम्, अतो घटत्ववति घटत्व-प्रकारकत्वविशिष्टमतीन्द्रियं यद्घटज्ञानं तत्प्रामाण्यं पक्षः, तादृशाऽतीन्द्रियज्ञानाऽप्रामाण्याऽ-ग्राहिका यावती तादृशाऽतीन्द्रियज्ञानविषयकग्रहस्य **'इयं ज्ञातता घटत्ववति घटत्व-प्रकारकज्ञानजन्ये'**त्याकारकस्यानुमित्यात्मकस्य जनिका परामर्शादिघटिता सामग्री तज्जन्य-तादृशानुमित्यात्मकग्रहविषयत्वं तादृशातीन्द्रियज्ञानप्रामाण्ये पक्षे इति समन्वयः।

मिश्रमते तादृशो ग्रहोऽनुव्यवसायः, स च **'अयं घटः'** इति व्यवसायात्मक-ज्ञानाऽव्यवहितोत्तरजायमानो **'घटत्वेन घटमहं जानामी'**त्याकारकव्यवसायात्मकज्ञानाऽ-प्रामाण्याऽग्राहिका यावती **'अयं घटः'** इति व्यवसायात्मकज्ञानाव्यवहितोत्तरजायमानो 'घटत्वेन

---

[1] न्यायसिद्धान्तमुक्तावली, कारिका-136

घटमहं जानामीत्याकारकमानसज्ञानात्मकः। एतन्मते **'अयं घटः'** इति ज्ञानप्रामाण्यं यदा पक्षस्तदा **'अयं घटः'** इत्याकारकव्यवसायात्मकज्ञानाऽप्रामाण्याऽग्राहिका यावती **'अयं घटः'** इति व्यवसायज्ञानविषयकज्ञानजनिकासामग्री आत्ममनःसंयोगादिरूपा, तज्जन्यो **'घटत्वेन घटमहं जानामी'**त्यनुव्यवसायात्मकग्रहः तद्विषयत्वम् **'अयं घटः'** इति व्यवसायात्मकज्ञानप्रामाण्ये वर्तते इति रीत्या साध्य समन्वयः।

'यावत्' पदानुपादाने मीमांसकमते सिद्धसाधनं स्यात्, **''घटज्ञानं प्रमा, सर्वमभिधेयम् समर्थप्रवृत्तिजनकत्वात्, वाच्यत्वात्''** इति समूहालम्बनात्मकानुमितेः सर्वैः स्वीकारात्, घटज्ञाना-प्रामाण्याऽग्राहिका घटज्ञानविषयकनिरुक्तसमूहालम्बनात्मकानुमित्यात्मकग्रहजनिका 'प्रमात्वव्याप्यसमर्थप्रवृत्तिजनकत्ववद्घटज्ञानमभिधेयत्वव्याप्यवाच्यत्ववत्सर्वं चेतिसमूहालम्बनात्मक-परामर्शात्मिका सामग्री तज्जन्यनिरुक्तसमूहालम्बनात्मकानुमितिरूपग्रहविषयत्वस्य घटज्ञानप्रमात्वे नैयायिकमीमांसकोभयमतसिद्धत्वात्। यावत्पदोपादाने तु तदप्रामाण्याऽग्राहिका यावती ज्ञानग्राहिका सामग्री यथायथं चक्षुःसंयोगात्मिका ज्ञाततालिंगकपरामर्शात्मिका, मनः संयुक्त-समवायादिका च, यथायथं तज्जन्यः समूहालम्बनात्मको व्यवसायः, ज्ञाततालिङ्गकानुमितिः, अनुव्यवसायश्च, तद्विषयत्वं प्रमात्वे न नैयायिकमतसिद्धमतो न सिद्धसाधनमिति। अत्र सामग्र्यां न यावत्वं, यावत्सामग्रीजन्यज्ञानस्यैवाऽप्रसिद्धेः, किन्तु ग्रहे। यावत्पदस्य व्यापकत्वमर्थः। तथा च तदप्रामाण्याऽग्राहकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकं न वेति फलितोर्थः।

सामग्रीपदानुपादने साध्याऽप्रसिद्धिः। तदप्रामाण्याऽग्राहकज्ञानग्राहकजीवात्मशरीरादि-जन्ययावद्ग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकत्वादिरूपे कुत्रापि प्रमात्वेऽप्रसिद्धेः। तदुपादाने तु प्रागभावरूपसामग्रीमादाय तज्जन्ययावद्ग्रहविषयत्वस्य प्रमात्वे सत्वान्नाऽप्रसिद्धिः। जीवात्म-शरीरादिकं तु न सामग्रीति भावः। तदप्रामाण्याऽग्राहकेतिपदानुपादाने घटत्ववति घटत्वप्रकारकज्ञाने **'इदं ज्ञानमप्रमा'**इत्यप्रामाण्यग्रहे जायमाने सति तादृशज्ञानाऽप्रामाण्यग्राहक-तादृशज्ञानग्राहकसामग्रीजन्यतादृशाऽप्रामाण्यज्ञानास्कन्दितग्रहविषयत्वस्य पक्षेऽभावात् बाधः स्यात्।

तदुपादाने तु तदप्रामाण्याऽग्राहकज्ञानग्राह्यसामग्र्येव साध्यघटकीभूता, तथा च **'अयं घटः'** इति व्यवसायगताऽप्रामाण्यग्रहाऽजनिका तादृशव्यवसायविषयकग्रहजनिका यथायथं चक्षुस्संयोगपरामर्श-मनःसंयोगात्मिका तज्जन्यसमूहालम्बनव्यवसायज्ञाततालिङ्गकानुमित्यनु-व्यवसायात्मकग्रहविषयत्वस्य साध्यत्वेन तादृशविषयत्वाऽभावस्य पक्षेऽसत्वान्न बाधः।

**'तदप्रामाण्याऽग्राहक'** इत्यत्र **'तत्'** पदानुपादाने पटादौ **'अयं घटः'** इदं ज्ञानमप्रमेतिज्ञानप्रामाण्यं यत्र पक्षः, तत्र **'अयं घटः, इदं ज्ञानमप्रमे'**ति ज्ञानग्रहजनक-तदप्रामाण्यग्रहाऽजनकसामग्र्येव न प्रसिध्यति, तत्र ज्ञानग्राहिका मनः संयुक्तसमवाया-द्यात्मकसामग्र्या एवाप्रामाण्यग्राहकत्वात्।

ननु स्वतस्त्ववादिनः के? गुरुमिश्रभट्टास्त्रयः। प्रभाकरः गुरुः, मुरारिमिश्रः, कुमारिलभट्टः।[1] ते हि प्रमात्वं- ज्ञानवृत्तित्वविशिष्टं तद्वति तत्प्रकारकत्वं, स्वतोग्राह्यं तदप्रामाण्याग्राहकयावत्सामग्रीजन्यग्रहविषय इति वदन्तीत्यर्थः। गुरूणां प्रभाकराणां मते ज्ञानस्य ज्ञानमात्रस्य, स्वप्रकाशरूपत्वात्- स्वाऽभिन्नज्ञानविषयत्वाऽवश्यकत्वाज्ज्ञानस्य तत्प्रमात्वस्य च ज्ञानान्तरग्राह्यत्वे तद्ग्रहणार्थं पुनर्ज्ञानान्तराऽपेक्षेत्येवमनवस्थापत्तेरिति भावः। ज्ञानवृत्तित्वविशिष्टं तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वात्मकप्रामाण्यमित्यर्थः। अत्र पक्षे **'ज्ञान'**पदानुपादाने **'प्र'** पूर्वक **'मा'** धातोर्भावे ल्युटि निष्पन्न **'प्रमाण'** शब्दात् **'ष्यञ्'** सिद्धस्य **'प्रामाण्यस्य'** यत्प्रमात्वमर्थः तस्यैव पक्षत्वमिति तात्पर्यग्रहार्थं ज्ञानपदं बोध्यम्। वस्तस्तु तद्वति तत्प्रकारकज्ञानत्वस्य घटत्वपटत्वादिरूपार्थभेदेन भिन्नत्वात्तादृशे कुत्रचिदपि प्रामाण्ये **'यावज्ज्ञानग्राहकसामग्रीग्राह्यत्व'** रूपं साध्यं न संभवति, किन्तु तद्धर्मप्रकारक-ज्ञानग्राहकयावत्सामग्रीग्राह्यत्वात्मकमेव साध्यं संभवति, अतो यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षस्तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साध्यमिति विशिष्य साध्यघटकघटत्वादि-प्रकारकज्ञानपरं **'ज्ञान'** पदमिति तत्वम्।

---

[1] न्यायसिद्धान्तमुक्तावली, कारिका-136, पृ० 435

त्रिपुटीप्रत्यक्षवादिगुरुमते सर्वस्मिन्न ज्ञाने मिति- मातृ-मेयैतत्त्रयं भासते। मितिः-ज्ञानम्, माता-ज्ञानाश्रयः, मेयः-विषयः, **'अयं घटमहंजानामी'**त्युल्लौकिक व्यवसायज्ञानमेवादौ उत्पद्यते, तस्य ऽहमिति शाब्दबोधः, तस्य प्रमात्वविषयकतया तदुल्लेखितप्रत्ययस्य तस्य प्रमात्वविषयकत्वमव्याहमिति भावः। तथा च प्रभाकरमते तज्ज्ञानप्रमात्वे तदप्रामाण्याऽग्राहक-स्वाश्रयग्राहकचक्षुः-संयोगादिसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकत्वस्वतोग्राह्यत्वं तत्र बोध्यम्।

कुमारीलभट्टमते स्वतोग्राह्यत्वमुपपादयति।[1] आत्मसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति धर्माधर्मादेरिव ज्ञानस्यापि तादात्म्येन प्रतिबन्धकत्वादित्याशयः आदौ **'अयं घटः'** इति प्रत्यक्षं, ततो **'घटे ज्ञातताया उत्पत्तिः'**, सा च ज्ञानजन्यविषयवृत्तिपदार्थान्तरं प्राकट्याऽपराभिधानेति। सा च प्रत्यक्षा **'ज्ञातो घटः'** इति प्रत्यक्षनिरूपितलौकिक-विषयतावती। तथा च प्रत्यक्षप्रमाणेन ज्ञाततायाः सिद्धत्वान्नैयायिकानां प्रमाणाऽभाव-प्रयुक्तत्वाऽलोकत्वोक्तिरसंगति बोध्यम्। तत्र क्रमः- घटे ज्ञाततोत्पत्तिः **'घटत्ववद्विशेष्यक-घटत्वप्रकारकज्ञानजन्यत्वव्याप्या ज्ञातता'** इति व्याप्तिस्मरणं चेत्येकः कालः, ततः इन्द्रियसम्बद्धविशेषणात्मकज्ञाततेन्द्रियसन्निकर्षव्याप्तिस्मरणेत्युभाभ्यां **'घटत्वद्विशेष्यक-घटत्वप्रकारकज्ञानजन्यत्वव्याप्यघटवृत्तिघटत्वप्रकारकज्ञाततावती इयम्'** इति तादात्म्यसम्बन्धेन व्याप्यवत्तापरामर्शः। तदनन्तरमियं ज्ञातता घटत्ववति घटत्वप्रकारकज्ञान-जन्येत्यनुमितिर्भवतीति। तथा च तया ज्ञाततया, ज्ञाततालिंगकानुमित्या प्रामाण्यं विषयीक्रियते इत्यर्थः। अनुमानप्रयोगः- इयं ज्ञातता घटत्ववति घटत्वप्रकारकज्ञानजन्या, घटवृत्तिघटत्व-प्रकारकज्ञाततात्वात्, या यद्वृत्ति यत्प्रकारिका ज्ञातता सा तद्वद्विशेष्यकतत्प्रकारकज्ञानसाध्या, यथा परे पटत्वप्रकारिका ज्ञाततेति। यद्वा घटपक्षकानुमानं- घटः- घटत्ववद्विशेषेष्यक-टघटत्वप्रकारकज्ञानविषयः, घटत्वप्रकारकज्ञाततावत्वात्, यन्नैवं तन्नैवं यथा पटः इति। तथा च

---

[1] न्यायसिद्धान्तमुक्तावली, कारिका-136, पृ0 435

भट्टमते ज्ञानप्रामाण्ये तदप्रामाण्यग्रहाऽजनकस्वाश्रयानुमितिजनकज्ञाततालिङ्गकपरामर्शात्मक-सामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यत्वं फलितम्।

मुरारिमिश्रमतमुपपादयति।[1] अनुव्यवसायेन-व्यवसायोत्तरमनुव्यवसायेन, ज्ञानं व्यवसायस्तद्गतप्रामाण्यं च गृह्यते। मिश्रमते **'अयं घट'** व्यवसायोत्तरं घटत्वेन घटमहं जानामीत्यनुव्यवसायात्मकं लौकिकमानसं ज्ञानमुत्पद्यते, तेनाऽनुव्यवसायेन व्यवसायगतं प्रामाण्यं गृह्यते। तथा च मिश्रमते ज्ञानप्रामाण्ये तदप्रामाण्याग्राहकस्वाश्रयग्राहकमनःसंयोगादि-सामग्रीजन्यानुव्यवसायात्मकग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यमिति फलितम्। अन्येषामपि स्वतः प्रामाण्यवादिनां मतं समीकरोति।

प्रमात्वाऽप्रमात्वे स्वतोग्राह्ये इति सांख्यानां योगानां च, प्रमात्वं स्वतोग्राह्यमितिविशिष्टा-द्वैतिप्रभृतिवेदान्तिनां चापि मते, अनुव्यवसायेन ज्ञानविषयकज्ञानेन, पौरूषेयबोधेन, फलेनेति यावत्, ज्ञानं-व्यवसायस्तद्गतप्रामाण्यं च विषयीक्रियते इत्यर्थः। ननु अनुव्यवसायस्य व्यवसायमात्रविषयकत्वात्व्यवसायविषयाणां घटघटत्वादीनामविषयकत्वात्घटत्ववति घटत्व-प्रकारकत्वमिति यत् विषयघटितप्रामाण्यं तस्य विषयीकरणत्वाऽभावेन मिश्रसांख्यादिमते अनुव्यवसाये प्रामाण्यविषयकत्वस्वीकारोऽयुक्तस्तथा च स्वतोग्राह्यत्वम्। यतो विषयतासम्बन्धेन ज्ञानं प्रतिविषयस्याभेदसम्बन्धेन कारणत्वात्। विषयनिरूप्य किञ्चिन्निष्ठविषयतानिरूपक-विषयिताव्याप्यं भवति, निर्विषयकस्य ज्ञानत्वे प्रमाणाऽभावादिति भावः। तथा च घटघटत्वादयो यथा साक्षात्व्यवसायविषयास्तथा व्यवसायात्मकप्रत्यासत्याऽनुव्यवसायेनाऽपि विषयीक्रियन्तेऽतोऽनुव्यवसायविषयत्वं प्रामाण्ये निराबाधं, ज्ञानस्य ज्ञानविषयविषयकत्व-नियमात्, पूर्वपूर्वविषयकोत्तरोत्तरप्रकटितज्ञानपरम्परां प्रति प्राथमिकज्ञानविषयस्योपजीव्यत्वादिति भावः। अनुमानं तु घटानुव्यवसायः, घटविषयकः-व्यवसायद्वारा घटोपजीवकत्वे सति ज्ञानत्वात् स्मृतिवदिति बोध्यम्।

---

[1] न्यायसिद्धान्तमुक्तावली, कारिका-136, पृ0 435

जलज्ञानं यदि स्वतोग्राह्यत्वात्ज्ञातं, तदा प्रामाण्यं मीमांसकमते ज्ञातमेव निश्चितमेवेति, कथं-केन कारणेन संशयः स्यात्? न स्यादेवेत्यर्थः, निश्चयस्य विरोधित्वादिति भावः। ननु अगृहीतग्राहित्वस्यैव प्रमात्वेन प्राथमिकज्ञानानामगृहीतग्रहरूपाणां प्रमात्वरक्षार्थं विषयेष्विवा-नुव्यवसायादेः प्रमात्वरक्षार्थं प्राथमिकज्ञानेष्वपि समानाकारज्ञानान्तरेणागृहीतत्वस्य स्वीकारात्, स्वेन स्वस्थितिक्षणे स्वप्रामाण्यस्यैव ग्रहणे निरुक्तप्रमात्वाऽहानेश्च प्राथमिकज्ञानानामज्ञातत्वात् तदानीं प्रमात्वसंशयो निर्वहत्येवेत्याह। यदि तु प्राथमिकज्ञानानि समानाकारज्ञानान्तरैरज्ञातानि तदा संशयकारणस्य धर्मिज्ञानस्याभावात्कारणाऽभावेन प्रमात्वसंशयात्मककार्यस्याऽभाव एव स्यात्। तथा च संशयाऽनुत्पत्यात्मकबाधकसत्वात्प्रमात्वं न स्वतोग्राह्यमिति भावः। किञ्च गुरुमते **'घटोऽयं घटत्वेन घटमहं जानामी'**ति समूहालम्बनज्ञानार्थे यथेन्द्रियविषयसन्निकर्षो-ऽपेक्ष्यते तथा घटत्ववति घटत्वप्रकारकत्वात्मकप्रामाण्यस्य ज्ञानधर्मस्यापि विषयघटिततया तद्ग्रहार्थमिन्द्रियविषयसन्निकर्षघटितपरम्परासन्निकर्षाऽपेक्षायाऽवर्जनीयत्वापत्या तस्यातिरिक्त-ग्राहकत्वाऽपेक्षया लाघवसहानुभवसिद्धानुमानग्राह्यत्वस्यौचित्यात्परतो ग्राह्यत्वं, तादृशसन्निकर्षा-ऽनङ्गीकारे तु स्वतो ग्राह्यत्वं नैवोपपद्येतेति। भट्टमतमपि न साधु, **'ज्ञातो घट'** इति प्रतीतेः घटांशे ज्ञाननिरूपितविषयत्वावगाहित्वस्वीकारेणैवोपपत्तेः प्रमाणान्तराभावाच्च ज्ञातताया-ऽप्रसिद्धत्वेन तल्लिंगकज्ञानानुमितेः सुतरामप्रसिद्धत्वेन तत्र प्रामाण्याऽवगाहित्वस्य स्वतस्त्वे निर्युक्तिकत्वात्। एवं घटत्वप्रकारकसमवायसंसर्गकघटविशेष्यकज्ञानत्वस्यैव प्रमात्वेन मिश्रैश्चानुव्यवसाये समवायभानानङ्गीकारात्तद्घटितप्रमात्वस्य स्वतोग्रहोऽप्ययुक्तिक एव। यदि व्यवसायप्रत्यासत्या घटघटत्वयोरिव समवायस्य भानमङ्गीक्रियेत तदा **'सामानाधिकरण्य-सम्बन्धेन प्रमेयत्वविशिष्टो घट'** इति ज्ञानात् निखिलप्रमेयप्रकारकालौकिकप्रत्यक्षापत्तेः, सामानाधिकरण्यघटकतया निखिलप्रमेयस्यापि संसर्गतया भानात्, तस्मात् मिश्रमतमपि हेयमेवेति।

एवं प्रमात्वेन निर्णीतघटादिज्ञानाऽन्तरमप्यन्वयिदृष्टान्तो बोध्यः। एवं द्वितीयादि-घटज्ञानेषु पूर्वज्ञानसजातीयत्वात्मकलिंगेन प्रमात्वमनुमेयम्, यथा द्वितीयादिघटज्ञानं प्रमा,

प्रथमप्रमात्मकघटज्ञानसजातीयत्वात् प्रथमज्ञानवदिति। साजात्यं च समर्थप्रवृत्तिजनकत्वेन धर्मेण बोध्यम्। तथा च मीमांसकानां तद्विषयकप्रवृत्तिं प्रति तद्विषयकज्ञाननिष्ठप्रामाण्यनिश्चयः कारणमिति कार्यकारणभावो व्यभिचरितो बोध्यः, प्रवृत्तिहेतुना प्रामाण्यस्य निश्चितत्वादिति ध्येयम्। ननु प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य कारणत्वे न्यायमते तादृशज्ञानाऽसत्वेपि यत्र ग्रीष्मोत्तरप्राथमिकदृष्टिमत्पृथिव्यामनायत्या 'गन्धवती पृथिवी'ति प्रत्यक्षं जातम्। तत्र ज्ञाने निरुक्तसमर्थप्रवृत्तिजनकत्वहेतोरभावात् कथं प्रमात्वनिर्णय इत्यत आह।[1] तद्व्यक्तित्वेन पृथिवीत्वप्रकारकज्ञानस्य पक्षतालाभाय। प्रमात्वं, 'गन्धवती पृथिवीत्वप्रकारकज्ञानत्वादिति हेतुः, गन्धवन्निष्ठविशेष्यतानिरूपितपृथिवीत्वनिष्ठप्रकारताकज्ञानत्ववत्वादित्यर्थः, स्वाश्रयनिरूपित-गन्धवन्निष्ठविशेष्यतानिरूपितपृथिवीत्वनिष्ठप्रकारतानिरूपकत्वसम्बन्धेन ज्ञानत्ववत्वादिति वाऽर्थः, अतो न विशेषणविशेष्यभावे विनिगमनाविरहप्रयुक्त गौरवाऽवकाशः, न वा हेतुतावच्छेदकरसम्बन्धाऽप्रसिद्धिः। अत्र पृथिवीत्वप्रकारकज्ञानत्वस्य पक्षतावच्छेदकत्वात्, पृथिवीत्ववद्विशेष्यकपृथिवीत्वप्रकारकत्वस्य साध्यत्वात्, पृथिवीत्ववद्गन्धवद्विशेष्यकपृथिवी-त्वप्रकारक ज्ञानत्वस्य हेतुत्वान्न पक्षतावच्छेदकसाध्यहेतूनामैक्यापत्तिरिति बोध्यम्। दृष्टान्तं तु-पृथिवीत्वप्रमात्वेन निर्णीतज्ञानान्तरं ग्राह्यमिति। तथा चैतादृशस्य गन्धवति पृथिवीत्वप्रकारक-ज्ञानत्वात्मकस्य हेतोस्तत्र सत्वात्प्रामाण्यं तेनानुमेयमिति भावः। अनयैव दिशाऽन्यत्रापि प्रामाण्यमनुमेयम्।

[1] न्यायसिद्धान्तमुक्तावली, कारिका-136, पृ0 438

## ( ग ) प्रत्यक्षस्य सविकल्पकनिर्विकल्पकव्यवस्थापनम्

अनुभवस्मृतिभेदेन पूर्वं ज्ञानं विविधमुक्तम्। ततश्च यथार्थायथार्थभेदेनानुभवस्य द्वैविध्यं प्रतिपादितम्। तत्र प्रमाणभेदेन प्रमात्मकज्ञानस्य चातुर्विध्यं प्रतिपादितम्। पूर्वं चक्षुरादीन्द्रिय-करणजन्यज्ञानस्य प्रत्यक्षं प्रतिपादितम्। तच्च प्रत्यक्षात्मकं ज्ञानं यथार्थायथार्थभेदाद् द्विविधम्। तस्य यथार्थप्रत्यक्षज्ञानस्य निर्विकल्पकसविकल्पकभेदेन द्वैविध्यमुक्तम्।

यत्र घटघटत्वयोः संसर्गः न भासते तज्ज्ञानं निर्विकल्पकम्। निर्विकल्पकज्ञानमतीन्द्रियं भवति।

> "ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते।
> महत्वं षड्विधेर्हेतुरिन्द्रियं करणं मतम्॥"[1]

निर्गतो विकल्पो विशेषणविशेष्यभावो यस्मात्तन्निर्विकल्पक तदेवाऽख्या यस्य तत्, एतादृशं यज्ज्ञानं तत्, अतीन्द्रियं वर्तते इन्द्रियाऽग्राह्यमिति नैयायिकैरिष्यते। विशेष्यताख्य-विशेषणत्वसंसर्गताख्यविषयताऽतिरिक्तविषयतानिरूपकं ज्ञानं निर्विकल्पकं यथा किञ्चिदिति। उक्तं भट्टपादेन श्लोकवार्तिके "अस्ति ह्यात्मकज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजन्यषड्विधे, घ्राणजे, रासने, श्रोत्रजे, स्पार्शने, मानसे च प्रत्यक्षे, महत्परिमाणं साक्षात्सम्बन्धेन समवायेन परम्परया च समवेतसमवायादिना कारणं भवति। लौकिकविषयतासम्बन्धेन जन्यप्रत्यक्षसामान्यं प्रति महत्वं नियतपू वृत्तिर्भवति।

षड्विधेऽपि निरुक्ते प्रत्यक्षे इन्द्रियं चक्षुरादिकमसारणं कारणं भवति। निर्विकल्पके च चक्षुःसंयोगेति। घटेन सह चक्षुस्संयोगान्तरं द्रागेव किञ्चिदिति ज्ञानं जायते तत्र घटत्वं घटश्च स्वातन्त्र्येण भासेतेऽतः तदेवेदं ज्ञानघटत्वघटौ इत्याकारकं वैशिष्ट्या (सम्बन्धा) नवगाहि उच्यते, तदेव निर्विकल्पकमुच्यते।

---

[1] न्यायसिद्धान्तमुक्तावली, कारिका-58

**मीमांसकनये निर्विकल्पकज्ञानस्वरूपविचारः-**

पूर्वमीमांसानये शब्दादिजन्यज्ञानमपि निर्विकल्पकं भवति। निर्विकल्पकज्ञाने शब्दादिविकल्परहितं सामान्यविशेषात्मकं शुद्धं वस्त्वेव गृह्यते। शब्दविशिष्टार्थग्रहणे हि पूर्वं शब्दस्मृतिरपेक्षिता। सा च निर्निमित्ततया उत्पत्तुं नार्हति। अतः प्रथमं शब्दस्मृतिनिमित्तभूत-मालोचनात्मकं ज्ञानं जायते। ततः शब्दः स्मर्यते, ततश्च शब्दविशिष्टार्थबोधसिद्धिः। तत्र प्राथमिके निर्विकल्पके ज्ञाने जातिव्यक्त्याद्यनेकाकारं वस्तु भासते, परन्तु तत्र जातिः अनुवृत्तत्वेन रूपेण न भासते, व्यक्तिश्च व्यावृत्तत्वेन रूपेण न भासते। अत एव-

**''न विशेषो न सामान्यं तदानीमनुभूयते।**
**तयोराधारभूता तु व्यक्तिरेवावसीयते॥''**[1]

विशेषाः = व्यावृत्तं स्वरूपं, सामान्यम् = अनुवृत्तं स्वरूपमित्यर्थयोरापाततः प्रतीतावपि पार्थसारथिमिश्रेण विशेषो = व्यावृत्तिः, सामान्यम् = अनुवृत्तिरित्येवं धर्मपरत्वेन व्याख्यानं कृत्वा व्यक्तिशब्दस्य च वस्तुपरत्वमुक्त्वा व्यावृत्यनुगमयोराधारभूतं व्यावृत्तानु-गतात्मकं वस्तु संमुग्धरूपेण निर्विकल्पकज्ञानेन गृह्यते, न तु व्यावृत्त्यनुगतिविशिष्टत्वेन रूपेणेत्युक्तम्। एतेन व्यक्तिरेव निर्विकल्पकविषयः न जातिरिति भ्रमोऽपाकृतः। उक्तं चाग्रे वार्तिकेऽपि-

**''निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः।**
**ग्रहणं, लक्षणाख्येयं यात्रा शुद्धं तु गृह्यते॥**
**न चासाधारणत्वेन परव्यावृत्यकल्पनात्।**
**विशेषानुगमाक्लृप्तेः सामान्यमिति नापि तत्॥**[2]

अत्र लक्षणाख्येयमित्यादेः कारिकांशस्यायमर्थः- निर्विकल्पकबोधेऽपि द्व्यात्मक-स्यापि वस्तुनो ग्रहणमितीयं लक्षणस्य = गृह्यमाणवस्तुस्वरूपस्य कथनम्। न त्वनेन कथनेन

---

[1] श्लोकवार्तिक- 4/113
[2] श्लोकवार्तिक- 4/118-111

ज्ञानाकारो निरूप्यत इति। कः तर्हि ज्ञानाकार इत्यत्राह ज्ञात्रा शुद्धं तु गृह्यते इति। द्वयाकारकं सामान्यविशेषात्मकं यच्छुद्धं वस्तु तदाकारं ज्ञानमिति भावः इति। शुद्धपदेन ज्ञानस्य आकारविशेषौ व्यावर्त्येते। तौ व्यावर्त्यौ आकारौ स्पष्टीकरोति **''न चासाधारणत्वेने'**त्यादिना श्लोकेन।

उम्वेकभट्टेन तु **''निर्विकल्पकबोधेऽपि द्वयात्मकस्यापि वस्तुनः।''**[1] इति कारिकांशस्य **''निर्विकल्पकप्रत्यक्षेऽपि सामान्यविशेषात्मकस्य वस्तुनः ताभ्यां रूपाभ्यां बोधः''** इति यथाश्रुतार्थे तात्पर्यम् गृहीतम्। अतस्तन्मते निर्विकल्पके पूर्वानुभूतोऽर्थः, शब्दो वा न भासते, सविकल्पके तु सोऽपीत्येवदेव निर्विकल्पकसविकल्पकयोर्वैलक्षण्यम्। अतः **''न चासाधारणत्वेनेत्यादिकारिकायाः परव्यावृत्त्यकल्पनेनासाधारणत्वेन न ग्रहणमि'**त्येवं निर्विकल्पकस्य शब्दकल्पनप्रतिषेधपरतयैव व्याख्यानं तेन कृतम्। न तु व्यावृत्त्यनुगमकल्पनप्रतिषेधपरतया। अतएव च व्यावृत्त्याद्यग्राहकत्वबोधिका **''न विशेषो न सामान्यमि'**तिकारिका बौद्धमतबोधकत्वेनैव कथञ्चिद्व्याख्याता। परन्तु **''लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यत''** इति कारिकांशस्यास्मिन् मते योजनासंभवेन **''अस्य त्वक्षरयत्रयन्यूनस्य कारिकार्द्धस्य सत्यमर्थं न विद्म''**[2] इत्युक्तम्।

वस्तुतः **''न विशेषो न सामान्यमि''**तिकारिकायाः परमतत्वबोधकत्वलिङ्गाभावात् **''न चासाधारणत्वेनेति''**[3] कारिकायाः शब्दमात्रप्रतिषेधकत्वे प्रमाणाभावाच्च पार्थसारथिमिश्रवर्णित एव वार्तिककाराशयो युज्यते।

अपि च व्यावृत्तानुगतस्वरूपमात्रग्रहात् पश्चादेव तद्गतव्यावृत्त्यनुगतिग्रहस्संभवति। आदौ यस्य वस्तुनः प्रत्यक्षं भवति, तदन्यस्याग्रहेण तद्भेदाभेदरूपव्यावृत्त्यनुगतिग्रहणा-

---

[1] श्लोकवार्तिक- 4/118
[2] तात्पर्यटीकासहितं श्लोकवार्तिकम्, पृ0सं0 150
[3] श्लोकवार्तिक- 4/119

संभवात्। अतः पूर्वं व्यावृत्यनुगमाविषयकं निर्विकल्पकमुत्पद्यत इति स्वीकार्यमिति पार्थसारथि-मिश्रोक्तमेव समीचीनम्।

**अद्वैतवेदान्तिनां नये निर्विकल्पकस्यस्वरूपविचारः**

अद्वैतिनस्तु सर्वपदार्थानुगतं सदितिद्रव्यमिति चोच्यमानं महासामान्यमेव निर्विकल्पकस्य विषयः। ये च प्रतिद्रव्यं संश्रिता विशेषाः खण्डमुण्डपूर्णशृङ्गादय ये च बहुद्रव्यसंश्रिताः गोत्वादिविशेषाः, ते सर्वेऽपि सविकल्पकबुद्ध्या गृह्यन्ते। अतः सर्वत्र सन्मात्रावगाहि निर्विकल्पकं ज्ञानं गवि अश्वे च समानाकारमेवोत्पद्यते। व्यावृत्तानुगतात्मना-खण्डादिव्यक्तिगोत्वादिजात्योरकल्पकत्वादिति प्राहुः। तत्तु प्रतिद्रव्यं प्राथमिकस्य निर्विकल्पकज्ञानस्यापि भिन्नकारतयैव जायमानत्वादयुक्तम्। न हि निर्विकल्पके शब्दस्याभावेन भिन्नशब्दैर्विषयस्याऽख्यातुमशक्यत्वाद्विषयाणां भेद एव नेति वक्तुं शक्यम्। तदुक्तं-

**"नह्याख्यातुमशक्यत्वाद्भेदो नास्तीति गम्यते"**[1] इति।

**बौद्धदार्शनिकानां नये निर्विकल्पकस्वरूपम्**

बौद्धदार्शनिकाः निर्विकल्पकं स्वीकुर्वन्ति, एतेषां मते निर्विकल्पकस्य लक्षणम्-**"कल्पना प्रौढ़मभ्रान्तं प्रत्यक्षमिति"**[2] अर्थात् **स्वभावरहितं ज्ञानं प्रत्यक्षमित्यर्थः।** तेषां मते सर्वं सविकल्पकं भ्रान्तिरिति, तत्र कल्पना योग्यत्वसत्त्वात्। कल्पनानामऽभिलाप संसर्गयोग्यप्रतिभासप्रतीतिः, अभिलापो नाम वाचकः शब्दः। अयमाशयः बौद्धास्तु **स्वलक्षणान्वयव्यतिरेकानुविधायिप्रतिभासं निर्विकल्पकं** वस्तुन्यभ्रान्तमतस्तदेवप्रत्यक्षं न सविकल्पकं तस्य वस्त्वन्तरानुरोधिभासस्य, केशादि ज्ञानद्वयस्तुनि भ्रान्तत्वात्, न च घटोऽयमिति सविकल्पके कम्बुग्रीवात्मा सर्वतो व्यावृत्तः पदार्थेऽनुभूयते इति कथं तस्य भ्रान्तेति वाच्यम्, यः क्षणः प्रत्यक्षेण गृह्यते नासौ विकल्पेनाध्यवसीयते, यश्च विकल्पेनाध्यवसीयते न

---
[1] श्लो०वा०- 4/117
[2] न्या०बि०

स प्रवृत्त्या लभ्यत इति क्षणापेक्षया सम्वादाभावस्तेषां क्षणिकत्वात्, किन्तु यादृशः क्षणः प्रत्यक्षेण गृह्यते तादृशोविकल्पेनाध्यवसीयते, तादृशश्च प्रवृत्त्या लभ्यत इत्यनाकलित क्षणभेदस्यातद्व्यावृत्तस्तुमात्रापेक्षया संवादः नात्र च विकल्पो गृहीत ग्राहित्वादप्रमाणं किञ्च सौगताः स्वलक्षणमेव परमार्थं मन्यमाना न सामान्यं मन्यन्ते, तथा हि-[1]

"पृथक्त्वे व्यक्तितो जातिर्दृश्यते पृथगेव सा।
अभेदे व्यक्तिमात्रं स्याद्द्वेधा चेन्न विरोधतः॥
नायाति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसन सन्ततिः॥" इति

तथा च सामान्यस्य वस्तुभूतस्याभावात् तद्विशिष्टग्राहितया सविकल्पकस्य भ्रान्तत्वमिति वदन्ति।

### वैयाकरणानां मतं निर्विकल्पकम्

वैयाकरणास्तु निर्विकल्पके संज्ञावैशिष्ट्यभानेऽपि संज्ञाभानमस्त्येव, सर्वेषामर्थानां नामधेयात्मकत्वादिति संज्ञाविशिष्टसंज्ञादिसविकल्पकेषु जातेरिव शब्दस्यापि विशेषणत्वम्, एवञ्च ज्ञानमात्रे शब्दभानम्।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥

इति ह्युक्तेरिति वदन्ति।

अयमर्थः इन्द्रियस्य बुद्धिं प्रति करणत्वान्न तत्र ज्ञानमाहितं भवति, क्रियायाः कर्तृनिष्ठत्वात्। अतः ज्ञानाभावादिन्द्रिये संस्कारासंभवेन तस्य स्मृत्यष्वसमर्थत्वात् विकल्पो न वार्यते। इन्द्रियस्य स्मृत्याद्यसमर्थत्वमात्रेण तेन सविकल्पकोत्पत्तिं वारयितुं न शक्यत इति भावः। कुत इत्याह- आत्मन्येवेत्यादिकारिकाद्वयेन। बुद्धौ आत्मनः कर्तृत्वेन तस्य ज्ञानाश्रयत्वेन

---

[1] न्या०बि०

संस्कारद्वारा स्मरणे, स्मृतस्य पुरोवर्तिना भेदाभेदाभ्यां सन्धाने न सामर्थ्यं विद्यते। अतः स्मृतिसहितेनेन्द्रियेण इन्द्रियसंबद्धार्थे स्मृतार्थसंसर्गावगाहि सविकल्पकमुत्पत्तुं शक्नोति। स्मृतिसमर्थात्मसहकारात्। अस्य च अक्षजन्यत्वमस्तीति प्रत्यक्षत्वव्यवहारो युज्यते इति। न हि इन्द्रियमात्रजन्यत्वे एव प्रत्यक्षत्वमिति शक्यं वक्तुं, तथा सति निर्विकल्पकसामग्र्यन्तर्गततया अक्षातिरिक्तेत्यादिकारणसद्भावेन निर्विकल्पकस्यापि अप्रत्यक्षत्वापत्तेः।

किञ्च यदि विकल्पकस्य नेन्द्रियजन्यत्वं, तदभावाच्चाप्रत्यक्षत्वमित्युच्येत, तर्हि बौद्धाभिमतं सविकल्पकस्य स्वसंवित्तौ प्रत्यक्षत्वमपि न स्यात्। एवं हि तेनोच्यते- **''कल्पनापि स्वसंवित्तौ इष्टनार्थे विकल्पनात्''**[1] इति। **''सविकल्पकस्य पूर्वानुभूतार्थानुसंधानात्मकस्य स्मृतिरूपत्वान्नेन्द्रियजन्यत्वमित्यतः न तत् गोत्वादिविषये प्रत्यक्षं भवितुमर्हति''** इति स्वीकारे तु अक्षाजन्यत्वस्य स्वसंवित्तावपि तुल्यत्वात् पूर्वोक्तं स्वविषये प्रत्यक्षत्वमपि न स्यात्। यदि तु इन्द्रियजन्यसमानान्तरनिर्विकल्पकप्रत्ययरूपतन्मतसिद्धमनोजन्यत्वात्सविकल्पकस्य मनसश्चेन्द्रियत्वात्, इन्द्रियजन्यत्वप्रयुक्तं प्रत्यक्षत्वमपि संभवतीत्युच्येत्, तर्हि मनोरूपेन्द्रियजन्यत्वसाम्यात् तस्य गोत्वादिविषयेऽपि प्रत्यक्षत्वं स्यादेव।

ननु मनसः बाह्यविषयप्रत्यक्षाजनकत्वेन न गोत्वादिसविकल्पकजनकत्वम्। संविदस्तु ज्ञानं जनयत्येव, आभ्यन्तरविषयकत्वादिति चेन्न, लोकप्रसिद्धिविरोधात्। लोके इन्द्रियजन्यनिर्विकल्पोत्तरजातस्य सविकल्पस्य गोत्वाद्यंशे प्रत्यक्षत्वं प्रसिद्धम्। स्वसंवेदनांशे तु प्रत्यक्षत्वं न प्रसिद्धम्। लोकव्यवहारानुसारेणैव च परीक्षकैर्लक्षणं कर्त्तव्यम्, न तु स्वकृतलक्षणेन लोकव्यवहारंनिवर्तयितुं युज्यते। अतः मनसः आभ्यन्तरविषयकत्वेन गोत्वादौ बाह्येऽर्थे अप्रवृत्त्या गोत्वादिविषयसविकल्पकस्येन्द्रियजन्यत्वाभावेऽपि लोकसिद्धप्रत्यक्षत्वव्यवहारोपपत्तये प्रत्यक्षशब्दस्य रूढत्वं पारिभाषिकत्वं वा स्वीकार्यम्। इन्द्रियजन्यनिर्विकल्पकसमनन्तरजाते सविकल्पके प्रत्यक्षशब्दो रूढः पारिभाषिको वेति।

---

[1] प्रमाणसमुच्चये 1/7

अथवा स्वातन्त्र्येणे मनसो बाह्यार्थे अप्रवृत्तावपि निर्विकल्पसहायतया बाह्यार्थे प्रवृत्त्यङ्गीकारेण गोत्वादिसविकल्पकस्य मनोजन्यत्वात्, मनसश्चेन्द्रियत्वात् सुखदुःखादि-बुद्धिष्विव मन इन्द्रियाधीनं प्रत्यक्षत्वं गोत्वादिसविकल्पकेष्वपि भवितुमर्हतीत्याह-

**मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु।**
**यथा प्रत्यक्षतैवं नस्तदधीना भविष्यतीति॥**[1]

न चैवं सति अन्यसहितमनोजन्यत्वस्यानुमानादिष्वपि सत्त्वात्तेषामपि प्रत्यक्षत्वं स्यादिति वाच्यम्। मनोजन्यत्वे समानेऽपि **''कल्पनापोढमभ्रान्तं प्रत्यक्षमिति''**[2] स्वोक्तलक्षणानु-सारेण स्वसंवित्तेः कल्पनारहितत्वात् प्रत्यक्षत्वं गोत्वाद्यंशे तु सविकल्पकत्वादप्रत्यक्षत्वं बौद्धेन यथा स्वीकृतं, तथा **''अपरोक्षावभासमिति''** लक्षणानुसारेण मनोजन्यत्वसाम्येऽपि गोत्वादिसविकल्पकस्यापरोक्षावभासत्वात् प्रत्यक्षत्वं, वह्न्याद्यनुमानस्य तु परोक्षावभासत्वान्न प्रत्यक्षत्वमिति व्यवस्थासंभवात्।

**जात्यादीनां व्यक्त्या ऐकान्तिकभेदाभावविचारः**

ननु व्यक्तेरर्थान्तरभूतं जात्यादिकं व्यक्तौ अध्यस्य जायमाना इयं गौरित्यादिस-विकल्पकबुद्धिः पदार्थमविद्यमान इयं गौरित्यादिसविकल्पकबुद्धिः पदार्थमविद्यमानरूपेण प्रकाशयन्ति मृगतृष्णादिबुद्धिवदप्रमाणं स्यादिति चेन्न। **''इयं गौः अश्वोऽयमि''**त्यादिबुद्धिषु अध्यासस्यासंभवात्। अविद्यमानरूपग्रहणमेवाध्यास इत्युच्यते। गोत्वाश्वत्वादिजातेः व्यक्तितो-ऽभिन्नत्वात् व्यक्तिः जातिरूपाभवत्येन। अतो न जातिः व्यक्तेरविद्यमानं रूपं येन तेन रूपेण व्यक्तिप्रत्ययः मिथ्या स्यात्। तथा च विद्यामनेनैव जातिरूपेण व्यक्तेर्गृह्यमाणत्वात् सविकल्पकं प्रमाणमेव। जात्यादेः व्यक्तिभेदो नास्तीत्याह स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो नः।[3]

---

[1] श्लो0वा0- 4/136
[2] न्यायबिन्दु, परिच्छेद-1
[3] श्लो0वा0- 4/141

इति। अत्रादिशब्देन गुणक्रिययोर्ग्रहणम्। न स्थितमित्यस्य एकान्ततो न स्थितमित्यर्थः। अत एवाग्रे-

**यदि ह्येकान्ततो भिन्नं विशेष्यात् स्याद्विशेषणात्।**
**स्वानुरूपां सदाबुद्धिं विशेष्ये जनयेत् कथम्॥**[1]

एकान्ततो भेदे एव दूषणमाह। तेन अंशतो भेदोऽप्यस्तीति लभ्यते। यद्वस्तु येनैव रूपेण सर्वदा गृह्यते, तद्वस्तु तद्रूपादभिन्नं भवति। स्फटिकादौ तु लाक्षादिरूपेण सर्वदा ग्रहणाभावात्, कदाचिद्ग्रहणमात्रेण न लाक्षास्फटिकादभिन्नं। तदाह-

**स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत्।**
**अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नानां हि भेदधीः॥**[2] इति

स्फटिकादौ तु अव्युत्पन्नस्य स्फटिकस्य नियतधवलत्वमजानतः या मतिर्भवेत् सा लाक्षादिस्वरूपा मिथ्या स्यात्। व्युत्पन्नानां तु नेयं लाक्षेति भेदधीर्भवति। तथा च सर्वदा स्फटिके लाक्षानुरूपमतेरभावादैकान्तिको भेदः सिद्ध्यति। न त्वेवं गोत्वादौ, तत्र सर्वदा गोत्वानुरूपमतेर्जायमानत्वात्।

इदमत्रावधेयम्- खण्डमुण्डादिषु भिन्नासु गोव्यक्तिषु तद्व्यक्तित्वेन भेदोऽनुभूयते, गोत्वेन अभेदोऽपि। तत्र भेदस्योपपादने न क्लेशः। व्यक्तिभेदस्य स्पष्टत्वात्। भिन्नयोरपि व्यक्त्योर-भेदोपपादनार्थं तु अयमेव पन्था आश्रयणीयः- इयं गोव्यक्तिः गोत्वरूपा, व्यक्त्यन्तरमपि तद्रूपं, गोत्वजातेश्चैक्यात् गोत्वजातिरूपयोर्व्यक्त्योरप्यैक्यमिति। तथा च, सर्वलोकसिद्धः यो गवादिव्यक्तीनां गोत्वादिरूपेणाभेदानुभवः, तदन्यथानुपपत्त्यैव जातिव्यक्त्योरभेदः सिद्ध्यति। एवं सत्यप्यभेदे तयोर्भेदः एवं साधनीयः- यदि सर्वथा जातेरभिन्नैव व्यक्तिः स्यात् तर्हि जातेरतिरिक्तो पदार्थ एव कश्चिन्न स्यात्। तर्हि व्यक्तीनां परस्परभेदानुभवो न स्यात्। जातेरेव व्यक्तित्वात्, तस्याश्चैक्यात्। अनुभूयते च व्यक्तिभेदः, तस्मादस्ति जातिभिन्नाव्यक्तिरिति।

---

[1] श्लो०वा०- 4/142
[2] श्लो०वा०- 4/143

व्यक्तीनां भेदाभेदानुभवौ च बाधकप्रत्ययानुत्पत्तेः यथार्थौ। अतस्तद्बलात् कल्पितौ जातिव्यक्त्योर्भेदावपि वास्तविकावेव। एवमेव नैयायिकानां जातिवत् व्यक्तिसमवेतत्वेनाभिमतयोः गुणक्रिययोरपि व्यक्त्या भेदाभेदौ साधनीयौ। एवं सिद्धे जात्यादीनां व्यक्त्यभेदे योऽयं जात्याद्यात्मना सविकल्पको व्यक्तिभासः ''**खण्डः शुक्लो धावको गौरि**''त्यादिरूपः तस्य याथार्थ्यं सिद्ध्यति।

**निर्विकल्पकविज्ञानविषये बहुधा बुधाः।**
**विवदन्ते यतस्तस्मादयमत्र विविच्यते॥**

**न्यायमते निर्विकल्पकम्**

प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकं च। तत्र घटवद् भूतलमिति सविकल्पके ज्ञाने घटे प्रकारताख्यविषयता भूतले विशेष्यताख्यविषयता, संयोगे संसर्गताख्यविषयता वर्तते, तादृशविषयतात्रयनिरूपकं सविकल्पकं ज्ञानं भवति। निर्विकल्पकज्ञाने तत्त्रयमपि नास्ति, किन्तु केवलविषयावगाहित्वम्, अतस्तत्त्रयभिन्ना चतुर्थी विषयता तत्राङ्गीक्रियते, लक्षणन्तु-'**विशेषणविशेष्यसम्बन्धानवगाहित्वम्**', अथवा विषयेणघटादिना इन्द्रियस्य चक्षुरादेः संयोगानन्तरं प्रथमं जायमानं विशेष्यविशेषणभावानवगाहिसंसर्गानवगाहिजात्यादिस्वरूपावगाहि 'घटघटत्वे'त्याद्याकारकं यदस्ति आलोचनाज्ञानं तदेव निर्विकल्पकम्, तदनुपरतेन्द्रियव्यापारस्य जायमानं विशेष्यविशेषणभावावगामिसंसर्गावगाहिघटत्वादिजात्या शुक्लादिगुणेन पाकादिक्रियया दण्डादिद्रव्येण देवदत्तादिनाम्ना विशिष्टो यो घटादिस्तद्विषयकं घटत्वादिघटाद्योर्यद्वैशिष्ट्यं (समवायः) तद्विषयकं च '**घटः**' '**शुक्लः**' '**पाचकः**' '**दण्डी**' '**देवदत्तः**' इत्याद्याकारकं यज्ज्ञानं तदेव सविकल्पकम्। एतदुभयविधमपि ज्ञानमिन्द्रियार्थसम्प्रयोगजन्यत्वात् प्रत्यक्षम्।

ननु इन्द्रियार्थसम्प्रयोगानन्तरं प्रथमं घटत्वविशिष्टविषयकं 'घटः' इत्याकारकं सविकल्पकमेव ज्ञानं जायतां किमर्थं 'घटघटत्वे'इत्याकारकं निर्विकल्पकं ज्ञानं मध्ये स्वीक्रियत

इति चेत्, न, चक्षुःसंयोगानन्तरं 'घटघटत्वे'ति निर्विकल्पकज्ञानं विना विशेषणस्य घटत्वस्य ज्ञानाभावेन 'घटः' इत्याकारिकाया सविकल्पकात्मिकाया घटत्वविशिष्टबुद्धेरुत्पत्तुमशक्यत्वाद् विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वमिति 'घटघटत्वे'त्याकारकं घटत्वरूपविशेषणज्ञानं मध्ये अभ्युपेयते, तदनन्तरं सविकल्पकज्ञानं 'घटः' इति विशिष्टबुद्ध्यात्मकं घटत्वरूपविशेषणज्ञानात्मकेन निर्विकल्पकेन जन्यत इति सिद्धान्तेन मध्ये निर्विकल्पकज्ञानस्यावश्यकत्वात्।

नन्वेवं सविकल्पकस्य निर्विकल्पकजन्यत्वाङ्गीकारे इन्द्रियार्थसम्प्रयोगजन्यत्वाभावेन प्रत्यक्षत्वायोग इति चेत्, न, सविकल्पकोत्पत्तिपर्यन्तमपीन्द्रियार्थसम्प्रयोगस्य वर्तमानतयाऽनन्यथासिद्धतया च सविकल्पकजनकत्वे क्षत्यभावेन सविकल्पकस्यापीन्द्रियार्थसम्प्रयोगजन्यतया प्रत्यक्षत्वसिद्धेः। न हि निर्विकल्पकजन्यत्वमिन्द्रियार्थसम्प्रयोगजन्यत्वविरोधीत्युभयजन्यत्वस्य सविकल्पके स्वीकारात्। तथा च पारमर्षं सूत्रम्- **"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।"**[1] इति। इन्द्रियार्थसन्निकर्षोत्पन्नं भ्रमभिन्नं ज्ञानं प्रत्यक्षं तच्च द्विविधम्- अव्यपदेश्यं (निर्विकल्पकं) व्यवसायात्मकं (सविकल्पकं) चेति तदर्थः। अनुमोदयन्ति चामुमर्थं भट्टपादा अपि प्रत्यक्षसूत्रे श्लोकवार्तिके-[2]

**अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्।**
**बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥**
**ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया।**
**बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता॥**

ननु विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् सविकल्पकज्ञानजननाय यदि निर्विकल्पकमभ्युपेयते, तर्हि **'घटत्वम्'** इत्याकारकतैव तस्य युक्ता, न तु **'घटघटत्वे'**-त्याकारकता, सविकल्पकोत्पत्तौ विशेषणज्ञानस्यापेक्षितत्वेऽपि विशेष्यज्ञानस्यानपेक्षणात्। न च विशिष्टबुद्धिरूपस्य सविकल्पकस्य जननाय पूर्वविशेषणज्ञानरूपस्य निर्विकल्पकस्य सत्ताया

---

[1] गौ०सू० 1/1/4
[2] तात्पर्यटीकायाम्।

अवश्यकत्वेन तत्र जातेर्भानमिति जातिभानस्य व्यक्तिभाननियततया व्यक्तेरपि भानमिति वाच्यम्, रजतत्वादिभ्रमे व्यक्तिभानं विना जातिभानानुभवेन जातिभानस्य व्यक्तिभाननियतत्वासिद्धेरिति चेत्, अत्र केचित्-

**'घटत्वम्'** इत्याकारकमेव निर्विकल्पकम्, न तु विशेष्यविशेषणोभयविषयकं **'घटघटत्वे'**त्याकारकम्, अत एव विशेष्यरहितं निर्विकल्पकलक्षणमभिप्रयन्ति तात्पर्यटीकाकृतः। तथा हि- **''तत्राविकल्पकपदमव्यपदेश्यमिति, तत्र व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि, तत्कर्म व्यपदेश्यं विशेष्यमिति यावत् अविद्यमानं व्यपदेश्यं यस्मिंस्तदव्यपदेश्यं जात्यादिस्वरूपावगाहि, न तु जात्यादीनां मिथो विशेष्यविशेषणभावावगाहीति यावत्''** इति वदन्ति।

अन्ये तु तद्विशिष्टबुद्धौ तद्विशेषणज्ञानस्येव तद्विशेष्यकबुद्धौ तद्विशेष्यज्ञानस्यापि हेतुत्वमिति निर्विकल्पके घटत्वादेरिव घटादेरपि भानमावश्यकम्। न च घटत्वादिसामान्यलक्षणाजन्येऽतीतानागतघटादिविशेष्यके ज्ञानेऽतीतघटादेः प्रागज्ञानेन तद्विशेष्यकबुद्धौ तद्विशेष्यज्ञानस्य न हेतुतासम्भव इति वाच्यम्, सामान्यलक्षणायाः स्वाश्रयनिर्विकल्पकजनकत्वाङ्गीकारेण तादृशनिर्विकल्पकोत्तरं घटत्वादिसामान्यलक्षणया घटत्वादिप्रकारकघटादिविशेष्यकज्ञानजननेनोक्तव्यभिचाराभावादिति वदन्ति।

परे तु तद्विशेष्यकबुद्धौ तद्विशेष्यज्ञानस्य हेतुत्वे मानाभावः। न चान्वयव्यतिरेकाभ्यां तद्धेतुत्वमिति वाच्यम्, विशेष्येन्द्रियसन्निकर्षादेरेव तद्विशेष्यकज्ञानहेतुत्वसम्भवेन विशेष्यज्ञानान्वयव्यतिरेकयोरन्यथासिद्धत्वात्। न चैवं तद्विशिष्टबुद्धौ तद्विशेषणज्ञानस्यापि हेतुत्वं न स्यात्, विशेषणेन्द्रियसन्निकर्षादेरेव तद्विशेषणकज्ञानहेतुत्वसम्भवेन विशेषणज्ञानान्वयव्यतिरेकयोरन्यथासिद्धत्वादिति वाच्यम्, **'जातिमान्'** इत्याद्याकारकघटत्वादिप्रकारकज्ञानीयजातित्वावच्छिन्नघटत्वप्रकारतापेक्षया **'घटः'** इत्याकारकज्ञानीयजातित्वावच्छिन्नघटत्वप्रकारतापेक्षया **'घटः'** इत्याकारकज्ञानीयनिरवच्छिन्नघटत्वप्रकारताविलक्षणेत्यनुभवसिद्धम्, सा च प्रकारता न

घटत्वप्रकारकज्ञानसामग्रीनियम्या, **'जातिमान्'** इत्याकारकस्य घटत्वादिप्रत्यक्षस्य विलोपापत्तेः। नापि घटत्वांशे किञ्चित्प्रकारकज्ञानसामग्र्यसमवहितघटत्वप्रकारकज्ञानसामग्री-नियम्या **'जातिमान् घटः'** इत्याकारकद्विविधघटत्वादिप्रकारताशालिप्रत्यक्षविलोपापत्तेरतो निरवच्छिन्नघटत्वप्रकारताशालिबुद्धौ निरवच्छिन्नघटत्वविषयकज्ञानस्य हेतुत्वम्, सावच्छिन्न-घटत्वप्रकारताशालिबुद्धौ च सावच्छिन्नघटत्वविषयकज्ञानस्य हेतुत्वमभ्युपेयमिति विशेषण-ज्ञानान्वयव्यतिरेकयोगराश्यकत्वेनान्यथासिद्धत्वाभावात्। न च विशिष्टस्मरणे विशेषण-ज्ञानहेतुताया व्यभिचारः, विशिष्टानुभवं प्रत्येव विशेषणज्ञानस्य हेतुतोपगमेन व्यभिचाराभावात्। एवञ्च निर्विकल्पके व्यक्तिभानं ससम्बन्धिकपदार्थप्रत्यक्षे सम्बन्धिज्ञानस्य हेतुतानुरोधाज्जातेरिव व्यक्तेरपि समवायसम्बन्धित्वात्, अन्यथा सविकल्पकं समवायविषयकं न स्यादिति वदन्ति।

ननु निर्विकल्पके जातिव्यक्त्योर्भानमिव तयोः समवायस्यापि भानमस्तु, तद्भानप्रयोजकेन्द्रियसन्निकर्षस्य सत्त्वादिति चेत्, अत्र केचित् ससम्बन्धिकपदार्थप्रत्यक्षे सम्बन्धिज्ञानस्य हेतुताया समवायस्य ससम्बन्धिकतया निर्विकल्पके भानायोगनिर्विकल्पकात्पूर्वं सम्बन्धिज्ञानरूपस्य कारणस्याभावादिति वदन्ति।

अन्ये तु ज्ञानादिरूपससम्बन्धिकपदार्थप्रत्यक्षएव सम्बन्धिज्ञानस्य हेतुत्वम्, न तु समवायादिरूपसम्बन्धिकपदार्थप्रत्यक्षे, तथा च निर्विकल्पके जातिव्यक्त्योरिव समवायस्यापि भानम्, अत एव निर्विकल्पकस्याप्युपनायकतया तस्मात्समवायोपनीतभानम्, निर्विकल्पके व्यक्तिभानादेव च तस्माद्व्यक्त्युपनीतभानमिति प्राहुः।

तत्र सविकल्पकज्ञानं **'घटमहं जानामि'** इत्यनुव्यवसायात्मकप्रत्यक्षसिद्धम्, निर्विकल्पकं त्वतीन्द्रियम्, **''ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते''**[1] इत्युक्तेः कारिकायाम्। **न च 'घटमहं जानामि'** इत्यनुव्यवसायेन निर्विकल्पकमपि प्रत्यक्षीक्रियतामिति वाच्यम्, **'घटमहं जानामि'** इत्यनुव्यवसायस्य घटत्वविशिष्टवैशिष्ट्यज्ञानात्मकतया

[1] न्या०सि०मु०- प्र०खं०, का०सं०-58

निर्विकल्पकानन्तरमुत्पत्तुमशक्यत्वात्, विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वात्, निर्विकल्पके च घटत्वस्याप्रकारत्वात्, सविकल्पके तु घटत्वस्य प्रकारतया तदनन्तरं घटमहं जानामीत्यनुव्यवसायस्योत्पत्तेः सविकल्पकस्य प्रत्यक्षसिद्धत्वम्। न च **'घटमहं जानामि'** इत्यनुव्यवसाये शुद्धस्यैव ज्ञाने वैशिष्ट्यम्, न तु घटत्वविशिष्टघटस्य, तथा चानुव्यवसायस्य घटत्वविशिष्टज्ञानात्मकतया तत्र विशेषणतावच्छेदक प्रकारकज्ञानस्य कारणत्वायोगात् निर्विकल्पकानन्तरमपि **'घटमहं जानामि'** इत्यनुव्यवसायः सम्भवतीति। निर्विकल्पकस्यापि प्रत्यक्षसिद्धमिति वाच्यम्, जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य यत्किञ्चिद्धर्मप्रकारकत्वनियमेन ज्ञाने शुद्धघटस्य विशेषणत्वायोगेनानुव्यवसायस्य विशिष्टवैशिष्ट्यज्ञानात्मकतया निर्विकल्पकोत्तरमुत्पत्तुमशक्यतया निर्विकल्पकस्य प्रत्यक्षसिद्धत्वाभावात्।

**सविकल्पकज्ञानस्वरूपविचारः-**

विशिष्टवैशिष्ट्यावगाहिज्ञानं सविकल्पकमित्युच्यते। सविकल्पकज्ञाने निर्विकल्पकज्ञानस्य कारणत्वं भवति। नहि विशेषणमज्ञात्वा सविशिष्टबुद्धिर्भवति। अतः घटघटत्वयोः पार्थक्येन ज्ञाने सति **'अयं घटः'** इति घटत्वप्रकारकघटविशेष्यकज्ञानं जायते। इदमेव ज्ञानं विशिष्टवैशिष्ट्यावगाहि ज्ञानमित्युच्यते। विशेषणं घटत्वं विशेष्यश्च घटः तयोः वैशिष्ट्यं समवायात्मकः सम्बन्धः। अतः समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नघटविशेष्यकं यज्ज्ञानं तदेव ज्ञानं सविकल्पकमित्युच्यते। इदं ज्ञानमिन्द्रियसन्निकर्षजन्यं प्रत्यक्षात्मकमुच्यते।

पूर्वं घटघटत्वयोः वैयधिकरण्येन ज्ञानं भवति, तदेव ज्ञानं निर्विकल्पकम्। तच्च न प्रत्यक्षात्मकम्। तत्र वैशिष्टानवगाहित्वाद् प्रत्यक्षं न सम्भवति। घटेन सः चक्षुषः संयोगे सति द्रागेव घटः इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति। घटत्वविशेषणस्य घटेन सः संसर्गस्याभावात्।

**'अयं घट'** (घटत्ववान्घटः) इति विशिष्टज्ञानं प्रतिविशेषणे यद् घटत्वं प्रकारस्तज्ज्ञानस्य प्रत्यक्षात्मकस्य कारणत्वात्। **'नाऽगृहीतविशेषणाबुद्धिविशिष्टे**

**उपजायते'** इति नियमादिति। अतः घटत्वघटौ इति निर्विकल्पकात्मकं ज्ञानं मध्येऽपेक्षणीयमिति भावः। अनुमानं यथा **'अयं घट' इति बुद्धिः विशेषणज्ञानजन्या विशिष्टबुद्धित्वात्, दण्डीतिविशिष्टबुद्धिवदिति।**

**'अयं घट'** इति ज्ञानकारणतया घटत्वज्ञानसिद्धौ च सत्यामित्यर्थः। प्रथमतः-घटचक्षुःसंयोगोत्तरक्षणे एव विशिष्टज्ञानपूर्वम्। घटघटत्वयोः विशेष्यविशेषणयोः, वैशिष्ट्यानवगाह्येव= सम्बन्धानवगाहि, विशेष्यत्व-प्रकारत्व संसर्गत्वाऽविषयकमेव, घटत्वघटौ इत्याकारकं विशकलितं जायते, तदेव चतुर्थविषयिताशालि ज्ञानं निर्विकल्पकं नाम्नोच्यते। तच्च निर्विकल्पकं ज्ञानं न प्रत्यक्षम्। यथेन्द्रियजन्यघटस्य ज्ञानं घटविषयकं प्रत्यक्षमुच्यते, तथा प्रत्यक्षज्ञानस्यापि ज्ञानं ज्ञानविषयकं ज्ञानं प्रत्यक्षप्रमात्मकमनुव्यवसायरूपमुच्यते, यथा **'घटचाक्षुषज्ञानवानहम्'** इति। तादृशवैशिष्ट्यावगाहि ज्ञानस्यैव ज्ञानान्तरं प्रत्यक्षमुत्पद्यते, न तु निर्विकल्पकज्ञानस्य ज्ञानान्तरम्।

इदं सविकल्पकं ज्ञानं व्यवसायात्मकमुच्यते। व्यवसायात्मकेन ज्ञानेन न विषयस्य प्रकाशो भवति। अतः विषय प्रकाशकं **'अहं घटं जानामि' 'घटज्ञानवानहमस्मि'** इत्याकारकानुव्यवसायात्मकं ज्ञानं स्वीक्रियते। तादृशेनानुव्यवसायात्मकज्ञानेन विषयप्रकाशः, तदनन्तरञ्च प्रवृत्यात्मको लौकिकव्यवहारः प्रवर्तते। अनुव्यवसायात्मकं ज्ञानं ज्ञानविषयकज्ञानमुच्यते। अनुव्यवसायात्मकं ज्ञानं घटादिविषयकज्ञानविषयकं भवति। विशिष्टवैशिष्ट्यानुव्यवसाये, आत्मनि घटविषयकं **'अयं घट'** इति ज्ञानं समवायेन विशेषणीभूय भासते, **'अयं घट'** इति ज्ञाने च विषयतासम्बन्धेन घटो विशेषणीभूय भासते, तत्र घटे च समवायेन घटत्वं जातिः प्रकारतया प्रतीयते।

**सविकल्पकस्येन्द्रियत्वात् प्रत्यक्षत्वम्**

सविकल्पकस्यापि ज्ञानस्येन्द्रियजन्यत्वमस्तीति साधयति कारिकात्रयेण-[1]

> **करणं चेन्द्रियं बुद्धेर्न तत्र ज्ञानमाहितम्।**
> **तत्स्मृत्याद्यसमर्थत्वाद्विकल्पोऽतो न वार्यते॥**
> **आत्मन्येव स्थितं ज्ञानं स हि बोद्धाऽत्र गम्यते।**
> **स्मरणे चास्य सामर्थ्यं सन्धानादौ च विद्यते॥**
> **तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि।**
> **विकल्पयन् स्वधर्मेण वस्तुप्रत्यज्ञावान्नरः॥**



[1] श्लो0वा0- 4/121-123

# द्वितीयोऽध्यायः

## (क) सन्निकर्षस्वरूपं भेदाश्च

"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमपव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति"[1] सूत्रे प्रत्यक्षहेतुत्वेनेन्द्रियविषयसन्निकर्षस्य प्रतिपादनं कृतम्। स च सन्निकर्षः लौकिकालौकिक भेदेन द्विविधः। प्रथमस्तावत् षड्विधः- संयोगः संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। एवं रूपो विभागः न्यायवार्तिके प्रदर्शितः। तदनन्तर कालिकेषु सर्वेषु न्यायग्रन्थेषु प्रस्तुतः दृश्यते। परन्तु न्यायसूत्रेषु वात्स्यायनभाष्ये एतादृशः विभागः महताश्रमेणान्वेषणेपि दृष्टिपथं नायाति।

**सन्निकर्षविभागस्य न्यायसूत्रानुमतत्वम् :-**

इमं विषयमाधिकृत्य न्यायभूषणकाराः[2] इत्थं विचारयन्ति- तन्मते विषयेन्द्रियसम्बन्धः सन्निकर्षपदवाच्यो भवति। स च प्रत्यक्षात्मकज्ञानं प्रति कारणं भवति। इति पूर्वापर ग्रन्थावलोकनेन सूत्रोक्तं षड्विधसन्निकर्ष बोधकमिति लभ्यते। अतः सूत्रभाष्ययोः षड्विधत्व-स्याविवेचनेपि सन्निकर्षपदेन षड्विधलौकिकसन्निकर्षाणामेवं त्रिविधालौकिकसन्निकर्षाणाञ्च बोधने एव तात्पर्यमिति कल्पयते।

यद्यपि कर्ष शब्दस्य सम्बन्धार्थकत्वस्य लोके प्रसिद्ध भावात् कथं निकर्षशब्दः सम्बन्धवाचकत्वेन प्रसिद्धः भवति? तथापि **'सम' 'नि'** इत्युपसर्ग युत एव **'वृष्'** धातुः सम्बन्ध-मभिधत्तेः। यथा **'सम' 'अव'** इत्युपसर्गद्वयपूर्वकः इणधातुः समवायस्य बोधकः। एवञ्च

---

[1] न्यायसूत्र- 1/1/4
[2] न्यायभूषण- पृ0सं0 167

**'कृण्'** धातोः सम्बन्धार्थकत्व द्योतकत्वेन सार्थकः **'सम्'** शब्दः षड्विधत्व प्रतिपादनाय नालमिति। **'सम'** शब्द महिम्ना षड्विधत्व लाभः इति केचन वर्णयन्ति। तदपि न समीचीनम्।

तस्माद् यथा आलोकस्य सूत्रेष्वनुक्तावति अन्वयव्यतिरेकबलात् प्रत्यक्षकारणत्वेन स्वीकृता भवन्ति। तथैव सन्निकर्षाणां षड्विधानामपि प्रत्यक्षं प्रत्यन्वयः व्यतिरेकत्वात् कारणत्वं सिद्ध्यति। न्यायसिद्धऽयमंशः यतः सूत्रकारैः न निराक्रितः विद्यते। अतसा तत्संमतः इत्युन्नीयते, **''परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः''** इति न्यायात्।

वस्तुतः तृतीयाध्याये प्रथमाह्निके **''अप्राप्य ग्रहणमि''**[1]त्यादिभिः सूत्रैः इन्द्रियाणां प्राप्यकारित्व समर्थनेन **''गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः''**[2] इति सूत्रेण गन्धादि गुणानामपीन्द्रियजन्यज्ञानविषयत्व कथनेन गुणैः तदाश्रय द्रव्यैश्च। इन्द्रियाणां सन्निकर्षस्य सूत्र सम्मतत्वमवगम्यते। स च सन्निकर्षः कः? इति विमर्शे उक्त षड्विध एव पर्यवस्यति। प्रकारान्तरस्यासम्भवात्। अतः षड्विधोः सन्निकर्षः सूत्रभाष्याभ्यामनुमत एव इति निश्चयो भवति।

### षड्विध सन्निकर्षे कणादाभिमतिः-

समानतन्त्रे वैशेषिकदर्शने सन्निकर्षप्रभेदविषये न्यायसूत्रापेक्षयापि किञ्चिद् विचित्रता दृश्यते। **''आत्ममनसोः संयोगादात्मप्रत्यक्षं''**[3] इत्यनेन सूत्रेणाऽऽत्मविषयकप्रत्यक्षं प्रतिमनस्संयोगः कारणमिति कथितम्। अनेन च द्रव्यविषयकप्रत्यक्षं प्रति इन्द्रियसंयोगकारणमिति सूचितं भवति। अतः **''आत्मसमवायादात्मगुणेषु''**[4] इति सूत्रेणाऽऽत्मसमवेतज्ञानादि गुण विषयकप्रत्यक्षं प्रति मनः संयुक्तसमवायः कारणमिति व्यञ्जितम्। तथा **''अनेक द्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः''**[5]। एवं **''संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ**

---

[1] न्यायसूत्र- 3/1/44

[2] न्यायसूत्र- 3/1/13

[3] वैशेषिकसूत्र- 9/1/11 "आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम्"

[4] वैशेषिकसूत्र- 9/1/15

[5] वैशेषिकसूत्र- 4/1/8

**परत्वापरत्वे कर्म च रूपिद्रव्यसमवायात् चक्षुषाणि**''[1] इति सूत्राभ्यां द्रव्यगतगुणक्रियाविषयकप्रत्यक्षे चक्षुः संयुक्तसमवायः कारणमिति स्पष्टमावेदितम्।

''**एतेन गुणत्वेभावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्**''[2] इति सूत्रेण यथा गुणप्रत्यक्षे द्रव्यसमवायो हेतुः तथा गुणगतजातिप्रत्यक्षेपि संयुक्तसमवेतसमवायो हेतुरिति व्यञ्जितं भवति।

''**श्रोत्रग्रहणोयोर्थः स शब्दः**''[3] इति सूत्रेण शब्दस्य श्रोत्रजन्यप्रत्यक्षविषयत्वमिति लक्षणमुक्त्वा ''**एक द्रव्यत्वान्न द्रव्यम्**''[4] इति सूत्रेण शब्दस्याऽद्रव्यत्वेसिद्धे आकाशात्मक एकद्रव्यसमवायस्य हेतुकरणात्।

''**भूयस्त्वाद् गन्धवत्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः**''[5] ''**तथापस्तेजो-वायुश्चरसरूपस्पर्शाविशेषात्**''[6] इत्यादि सूत्राभ्यां, घ्राणरसनचक्षुस्त्वचां चतुर्णामिन्द्रियाणां भूतप्रकृतिकत्वमुपपादयता श्रोत्रस्य प्रकृतिविशेषानिर्देशेन नित्यत्वसूचनद्वारा आकाशस्य श्रोत्रत्वबोधनाच्च श्रोत्रसमवायः शब्दप्रत्यक्षे हेतुरिति वर्णितम्। तथा ''**एतेन गुणत्वे भावे च**''[7] **च**''[7] इति सूत्रोक्त न्यायेन शब्दत्वप्रत्यक्षे समवेतसमवायनामकः सन्निकर्षोपि सूचितो भवति। तथा तथा ''**असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत्**''[8] इति सूत्रमस्यायमाशयः 'असन् घटः' इत्याकारकाभावप्रत्यक्षं विरोधि प्रत्यक्षवत् प्रतियोगिघटप्रत्यक्ष तुल्यम्। प्रतियोगिनो घटस्य प्रत्यक्षं यथा अनुभवसिद्धं लौकिकसन्निकर्षजन्यञ्च भवति, तथैव अभावप्रत्यक्षमपि अपलपितुमशक्यं, सन्निकर्षजन्यञ्च भवति।

---

1 वैशेषिकसूत्र- 4/1/11
2 वैशेषिकसूत्र- 4/1/13
3 वैशेषिकसूत्र- 2/2/21
4 वैशेषिकसूत्र- 2/2/23
5 वैशेषिकसूत्र- 8/2/5
6 वैशेषिकसूत्र- 8/2/6
7 वैशेषिकसूत्र- 4/1/13
8 वैशेषिकसूत्र- 9/1/6

अभावप्रत्यक्षे तु प्रतियोगिनो योग्यानुपलब्धिः स्मरणञ्चेति सहकारिकारणद्वयमपि अपेक्षितमिति विशेषः। तदाह कूटप्रत्यक्षाभावात् भूतस्मृतेरिति। भूतस्योत्पद्यविनष्टस्य घटादेः प्रतियोगिनः उपलब्ध्यभावात् स्मरणाच्चेत्यर्थः। एवञ्चाभावप्रत्यक्षस्य सन्निकर्षजन्यत्वं सूचयन् सूत्रकारः, संयोगसमवायसम्भवात्संयुक्तविशेषणात्मकं सन्निकर्षमपि सूचितवान् भवति। एवञ्च षड्विधोपि सन्निकर्षः समानतन्त्रे स्पष्टं सूचितः। यद्यपि षड्विधेति शब्देन सन्निकर्षो न विभक्तः इति सर्वैरेवावगम्यते।

**प्रशस्तपादाचार्याभिमत सन्निकर्षपरिशीलनम् :-**

प्रशस्तपादभाष्ये प्रत्यक्षनिरूपणावसरे **''द्रव्ये तावद् द्विविधे महत्यनेकद्रव्यत्वोद्भूत रूपप्रकाशचतुष्टयसन्निकर्षात् धर्मादि सामग्र्ये च स्वरूपालोचनम्''**[1] इति ग्रन्थेन संयोगात्मकः सन्निकर्षः द्रव्यप्रत्यक्ष हेतुत्वेनाभ्याद्यायि। चतुष्टयसन्निकर्षादित्यस्य चात्मा मनः इन्द्रियं विषयः एतेषां चतुर्णां संयोगादित्यर्थः।

तथा **''रूपरसगन्धस्पर्शेष्वनेकद्रव्यसमवायात् स्वगतविशेषात् स्वाश्रयसन्निकर्षा-नियतेन्द्रियनिमित्तमुत्पद्यते''**[2] इति ग्रन्थेन रूपादि गुणप्रत्यक्षं प्रति संयुक्तसमवायो हेतुः। इत्यपि अवबुद्ध्यते।

**''शब्दस्य त्रयसन्निकर्षाच्छोत्रसमवेतस्य तेनैवोपलब्धिः''**[3] इति ग्रन्थेन शब्दप्रत्यक्षे शब्दप्रत्यक्षे श्रोत्रसमवायो हेतुः इति स्पष्टमुद्भावितम्।

**''त्रय सन्निकर्षादिति आत्ममन इन्द्रियाणां सन्निकर्षः सूचितः। इन्द्रियार्थसन्निकर्षः श्रोत्रसमवेतेत्यनेन दर्शितः।''**[4] इति तत्रत्यो न्यायकन्दली ग्रन्थोऽत्रानुसन्धानमर्हति। तथा संख्यानिरूपणावसरे द्वित्वोत्पत्ति प्रतिपादन सन्दर्भे

---

[1] प्रशस्तपादभाष्यम्, प्र०नि०, पृ०सं०- 443
[2] प्रशस्तपादभाष्यम्, प्र०नि०, पृ०सं०- 459-460
[3] प्रशस्तपादभाष्यम्, प्र०नि०, पृ०सं०- 460
[4] प्रशस्तपादभाष्यम्, प्र०नि०, पृ०सं०- 460

**''वोद्धुशचक्षुषा समानासमानजातीययोर्द्रव्ययोः सन्निकर्षेसति तत्संयुक्तसमवेत-समवेतैकत्व ज्ञानोत्पत्तौ''**[1] इति भाष्यग्रन्थेन एकसंख्या समवेतैकत्वजातिप्रत्यक्षं प्रति चक्षुः संयुक्तसमवेतसमवायः सन्निकर्षः इति सूचितं भवति। शब्दत्वप्रत्यक्षकारणीभूतः समवेतसमवायाख्यः सन्निकर्षो यद्यपि भाष्ये नोल्लिखितः। तथाप्येकत्वसामान्यप्रत्यक्षन्यायेन सोपि भाष्याभ्युपगत इत्येव प्रतिभाति। आध्यात्म चानेक विधाः सन्निकर्षाः प्रशस्तपादाचार्यसम्मताः इति अवगम्यते।

अभावमाधिकृत्य प्रशस्तपादभाष्ये निरूपणं यतो न विद्यते, अतः विशेषणताख्य प्रस्तावोपि तत्र नावलोक्यते। कन्दलीकारास्तु षड्विधमपि सन्निकर्षं सोदाहरणं प्रत्यपादयत्।

**सन्निकर्षविषये वार्तिककाराणामभिमतम्**

उद्योतकारास्तु **''सन्निकर्षः पुनः षोढाभिद्यते''**[2] इत्यादिना ग्रन्थेन पूर्वोक्तान् षड्विधसन्निकर्षान् सोदाहरणं प्रदर्शितवन्तः। सूत्रादयं विभागात्कथं लभ्यः? इत्याशंकायां- ''सोयं सन्निकर्षशब्दः संयोगसमवायविशेषणविशेष्यभावव्यापकत्वादुपात्तः''[3] इति ग्रन्थेन संयोगसमवायादि शब्दमप्रयुज्य साधारणं सन्निकर्षशब्दं प्रयुक्तवता। सूत्रकारेण सम्भाविताः सन्निकर्षाः ग्रहीतव्याः इति सूचितमिति प्रत्यपादि।

**वार्तिककारमते विशेषणविशेष्यभावसन्निकर्षः :-**

न्यायवार्तिके विशेषणविशेष्यभावः षष्ठः सन्निकर्षः। प्रोक्तः। स च समवायविषयक प्रत्यक्षं प्रति अभावविषयकप्रत्यक्षं प्रति च हेतु इति प्रतिपादितम्। तत्र च टीकायां **''विशेषणभावेन संयुक्तविशेषणं समवेतविशेषणञ्च संगृहीतमि''**[4]त्येवं व्याख्यानं दृश्यते। तस्य चायमाशयः भूतलादि विशेष्यक अभावप्रत्यक्षं प्रति संयुक्तविशेषणत्वं सन्निकर्ष इति।

---

[1] प्रशस्तपादभाष्यम्, प्र0नि0, पृ0सं0 272
[2] न्यायवार्तिक, पृ0 199
[3] न्यायवार्तिक, पृ0 200
[4] ता0टी0, पृ0 210

न्यायसारे तु वार्तिकवत् षड्विधसन्निकर्षं संज्ञया निर्दिश्य विशेषणविशेष्यभावम-धिकृत्य **''एतद्पञ्चविधसम्बन्धसम्बद्धविशेषणविशेष्यभावाद्दृश्याभावसमवाययोर्ग्रहणम्''**[1] इत्युपवर्णितम्। विशेषणत्वञ्च पञ्चविधं संयुक्तविशेषणत्वं संयुक्तसमवेतविशेषणत्वं, संयुक्तसमवेतसमवेतविशेषणत्वं समवेतविशेषणत्वं-समवेतसमवेतविशेषणत्वञ्चेति पञ्चविधमिति तदाशयः। न्यायकन्दल्यामपि अयमेव विभागः उल्लिखितः।

अपि च विशेषणविशेष्यभावनामकः नैकसम्बन्धः। अपितु विशेषणत्वं विशेष्यत्वं वेति। सम्बन्धद्वयं तत्राभावविशेषणकप्रत्यक्षे विशेषणत्वं सन्निकर्षः। एवमभावविशेष्यकप्रत्यक्षे विशेष्यत्वं सन्निकर्षः। विशेष्यत्वमपि संयुक्तविशेष्यत्वम्। संयुक्तसमवेतसमवेतविशेष्यत्वादिरूपेण पूर्ववत् पञ्चविधं ज्ञेयम्। आहत्य विशेषणविशेषणभावः दश विधः। इत्येवं विशेषः न्यायभूषण ग्रन्थादौ उपलभ्यते। एवं रूपो विभागो यद्यपि वार्तिकादौ नावलोक्यते। तथापि औचित्यमनुभवञ्चावलम्ब्य भूषणकारा इत्थं प्रकारेण सन्निकर्षस्वरूपमित्थं प्रकारेण प्रतिपादितम्। मणिकाराणामपि एष विभाग अभिमत इत्यग्रे वक्ष्यामः। तर्कसंग्रहदीपिकायां तत्प्रकाशिकायाञ्च विशेषणत्व विशेष्यत्वयोः उभयोरपि सन्निकर्षत्वं सयुक्तिकं प्रतिपादितम्।

## समवायप्रत्यक्षे विशेषणत्वस्य सन्निकर्षता

न्याससारन्यायवार्तिकयोः समवायविषयकप्रत्यक्षं प्रति इन्द्रियसंयुक्तविशेषणतायाः सन्निकर्षत्वं प्रतिपादितम्। परन्तु प्रशस्तपादाचार्येण समवायो न प्रत्यक्षवेद्यः इति प्रदर्शनपुरस्सरं तस्य सम्बन्धान्तरत्वं खण्डितम्। उक्तञ्च मुक्तावल्यां-

**''वैशेषिकमते तु समवायो न प्रत्यक्षः''**[2]

वस्तुतस्तु प्रशस्तपादभाष्ये योगिप्रत्यक्षनिरूपणावसरे **''अस्मद्विशिष्टानान्तु योगिनां युक्तानां......समवाये चावितथं स्वरूपदर्शनमुत्पद्यते''**[3] इत्यनेनग्रन्थेन समवायोपि

---

[1] न्यायसार, पृ0सं0 167

[2] मुक्तावली, प्र0खं0, पृ0सं0 204

[3] प्रशस्तपादभाष्यम्, प्र0नि0, पृ0सं0- 464, 465

योगिप्रत्यक्षस्य विषयः इति ज्ञाप्यते। केन सन्निकर्षेण योगिप्रत्यक्षे समवायोपि योगिप्रत्यक्षस्य जिज्ञासा जायते। अत्राह कन्दलीकारः- **"संबद्धविशेषणभावेन समवायाभावयोर्ज्ञानं जनयतीति"**[1]। अनेन ग्रन्थेन **'समवायविषयकप्रत्यक्षं प्रति इन्द्रियसम्बद्धविशेषणत्वं सन्निकर्षः'** इति स्पष्टमुक्तम् तच्च प्रत्यक्षं योगिनां भवतु नास्माकम्। तथापीन्द्रियसम्बद्धविशेषणता नामकः सन्निकर्षः भाष्यकारेण स्वीकृत एव इत्यवगच्छामः। समवायस्याप्रत्यक्षत्व कथनन्तु अस्मदादि प्रत्यक्षविषयत्वाभिप्रायेणेति न भवति कश्चन विरोधः।

**समवायस्य प्रत्यक्षत्वं तत्र सन्निकर्षस्य च प्रदर्शनम् :-**

न्यायवार्तिकतात्पर्यटीकायान्तु प्रशस्तपादभाष्यखण्डनपुरस्सरं समवायस्य प्रत्यक्ष-विषयत्वं एवं तत्र विशेष्यविशेषणभावस्य सन्निकर्षविधया कारणत्वञ्च युक्ति पुरस्सरं समर्थितम्। न्यायमञ्जर्याम्- **"सन्निकर्षस्त्विन्द्रियाणामर्थैः सह षट्प्रकारः"**[2] इत्युपक्रम्य संयोगादि समवेतसमवायान्तञ्च पञ्चविधे सन्निकर्षं सोदाहरणं प्रदर्श्य। षष्ठस्य सन्निकर्षस्य प्रसङ्गे एवमुक्तं **"संयुक्तविशेषणभावादभावग्रहणं व्याख्यातमिह घटोनास्तीति। चक्षुषा संयुक्तो भूप्रदेशः तद्विशेषणीभूतश्चाभावः इति।"**[3] अत्र समवायप्रत्यक्षं विशेषणतायाः तद्धेतुत्वञ्च नोल्लिखितम्। अथापि **"परमतमप्रतिषिद्धमनुमतमिति"** न्यायेन वार्तिकटीकाकृद्भ्यामुक्त-मनुमतमेव जयन्तभट्टेनाप्यनुमतमित्यस्ति सम्भावयितुमवकाशः। वस्तुतः न्यायमञ्जर्यामभावस्य प्रमाणान्तरवेद्यत्वखण्डनसन्दर्भे **"अथवा संयुक्तविशेषणभावाख्यसन्निकर्षोपकृतं चक्षुरभावं ग्रहीस्यति। यथा समवायप्रत्यक्षत्ववादिनां पक्षे समवायम्"**[4]।

---

[1] न्यायकन्दली, पृ0 187
[2] न्यायमञ्जरी, पृ0सं0-68
[3] न्यायमञ्जरी, पृ0सं0-68
[4] न्यायमञ्जरी, पृ0सं0-49

**सन्निकर्षविषयकं भाट्टमतम् :-**

भाट्टमतावलम्बिनस्तु संयोग, संयुक्ततादात्म्यभेदेन सन्निकर्षो द्विविधः इति वर्णयन्ति। तथाहि पृथिव्यप्तेजसां चक्षुस्त्वगिन्द्रियाभ्यां संयोगात् प्रत्यक्षमुत्पद्यते। वायोस्त्वक् संयोगात् प्रत्यक्षं जायते। दिगाकाशतमसां चक्षुः संयोगात् प्रत्यक्षं समुत्पद्यते। तथा च द्रव्यप्रत्यक्षं प्रति इन्द्रियसंयोगः सन्निकर्षविधया कारणं भवतीति ज्ञायते। द्रव्यगतानां जाति गुणकर्मणां प्रत्यक्षं संयुक्ततादात्म्यरूपसन्निकर्षाज्जायते। धर्मधर्मिणोरभेदस्याभ्युपगमात्। परन्तु गुणगतानां गुणत्वरूपत्वादिजातीनामिन्द्रियसंयुक्तद्रव्यतादात्म्यस्याभावात् कथं प्रत्यक्षं भवितुमर्हति? इत्याकारकजिज्ञासायां समाधानद्वयं भवितुमर्हति (1) गुणगतजातेः प्रत्यक्षे संयुक्ततादात्म्य तादाम्यं सन्निकर्षेति। एतद्पक्षे संयोगः, संयुक्ततादात्म्यं, संयुक्ततदात्म्यतादात्म्यञ्चेति त्रिविधः सन्निकर्षो भवति। नैयायिकसम्मतयोः संयुक्तसमवाय, संयुक्तसमवेतसमवाय, समवाय पदस्थाने तादात्म्य पदं समवेतसमवायपदस्थाने तदात्मतादात्म्य पदञ्चाभिषिन्चन्ति भाष्यः।

गुणगतजातेः साक्षात्द्रव्यतादात्म्याभावेति स्वाश्रयगुणस्य द्रव्यतादात्म्यादाश्रयद्वारा द्रव्यतादात्म्यमस्तीति शब्दस्य द्रव्यत्वात्तस्मिन् श्रोत्र संयोगएव भवितुमर्हति। अतो नास्ति, समवायात्मकसन्निकर्षस्य किमपि प्रयोजनम्। अतएव समवेतसमवायस्यापि नावश्यकत्वम्। अभावस्त्वनुपलब्धि गम्यत्वात् प्रत्यक्षविषये एव न भवतीति तदर्थं विशेषणताख्यसन्नकर्षोपि न कल्पनीयः। यदा समवायपदार्थ एव नाभ्युपेयः तदा तत्प्रत्यक्षार्थं विशेषतायाः सन्निकर्षस्याऽऽवश्यकतानास्ति। अतः द्विविधसन्निकर्षः भवतीति **मानमेयोदयकारः** प्रत्यपादयत्।

यद्यपि **"योग्यतालक्षणो वाच्यः संयोगः कार्यलक्षितः"**[1] इति श्लोकवार्तिकात् प्रत्यक्षाख्य कार्यगम्या योग्यतैव सन्निकर्षः इत्वगम्यते। किञ्च प्राप्तिमात्रस्य सन्निकर्षत्वे त्वक् संयुक्तरूपेपि सद्भावात् रूपस्यापि त्वाचप्रत्यक्षापत्तिः स्यात्। अतः योग्यतासहितैव प्राप्तिः सन्निकर्षो भवतीतीत्यभ्युपेयम्। तद्वरं योग्यतैव सन्निकर्षः।

---

[1] श्लो0वा0, पृ0-130

तदुक्तं श्लोकवार्तिके-[1]

**''प्राप्तिमात्रं हि सम्बन्धोनेन्द्रियस्याभ्युपेयते।**
**मा भूतकारणमात्रेण त्वचारूपावधारणम्।।''** इति

तथापि योग्यताऽत्रैवास्ति नान्यत्रेत्येवं योग्यतानियामकतया संयोगादेरवश्यं स्वीकरणीयतया मध्ये किं योग्यतयेति मणिकाराः निरूपयामासुः। तमेतं दोषं मनसिनिधायैव मानमेयोदयकारः आकाराऽप्रदर्शितमपि सन्निकर्षविभागं प्रादर्शयदिति प्रतिभाति।

## सन्निकर्षविषयकं गुरूमतम्

प्राभाकरमतविलम्बिनोमीमांसकाः संयोगः, संयुक्तसमवायः, समवायश्चेतीति त्रिविध एव सन्निकर्षो भवतीति वदन्ति। जातेरनभ्युपगमात् गुणगतजातिप्रत्यक्षनिर्वाहाय स्वीकृतः संयुक्तसमवेतसमवाय अनावश्यकः। अतएव शब्दत्वप्रत्यक्षोपपत्तये समवेतसमवायोपि न कल्पनीयः। अभावस्याधिकरणस्वरूपतयाऽधिकरणं येन सन्निकर्षेण गृह्यते तत्सन्निकर्ष ग्राह्यत्वान्च तदर्थं विशेषणतासन्निकर्षः आवश्यकः इति।

वस्तुतस्तु एतानि दूषणानि स्वसिद्धान्तश्रद्धाविजृम्भितानि न न्यायसिद्धान्तमास्कन्दन्ति। जातेरभ्युपगमात् गुणगतजातिप्रत्यक्षनिर्वाहाय संयुक्तसमवेतसमवायस्य। अतएव शब्दत्व प्रत्यक्षोपपादनाय समवेतसमवायस्याभावस्याधिकरणातिरिक्तत्वं समर्थनेन विशेषणताया-श्चावश्यमभ्युपेयत्वात्।

अपि च प्राभाकरमते जातेरतिरिक्तपदार्थत्वाभावेपि सादृश्यं जातिरित्यभ्युपगमात् गुणगतस्य जाति स्थानीयस्य सादृश्यस्य प्रत्यक्षनिर्वाहाय संयुक्तसमवेतसमवायः आवश्यकः इति मणिकाराः निरूपयन्तीति।

---

[1] श्लो०वा०, पृ०-135

## सन्निकर्षविषये अद्वैतवेदान्तिमतम्

अद्वैतमतावलम्बिनस्तु द्रव्यगुणयोः जातिव्यक्त्योश्च तादात्म्यमाभ्युपगच्छन्ति। अतः तेषांमते समवायाख्यस्य सन्निकर्षस्य प्रवेशो न विद्यते। समवायस्य स्थाने तादात्म्यपदं निक्षिप्य सन्निकर्षाः वक्तव्याः। तथाहि द्रव्यप्रत्यक्षे संयोगः सन्निकर्षः द्रव्यसमवेत गुणजात्यादि प्रत्यक्षे संयुक्ततादात्म्यं सन्निकर्षः। गुणगतजाति प्रत्यक्षे संयुक्ताभिन्नतादात्म्यं सन्निकर्षः। **''तस्मात् द्रव्यात्मकता गुणस्य। एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्मकता व्याख्याता''**[1] इति शाङ्करभाष्यं गुणगुण्यादिनां द्रव्यात्मकत्वं प्रतिपादयति।

वेदान्तपरिभाषायां **''तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभि-व्यञ्जक वृत्तिजनने विनियोगः''**[2] इति कथितम्। तद्व्याख्यान भूतायां शिखामणि व्याख्यायाञ्च **''एवं घटादेः प्रत्यक्षत्वे सिद्धे संयोगसंयुक्ततादात्म्यसंयुक्ताभिन्नतादात्म्याना-मिन्द्रियसन्निकर्षाणाम्''**[3] इत्यादि व्याख्यानमुपलभ्यते। परन्तु शब्द तद्गतजात्योः प्रत्यक्षे कः सन्निकर्षः? इति संदेहो जायते। तत्रापि पूर्वोक्तयुक्त्या श्रोत्रात्मकाकाशतादात्म्यं शब्दप्रत्यक्षे, एवं शब्दत्वप्रत्यक्षे श्रोत्राभिन्नशब्दतादात्म्यं, सन्निकर्षः इत्येवं निष्कर्षः अत्र मते सिद्ध्यति। तथा च संयोगः संयुक्ततादात्म्यं संयुक्ताभिन्नतादात्म्यं, तादात्म्यं, अभिन्नतादात्म्यञ्चेति पञ्चविधः सन्निकर्षः अद्वैत्यभिमतः इति निश्चीयते।

## सन्निकर्षविषयकं विशिष्टाद्वैतिमतम्

रामानुजमतावलम्बिनस्तु सन्निकर्षद्वयमेव स्वीकुर्वन्ति। शारीरकमीमांसायां तर्कपादे समवायाख्यस्य पदार्थस्य निराकृतत्वात् समवायगर्भाः सन्निकर्षाः तैः नेष्यन्ते। जातेरतिरिक्त पदार्थत्वानङ्गीकारात्। गुणक्रियागतजातिप्रत्यक्षोपपादनाय शब्दगतजातिप्रत्यक्षनिर्वाहाय च स्वीकृतौ

---

[1] शाङ्करभाष्य, ब्र0सू0- 2/3/17
[2] वेदान्तपरिभाषा, पृ0 75
[3] वेदान्तपरिभाषा, व्या0शि0, पृ0 75

संयुक्तसमवेतसमवाय, समवेतसमवायावनावश्यकौ। अभावस्य भावस्वरूपत्व स्वीकारात् विशेषणत्वमपि नहि कल्पनीयम्। अर्थात् संयोगः संयुक्ताश्रितत्वञ्चेति सन्निकर्षद्वयेनैवालम्।

तत्र द्रव्यप्रत्यक्षे संयोगसन्निकर्षः। द्रव्यगतगुणक्रियाप्रत्यक्षे संयुक्ताश्रितत्वं सन्निकर्षः इति। तदुक्तम् तत्वरत्नाकरे-

**''तत्रवृद्धाविदामासुः संयोगं सन्निकर्षणम्।**
**संयुक्ताश्रयणञ्चेति यथा सम्भवमूह्यताम्।।''**[1] इति।

**वेदान्तदेशिकैश्च न्यायसिद्धाञ्जने-**

**''यथायोग्यं वाय्वादिचतुष्टयं संयोगेन त्वचा गृह्यते। स्पर्शादयस्तु संयुक्तनिष्ठतया''**[2] इत्यादि। भाट्टादिवत् एतन्मते गुणगुणिनोः अभेदं नाङ्गीकृतम्। अतएव तादात्म्यस्थाने आश्रितत्वमभिषिञ्चतीतिविशेषः। तथापि शब्दप्रत्यक्षनिर्वाहार्थं समवायाख्यः सन्निकर्षः स्वीकर्तव्यः इति तु नाशंकनीयम्। यदि। हि श्रोत्रमाकाशस्स्यात्तदा शब्दस्य श्रोत्रसमवायो भवितुमर्हति। वस्तुतः श्रोत्रं नाकाशः, अपितु सात्विकाहंकारोपादानकेन्द्रियविशेषः श्रोत्रम्। इन्द्रियाणामहंकारिकत्वादभ्युपगमात्। तथा च श्रोत्रसंयुक्ताकाशाश्रितत्वं शब्दप्रत्यक्षकारणीभूतः सन्निकर्षः तथा चोक्तं न्यायसिद्धाञ्जने-

**''शब्दस्यभूतधर्मत्वात् श्रुतेर्वैकारिकत्वतः।**
**संयुक्तनीलयोयोग्यः स तया सम्प्रतीयते।।''**[3] इति।

**श्रुतेः- श्रोत्रेन्द्रियस्यवैकारिकत्वतः** सात्विकाहंकारोपादानकत्वात्। संयुक्तनीलयः श्रोत्रेन्द्रियसंयुक्ताकाशनिष्ठः योग्यः शब्दः। तया-संयुक्ताश्रितत्व प्रत्यासत्या श्रोत्रेन्द्रियेण गृह्यत इत्युक्त कारिकायाः अर्थः। वस्तुतस्तु जातेरतिरिक्तपदार्थत्वादङ्गीकारेपि स्वगतसादृश्यं जातिरितिविशिष्टाद्वैतिनः स्वीकुर्वन्ति। तथा च गुणगतस्य स्वसादृश्यस्यजाति स्थानापन्नस्य

---

[1] न्या0सि0, पृ0 40
[2] न्यायसिद्धाञ्जन, पृ0सं0-39
[3] न्यायसिद्धाञ्जन, पृ0सं0-38

प्रत्यक्षतायैः संयुक्ताश्रिताश्रितत्वाख्यः सन्निकर्षः स्वीकर्तव्यः विशिष्टाद्वैतवादिभिः इति प्रतिभाति। यद्यपि मूलग्रन्थोऽयं विषयोनोद्भावितः तथापि उपपत्ति साम्यात् स्वीकरणं न दोषभावक्ष्यतीति मन्महे। तथा च संयोगः, संयुक्ताश्रितत्वं, संयुक्ताश्रिताश्रितत्त्वञ्चेति त्रयः सन्निकर्षाः विशिष्टाद्वैतमते निश्चिताः सन्ति।

**सन्निकर्षविषयकं मणिकारमतम्**

चिन्तामणि ग्रन्थे तु आदौ षड्विधान्सन्निकर्षान् प्रदर्श्य तत एकैकस्यापि सन्निकर्षस्यावश्यकत्वं युक्तिपुरसरं निरूप्य समवायसन्निकर्षनिरूपण प्रस्तावे श्रोत्रं प्रति आगतः शब्दः श्रोत्रेणगृह्यत इति शब्दः अव्याप्यवृत्तिरिति च सविस्तरं तत्र निरूपितम्।

**तत्र विषणविशेष्यभावे-**[1]

**''विशेषणतया शब्दाभावस्येन्द्रियसम्बद्धविशेषणतया समवायघटाभावादेर्गृहः।''** इति संक्षिप्य प्रदर्शितम्। समवायस्यापि प्रत्यक्षत्वं तात्पर्यटीका भूषणयोः निरूपितमस्ति। मणिकारस्यापि सम्मतमिति ग्रन्थावलोकनात् प्रतीयते। तत्रापीन्द्रियसंयुक्तविशेषणतया इत्यनुक्त्वा इन्द्रियसम्बद्धविशेषणतयेति सामान्यशब्दं प्रयुञ्जमानाः मणिकाराः। संयुक्तविशेषणता, संयुक्तसमवेतविशेषणतेत्यादयो भूषणकृदुक्ताः प्रभेदाः स्वस्यापि सम्मताः इति ज्ञापयति। **उक्तञ्च रूचिदत्तोपाध्यायैः-**[2]

**''सम्बन्धिविशेषणताच संयुक्तविशेषणता, संयुक्तसमवेतविशेषणेतेत्येवं निर्वाच्या''** इति।

किञ्च भूषणादि प्राचीनग्रन्थेषु केवल विशेषणतायाः सन्निकर्षत्वं न प्रदर्शितम्। मणिकारैस्तु शब्दाभावप्रत्यक्षोपपादनाय केवल विशेषणतापि सन्निकर्षत्वेन निर्दिष्टेति विशेषः।

---

[1] तत्वचिन्तामणिः, प्रकाश, पृ0सं0-613
[2] तत्वचिन्तामणिः, प्रकाश, पृ0सं0-613

परं तु विशेषणताया एव बहुप्रकारत्वात् षोढ़ा सन्निकर्षः कथमुपपद्यत इति शंकामनूद्योक्तं प्रकाशे-

**"न चैवं षोढा परिगणनमसङ्गतमिति वाच्यम्। विशेषणतात्वेनैकीकृत्य विभजनादिति।"**[1]

वस्तुतत्वनेक विधानां विशेषणतात्मकसन्निकर्षाणां विशेषणतात्वेनैकवर्गीकरणवत्समवायस्वरूपाणां संयुक्तसमवाय, संयुक्तसमवेतसमवाय, समवाय, समवेतसमवायानां चतुर्णामप्येक वर्गीकरणं समवायत्वेनरूपेण विधाय संयोगः, समवायः, विशेषणता चेति त्रिधैव सन्निकर्षः कुतो न विभागीकृतः इत्याशंकाऽवशिष्यते।

अत्रापि प्रकाशकाराः- **"न च विशेषणतावत्समवायत्वेन चतुर्णामैक्यापत्तिः। स्वतन्त्रस्य नियोगानरहत्वात्"**[2] इति ग्रन्थेन ईष्टापत्तिमेव सूचितवन्तः। दिनकरेणापि एवमेव मुक्तावलीटीकायां प्रतिपादितम्।

अथ मणिकारोक्तं मार्गमवलम्ब्य षड्विधानां सन्निकर्षाणां प्रत्यक्षकारणत्वं युक्तिपुरस्सरमिदानीं स्थापयामः।

**संयोगः**

घटपटादि द्रव्यविषयकप्रत्यक्षं प्रति इन्द्रियसंयोगः कारणम्। ननु सूक्ष्मावयवावच्छेदेनावयविनीन्द्रियसंयोगे सत्यपि अवयविनः प्रत्यक्षप्रसङ्गः स्यात्। यदि च एतद्दोषवारणाय महावयवावच्छिन्नेऽवयविनीन्द्रियसंयोगः कारणमित्युपेयते तर्हि महावयवेन्द्रियसंयोग एव प्रत्यक्षकारणमस्ति। कृतमवयवीन्द्रियसंयोगस्य तत्कारणत्वेनेति चेत् न। यदि द्रव्यप्रत्यक्षं प्रति अवयविप्रत्यक्षं प्रति वा स्थूलावयवेन साकमिन्द्रियसंयोगो हेतुरित्याश्रीयते तदाऽऽत्मविषयकं त्र्यणुकविषयकं च प्रत्यक्षं कथं भवेद् आत्मनः। अवयवस्यैवाभावात् त्र्यणुकस्यावयवसत्वेपि

---

[1] तत्वचिन्तामणिः प्रकाश, पृ0सं0-613

[2] तत्वचिन्तामणि, पृ0 613

महावयवाभावात्। महावयवेन्द्रियसंयोगस्योभयत्र दुरूपपादत्वात्।

अतः आत्मप्रत्यक्षं प्रति ग्राह्येणात्मना मनःसंयोगस्य त्रसरेणुप्रत्यक्षं प्रति च ग्राह्येण त्रसरेणुना चक्षुः संयोगस्य कारणत्वमवश्यमभ्युपेयम्। तथा च घटादिप्रत्यक्षं प्रत्यपि ग्राह्येन घटादिना इन्द्रियसंयोग एवहेतुः स्वीकृतत्वात्, न तु ग्राह्यावयवेन्द्रियसंयोगेन हेतुत्वम्। इत्येव युक्ति संगतं प्रतिभाति। न च ग्राह्यसंयोगस्यप्रत्यक्षहेतुत्वे सूक्ष्मावयवावच्छिन्नावयविना इन्द्रिय-संयोगदशायामपि घटप्रत्यक्षापत्तिरिति वाच्यम्। अवयविप्रत्यक्षे परं स्थूलावयवस्यावच्छेदकत्व-मभ्युपेत्य स्थूलावयवावच्छिन्नावयविसंयोगः कारणमिति वा, तत्प्रत्यक्षे ग्राह्यसंयोगः स्थूलावयवेन्द्रियसंयोगस्योभयं कारणमिति वा स्वीकारात्। तथा चाऽत्मत्रसरेणुप्रत्यक्षहेतुतया क्लृप्तस्य ग्राह्येन्द्रियसंयोगस्य परित्यागः नोचितं प्रतिभाति।

## संयुक्तसमवायसंयुक्तसमवेतसमवाययोः सन्निकर्षत्व प्रदर्शनम्

पुष्पादि द्रव्यगतानां गन्धादीनां प्रत्यक्षं प्रति संयुक्तसमवायो हेतुः। घ्राणेन्द्रियसंयुक्तं पुष्पं तत्समवायः गन्धेविद्यते इति संयुक्तसमवायसन्निकर्षेण घ्राणेन्द्रियं गन्धप्रत्यक्षं जनयति। तथा गन्धत्वप्रत्यक्षं संयुक्तसमवेतसमवायप्रत्यासत्या घ्राणेन्द्रियेण जायते।

ननु संयुक्तसमवायो न हि गन्धप्रत्यक्षं प्रति कारणं किन्तु आश्रयसंयोगः। ग्राह्यस्य गन्धस्याश्रयभूतं यत्पुष्पं तेन साकमिन्द्रियसंयोगः इति यावत्। तथा गन्धत्वप्रत्यक्षं प्रति ग्राह्यगन्धत्वाश्रयीभूत गन्धाश्रय पुष्पेन्द्रियसंयोगः कारणम्।

तथा च द्रव्यप्रत्यक्षकारणत्वेन क्लृप्तेन संयोगेनैव गुण तदगतजातिप्रत्यक्ष निर्वाहसम्भवे कृतं संयुक्तसमवाय, संयुक्तसमवेतसमवायाभ्यामिति चेत् न। गन्धप्रत्यक्षं प्रति गन्धसमवायि-द्रव्यसंयोगः यदि कारणं स्यात् तदा गन्धसमवायो विशेषणमुपलक्षं वा भवेत्। विशेषणत्वे गन्धसमवायस्यापि कारणत्वमावश्यकम्। तस्य कारणत्वमन्तरा तद्विशिष्टस्य कारणत्वासम्भवात्। गन्धसमवायस्योपलक्षणविधया सन्निकर्षघटकत्वे च समवायस्यैकत्वेन घटस्यापि पटगन्ध-समवायोपलक्षितत्वमस्त्येव, पटगन्धसमवायोपलक्षितघटेन सः इन्द्रियसंयोगात्पटप्रत्यक्षप्रसङ्गः।

तस्मात् संयुक्तसमवाय, संयुक्तसमवेतसमवाययोरुभयोरपि सन्निकर्षविधया प्रत्यक्ष-कारणत्वमकामेनापि स्वीकरणीयमेव। अत्रैव प्रसङ्गे गुणगता नीलत्वादिजातिः सविस्तरमुप-पादिता चिन्तामणिग्रन्थे अस्ति।

मीमांसक हि गुणगतां जातिं नाभ्युपगच्छन्ति, अतएव संयुक्तसमवेतसमवायोपि नावश्यकः इति प्रकरणपञ्चिकायां साधु प्रतिपादितम्। जातिमङ्गीकुर्वन्तोपि ते इदं रूपं-इदं रूपं इत्यनुगत प्रतीति निर्वाहाय रूपेषु सादृश्यमङ्गीकुर्वन्ति। तथा च रूपगतसादृश्यस्य चक्षुः संयुक्तघटसमवेतरूपसमवायाख्यं सन्निकर्षं पुरुष्कृत्यैवप्रत्यक्षं भवतीति वक्तव्यम्। तथा च संयुक्तसमवेतसमवायस्यसन्निकर्षत्वं निराबाधमिति मणिकाराभिमतमिति।

**समवायः**

शब्दप्रत्यक्षं प्रति श्रोत्रेन्द्रियसमवायः सन्निकर्षविधया कारणम्। कर्णशष्कुल्यवच्छि-न्नस्याकाशस्य श्रोत्रत्वात् शब्दस्य चाकाशे श्रोत्रात्मके समवायात्।

नन्वाकाशे विद्यमानः सर्वोपि शब्दः किमिति श्रोत्रेण न गृह्यते। अवच्छेद्यस्याकाशस्यै-कत्वात् सर्वेषां शब्दानां श्रोत्रेपि समवायात्, इति चेन्न। कर्णसंयोगेनावच्छिन्नसमवायः शब्दप्रत्यक्षकारणीभूतः सन्निकर्षः भवतीत्यभ्युपगम्यते। तथा च कर्णसंयोगावच्छेदेन आकाशे यः शब्दरुत्पद्यते तस्यैव कर्णसंयोगावच्छिन्नसमवायनामकः सन्निकर्षो भवति। नेतरावच्छेदेनो-त्पद्यमानस्य शब्दस्येति न सर्वशब्दोपलब्धि प्रसङ्गः। इत्थं प्रकारेणोक्तदोषपरिहार संभवात्।

समवायस्यैकत्वेन कर्णसंयोगाविच्छिन्नसमवायाख्यस्य सन्निकर्षस्य सर्वेषुशब्देषु विद्यमानत्वेपि प्रत्यक्षे विषयस्य हेतुत्वेन कर्णसंयोगावच्छिन्नाकाशे सर्वशब्दरूप विषयाभावान्न। सर्वेषां शब्दानां प्रत्यक्षमापादयितुं शक्यते। यथा वायौ रूपसमवायसत्वेपि रूपाभावान्न **'वायुः रूपवान्'** इत्याकारकं प्रत्यक्षम्। तथा यत्कर्णसंयोगावच्छिन्नाकाशे शब्दो नास्ति, तत्र शब्दसमवाय सत्वेपि शब्दरूप विषयाभावान्न तत्प्रत्यक्षापत्तिः।

अथ **वीणादौ शब्दः** इत्यनुभवात् कर्णेशब्दः इत्यनुभवाच्च वीणाद्यवच्छिन्नं नभः श्रोत्रं न तु कर्णावच्छिन्नं नभः इत्याक्षिप्य कर्णावच्छिन्नेपि शब्दग्रहात् कर्णावच्छिन्नमेव नभः श्रोत्रम्। किञ्च कर्णेन वीणाशब्दं शृणोमीति शब्दप्रत्यक्षसाधनत्वेन कर्णस्यानुभवात् शब्दसामान्य प्रत्यक्षे कर्णस्यानुविधानाच्च। कर्णावच्छिन्नं नभः श्रोत्रमित्येव युक्ति संगतं पश्यामः। वीणया शब्दं शृणोमीत्यनुभवात् सर्वशब्दानुविधानाभावाच्च न वीणाद्यवच्छिन्नं नभः श्रोत्रमिति वक्तुं शक्यते। एवं निरूप्य कदम्बगोलकन्यायेन वीचीतरङ्गन्यायेन वा श्रोत्रदेशं प्रत्यागतः शब्दएव गृह्यते। इत्थं प्रकारेण शब्दप्रत्यक्षविषयकं विवेचनं सयुक्तिकं मणिग्रन्थे प्रदर्शितम्।

**समवेतसमवायः**

अयं शब्दोऽयं शब्दः इत्यनुगतप्रतीति निर्वाहाय शब्दगतस्य सादृश्यस्य जातेर्वा स्वीकरणीयतया तत्प्रत्यक्षं सन्निकर्षमन्तराभवितुं नार्हतीति। समवेतसमवायोपि सन्निकर्षत्वेन स्वीकरणीयः इति।

**विशेषणविशेष्यभावः**

विशेषणविशेष्यभावः इत्यत्र विशेषणञ्च विशेष्यञ्चेति विशेषणविशेष्ये तयोर्भावः विशेषणविशेष्यभावः। **'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बद्ध्यते'** इति नियममाश्रित्य विशेषणभावः विशेष्यभावश्चेति सन्निकर्षद्वयमुक्त व्युत्पत्या लभ्यते। अनेन सन्निकर्षेण समवायाभावयोः प्रत्यक्षं जायते। यथा रूपसमवायीघटः इत्यत्र चक्षुः संयुक्तो घटः तत्र विशेषणं रूपसमवायः विशेषणता रूपसमवाये तथा च चक्षुः संयुक्तविशेषणतया उक्तस्थले भवति रूपसमवायस्य प्रत्यक्षम्।

एवं घटाभाववद्भूतलमित्यत्र चक्षुः संयुक्तं भूतलं तत्र विशेषणं घटाभावः। अतः चक्षुसंयुक्तविशेषणतासन्निकर्षेण घटाभावस्य प्रत्यक्षं जायते। एवं भूतले घटाभावः इत्यत्र चक्षुः संयुक्तं भूतलं तत्र विशेष्यभूतः घटाभावः, अतः एतद्स्थले घटाभावस्य चक्षुः संयुक्त-विशेष्यतासम्बन्धेन प्रत्यक्षं जायते।

अत्र विशेषणतासन्निकर्षस्य प्रत्यक्षेण सः कार्यकारणभावस्थले विशेषणतासम्बन्धः इन्द्रिय तत्सन्निकर्षभेदेनेन्द्रियसम्बद्धेति विशेषण भेदात् बहुविधः भवति। तेन विशेषणता- सन्निकर्षः एकः षष्ठसंख्यापूरकः इति कथनं न हि समीचीनं प्रतिभाति। तथापि विशेषणतात्वेन एकेनधर्मेणविशेषणता नाम एकत्वव्यवहारो जायते। अत एव विशेषणता सन्निकर्षे एकत्व-व्यवहारः न तु विशेषणता एका।

तथाहि भूतले घटाद्यभावप्रत्यक्षं प्रति चक्षुः संयुक्तविशेषणतासन्निकर्षः कारणं भवति। एवं घटगतएकत्वसंख्यायां रूपाभावः विद्यते तस्य प्रत्यक्षं प्रति चक्षुः संयुक्तघटसमवेत-एकत्वनिष्ठविशेषणतासन्निकर्षः कारणम्। एवं घटगतएकत्वसंख्यावृत्ति संख्यात्वे रूपाभावो वर्तते। तस्य प्रत्यक्षं प्रति चक्षुः संयुक्तसमवेतसमवेतविशेषणतासन्निकर्षः कारणम्। श्रोत्रे यः शब्दाभावः तस्य प्रत्यक्षं प्रति श्रोत्रावच्छिन्नविशेषणतासन्निकर्षः कारणम्। श्रोत्रवृत्ति ककारे खत्वाभावस्य प्रत्यक्षं प्रति श्रोत्रसमवेतविशेषणतासन्निकर्षः कारणम्। एवमाकाशात्मक श्रोत्रेयः कत्वावच्छिन्नस्य ककारस्याभावो वर्तते। तत्राभावे विद्यमानः यः गत्व जात्यभावः तस्य प्रत्यक्षं प्रति श्रोत्रविशेषणविशेष्यतासन्निकर्षः कारणम्।

एवं यत्र विशेषणविशेष्याणामवस्थितिः तत्र तद्तद्विशेष्येन सः विशेषणानां ये ये सम्बन्धाः भवेयुः तांस्तानादाय सम्बन्धपरम्परा कल्पनीया। यथा गुणत्वाभावप्रत्यक्षं प्रति चक्षुः संयुक्तघटसमवेतगुणसमवेतगुणत्वविशेषणपदार्थत्वविशेषणघटाभाव विशेषणतासन्निकर्षः कारणम्। इत्येवं रूपेण यद्यपि विशेषणता नाना विधा भवति, तथापि विशेषणतात्वेन धर्मेण साबहुविधापि विशेषणता एकैव स्वीक्रियते। अतो न षोढा सन्निकर्षः व्याघातः।

अतेवोक्तं विश्वनाथन्यायपञ्चाननेन तथापि- **''विशेषतात्वेन रूपेणैकैव सा परिगण्यते।''**[1]

---

[1] न्यायसिद्धान्तमुक्तावली, प्र0खं, पृ0सं0-205

**समवायः**

उपर्युक्त ग्रन्थेन प्रत्यक्षकारणीभूताः सन्निकर्षाः प्रदर्शिता, तदन्तरगत समवायपदार्थः इदानीं विविच्यते। तत्र चिन्तामणौ सन्निकर्षनिरूपणावसरे शब्दप्रत्यक्षं प्रति समवायारूपः सन्निकर्षो हेतुः, इत्येवं निरूप्य तदुपरि समवायनामकः पदार्थ एव यदि अप्रामाणिकः तर्हि तस्य कथं सन्निकर्षत्वं युज्यते? इति प्रश्नमुत्थाप्य विस्तरेण समवायः प्रसाधितः। एवं समवायपदार्थमधिकृत्य प्रायः शास्त्रान्तर कर्तृभिः बहुधा दूषणानि प्रदत्तानि। तेषां दूषणानां न्यायमते परिहारोस्ति न वा? मणिग्रन्थात्कियतां दूषणानां परिहारो लभ्यते? अविशिष्टानां कः परिहारोपायः? इति विमृश्य यथाशक्ति न्यायसिद्धान्तसिद्धस्य समवायस्य साधयितुं प्रयत मानोस्मि।

**वैशेषिकमते समवायपदार्थस्य प्रादुर्भावः**

वैशेषिकदर्शने **''इहेदमिति यतः कार्यकारणयोः स समवायः''**[1] इति समवायविषयकं सूत्रम्। कार्यकारणयोः इहेदमितिबुद्धिर्यस्मात् सम्बन्धात् भवति सः समवायः इति सूत्रस्यार्थः। अस्मिन् सूत्रे कार्यकारणयोः इति कथनेनावयवावयविनोः कार्यगुणादिकारणद्रव्ययोश्च विशिष्टबुद्धिनियामकः समवायः इत्येतावन्मात्रं लभ्यते। परन्तु जातिव्यक्त्योः नित्यगुणं, नित्य क्रियाभ्यां द्रव्यस्य च समवायासम्बन्धः इत्ययं विषयः सूत्रादस्मान्नावगम्यते। तथापि **''एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्''**[2] इत्यादि सूत्रान्तर पर्यालोचनया जाति व्यक्त्योरपि समवायः सूत्रानुमतः इति निर्धार्यते। **''आत्मसमवायादात्मगुणेषु''**[3] इति सूत्रेण गुणगुणिनोः **''तत्समवायात् कर्मगुणेषु''**[4] इति सूत्रेण क्रियाद्रव्ययोश्च समवायः सूत्रकारेण कण्ठरवेणोक्त।

---

[1] वै0सू0 7/2/26
[2] वै0सू0 4/1/13
[3] वै0सू0 9/1/15
[4] वै0सू0 9/1/14

**"कारणे समवायात् कर्माणि"**[1] एवं **"तथारूपेकारणैकार्थसमवायाच्च"**[2] इति सूत्रे अप्यत्रानुसंधानमर्हतः।

तात्पर्यटीकायां- **"अवयवावयविनौ गुणगुणिनौक्रियाक्रियावन्तौ जातिजातिमन्तौ च मिथः सम्बद्धावनु-भूयेते"**[3]। इति ग्रन्थेन समवायः कयोः कयोः सम्बन्धः इति विशिष्य निर्देशकृतः परन्तु विशेष तद्वतोरपि समवायासम्बन्धः इति न निर्दिष्टम्। वैशेषिकदर्शनासाधारणभूतो विशेषः। न्यायदर्शने नहि प्रस्तावमर्हतीति। तेषामाशयः स्यादिति मन्ये।

अयञ्च समवायो न हि द्रव्ये न वा गुणेऽन्तरभवति विलक्षणबुद्धिविषयत्वात् यथा सत्ता न द्रव्यादिष्वन्तर भवति। द्रव्यादिबुद्धि विलक्षणबुद्धि विषयत्वात् तथेति यावत्। तदेवाह **"तत्वभावेन"**[4]।

**प्रशस्तपादभाष्यदिशा समवायनिरूपणम्**

**"अयुत् सिद्धानामाधार्याधारभूतानां यः सम्बन्धः इह प्रत्यय हेतुः सः समवायः।"**[5] इत्थं प्रकारेण समवायं लक्षितवन्तः सूत्रे **'कार्यकारणयोः'** इति प्रयुक्तम्। तत्स्थाने **आधार्याधारभूतानामिति** पदं प्रयुञ्जानाः एते सूत्रोक्तं सर्वसंग्राहकं न भवतीति मन्यन्ते। अकार्यकारणभूतानामपि जलपरमाणु तद्रूपादि जातिव्यक्तिविशेषतद्वदादीनां समवायस्य स्वीकारात्। सूत्रोक्तलक्षणे न्यूनतावरीवर्ति।

आधार्याधार भूतानामित्युक्ते च जातिव्यक्त्यादीनामप्याधाराधेयभावस्य सद्भावात् तयोरपि समवायसम्बन्धः इति सिद्ध्यति। इत्थं प्रकारेण लक्षणं निरूप्य- **"इह तन्तुषु पटः, इहद्रव्ये**

---

[1] वै0सू0 10/2/3
[2] वै0सू0 10/2/4
[3] तात्पर्यटीका, पृ0 210
[4] वै0सू0 7/2/28
[5] प्रशस्तपादभाष्य, पृ0 324

**गुणकर्मणी, इह द्रव्यगुणकर्मसु सत्ता, इह नित्य द्रव्ये अन्त्याविशेषा इति प्रत्यदर्शनात्''**[1] इत्युदाहरणादवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोः विशेषनित्य-जातिव्यक्त्योः द्रव्ययोश्च समवायसम्बन्धः इति भाष्यकाराभिप्रैति। अनेन च **'इह तन्तुषु घटः'** इत्यादि प्रत्ययाः सम्बन्धनिमित्तकाः इह प्रत्ययत्वात्। **इह कुण्डे दधी**ति प्रत्ययवदित्यनुमानं सद्भावे प्रमाणत्वेन प्रदर्शितम्।

**'इह तन्तुषुघट'** इति बुद्धिः संयोग विषयिण्येवास्ताम् किं समवायकल्पनेनेति शंका चतुर्भिःर्हेतुभिः समाहिता भाष्ये[2] तथाहि-

(1) संयोगोहि पृथक्स्थितद्रव्ययोर्भवति। अयन्तु अपृथक्स्थितयोः प्रतीयते, अतो न संयोगो भवितुमर्हति।

(2) संयोगः अन्यतरकर्मणा उभयकर्मणा संयोगेन वा हेतुना उत्पद्यते। तन्तु पटादीनां सम्बन्धे तु न तादृशं निमित्तमीक्षामहे। अतो निमित्ताभावान्न तन्तु पटादीनां संयोगसम्बन्धः।

(3) संयोगः विभागेन नश्यति। तन्तु पटादि सम्बन्धस्तु न तथा।

(4) संयोगः आधाराधेयभावं विना स्वतन्त्रतयाऽवस्थितयोरपि भवति। तन्तु पटादीनां सम्बन्धस्तु आधाराधेयभावेनावस्थितयोरेव दृश्यते। अतः संयोगविलक्षणः सम्बन्धः स्वीकर्तव्येति।

### समवायस्य एकत्वं नित्यत्वञ्च

एष समवायः एकः एव भवति न तु संयोगवत् नाना। तत्र कारणमुक्तं कणादसूत्रे **''तत्त्वं भावेन''**[3] इति। भाष्येच **''भाववल्लिङ्गाविशेषात्''**[4] इति। यथा सत्सदित्यनुगत प्रतीति-बलेन सत्ता एका तथा इहेति प्रत्ययस्यावयवावयवि गुणगुण्यादिषु सर्वत्र एकरूपत्वात् समवायः एकः इति सिद्ध्यति। एष आशयः भाष्य ग्रन्थस्य।

---

[1] प्रशस्तपादभाष्य, पृ0 324-325
[2] प्रशस्तपादभाष्य, पृ0सं0- 326-329
[3] वैशेषिकसूत्र- 7/2/28
[4] प्रशस्तपादभाष्य, पृ0सं0-326

ननु संयोगस्थले प्रतीतिरैकरूपैव वर्तते। न हि तावता संयोगस्यैकत्वं स्वीक्रियते इति मत्वा हेत्वन्तरमाह **''विशेषलिङ्गाभावाच्चेति''**[1]। संयोगस्यैव भेदेहि कारणभेदः प्रयोजकः समवायस्त्वकारण कत्वात् भेद हेत्वभावादेकः इत्याशयः। समवायस्य कारणं नास्ति, अतः समवायः एकः कारणाभावादेव नित्यश्च भवति।

**समवायो तादात्म्यसम्बन्धेन**

समवायः केन सम्बन्धेन वर्तते? यदि सम्बन्धान्तरेण, तदा तस्यापि सम्बन्धान्तरं पुनः तस्यापि सम्बन्धान्तरमित्येवं क्रमेणानवस्था प्रसजतीत्याक्षेपः। समवायस्य स्वरूपापरपर्यायं तादात्म्यमेव सम्बन्ध इत्येवं सर्वदोषपरिहारसम्भवात्। तथा चोक्तं भाष्ये- **''कया पुनर्वर्त्या द्रव्यादिषु समवायो वर्तते इति तादात्म्यात्।''**[2] अयञ्च समवायो न हि प्रत्यक्षवेद्य सन्निकर्षाभावात्। अपितु इह बुद्ध्यानुमेयः इति प्रशस्तपादभाष्यकृन्मतम्। विशेषणाख्य सन्निकर्षेणेन्द्रियवेद्यत्वमप्यस्तीति टीकाकारादीनां मतम्। विषयोऽयं सन्निकर्षविचारावसरे विवेचितो विद्यते।

**ब्रह्मसूत्रेषु समवायखण्डनप्रकारः तत्समाधानञ्च :-**

इत्थं प्रकारेण वैशेषिकैः साधितः समवायः ब्रह्मसूत्रेषु खण्डितः। तथाहि मतान्तर निराकरण परे तर्कपाद नामके द्वितीयाऽध्याय द्वितीयपादे वैशेषिकमतनिराकरणपरे अधिकरणे इदं सूत्रं- **''समवायाभ्युपगमाच्च साम्यादनवस्थितेः''**[3] इति। तस्य च शंकराचार्यैः एवं विवरणं कृतम्- द्वाभ्यां परमाणुभ्यामत्यन्तभिन्नं द्वयणुकं समवायात्मकसम्बन्धेन द्वयोः परमाण्वोः वर्तते। इत्येवं वैशेषिकाः अभ्युपगच्छन्ति। तथासति समवायात्मकः सम्बन्धोपि समवायिभ्य परमाणु द्वयणुकेभ्यो अत्यन्तं भिन्न इति समवायात्मकेनान्येनैव सम्बन्धेन तेभ्यः सम्बद्धनातीति वक्तव्यम्,

---
[1] प्रशस्तपादभाष्य, पृ०सं०- 326
[2] प्रशस्तपादभाष्य, पृ०सं०- 328
[3] ब्रह्मसूत्र- 2/2/13

अत्यन्तभेदसाम्यात्। तथा च तस्य-तस्य भिन्नः भिन्नः सम्बन्धः कल्पयितव्यः इत्यनवस्था प्रसज्येतेति।

अत्रेदं समाधानं- यदि हि समवायकल्पनं प्रति समवायिनोर्भेदः प्रयोजकत्वेन वैशेषिकैरभ्यधायिष्यते तदानीं एवं दूषणावसरमलप्स्यत। न हि एवं तैः अवादि। जाति व्यक्त्यादीनामपृथगवस्थितानां विशिष्टबुद्धिनिर्वाहकत्वस्य समवायाभ्युपगमे हेतुत्वेनोपन्यासः प्रशस्तपादाचार्यैः कृतम्। तस्मात् एतद्दूषणं नास्कन्दति वैशेषिकानिति।

**''यद्यपि अपरिग्रहाचात्यन्तमनपेक्षा''**[1] इति सूत्र व्याख्यानावसरे समवायाङ्गीकारे निमित्ततया उपन्यस्तमाधार्याधारयोः अयुतसिद्धत्वं दूषयामासुः भगवत्पादाः- तत्पुनरयुत-सिद्धत्वमपृथग्देशत्वं वा स्यादपृथक्कालत्वं वा अपृथक् स्वभावत्वं वा। अपृथग्देशत्वे तावत् स्वसिद्धान्तो निरुध्येत। नहि समवायिनोः तन्तु पटयोरपृथग्देशता अस्ति। पटस्य हि देशस्तन्तवः। तन्तूनान्तु तदवयवाः एवं पटतद्गुणभूत शुक्लादयोपि समवायिनोः अपृथग्देशता नास्ति। शुक्लस्य हि पटो देशः पटस्य च तन्तवः इति। अपृथक्कालत्वमयुतसिद्धत्वमिति द्वितीयः कल्पोपि न कल्प्यते। सव्य दक्षिणयोरपि गोविषाणयोरपृथक्कालयोरयुत्सिद्धत्व प्रसङ्गात्। अपृथग्स्वभावत्वमयुत्सिद्धत्वमिति स्वीकृतेसति अवयवावयविनो गुणगुणिनोश्च भेदो न सिद्ध्येत। अपृथगवयवावयवत्वं हि तादात्म्यं, नहि तादात्म्येसति भेदस्सम्भवतीति।

इत्थं प्रकारेण वेदान्तिभिः पक्षे उपस्थापिते तत्र इत्थं प्रकारेण समाधानं क्रियते- आचार्य विकल्पित प्रकारानन्तःपाति प्रकारेणैवायुत्सिद्धत्वस्य वैशेषिकैरभ्युपगमात्। तथा च भाष्यम्- **''सापुनर्द्वयोरन्यतरस्य वा पृथग्गतिमत्वमियन्तु नित्यानाम्। अनित्यानान्तु युतेष्वाश्रयेषु समवायोयुतसिद्धिः''**[2] इति। अनेन नित्ययोः सम्बद्धयोर्द्वयोपदार्थयोः पृथग्गतिमत्वमन्यतरस्य वा गतिमत्वं युतसिद्धिः। यथा द्वयोः परमाण्वोः संयोगिनोः पृथग्गतिमत्वम्। यथा वा परमाण्वाकाशयोः संयोगिनोर्मध्येऽन्यतरस्य परमाणोः पृथग्गतिमत्वं युतसिद्धिः।

---

[1] ब्रह्मसूत्र- 2/2/17

[2] प्रशस्तपादभाष्य, पृ0 152

अनित्ययोः पृथगाश्रयाश्रितत्वमेव युतसिद्धिर्यथा घटपटयोः। तथा चोक्तविध युतसिद्धय-भावो अयुतसिद्धिरिति पर्यवस्यति। अत्र च पृथगाश्रयाश्रयित्वमित्यनेन सम्बन्धिभ्यामन्यो यः आश्रयः तदाश्रितत्वं विवक्षितम्। तथा च पटशौकल्ययोः पृथग्गतिमत्वमपि नास्ति। पृथगाश्रयाश्रयित्वमपि नास्ति। यद्यपि पटस्याश्रयः तन्तवः, शौकल्यस्य पटः इत्येवमाश्रयभेदः वर्तते। तथापि शौकल्यस्याश्रयभूतः पटसम्बन्धी न तदन्यः इत्येवं सम्बन्धिभिन्नाश्रयाश्रितत्वं नास्ति। तथा च न कोपिदोषः इति। सम्बन्धिभिन्नाश्रयाश्रयित्वं युतसिद्धिः इत्यभिप्रायेणैव श्रीधराचार्याः- **''यत्र तु द्वयोरपिसम्बन्धिनोः परस्परपरिहारेण व्यतिरिक्ताश्रयाश्रयित्वं तत्र युतसिद्धिः''**[1] इत्यवोचत्। भामत्यामपि वैशेषिकमतानुवादावसरे- **''यदि तु संयोगिनोः कार्ययोः सम्बन्धिभ्यामन्यदेशत्वं युतसिद्धिः ततोऽन्या अयुतसिद्धिः इति।''**[2] तथा च शांकर्य्यभाष्योक्तदोषः उक्तरीत्याऽयुतसिद्धत्वपरिष्कारे न प्रसज्ञति। इति।

**भामत्युक्तदूषणानि तत्परिहारश्च**

भामत्यान्तु सम्बन्धिभिन्नदेशवत्वं कार्ययोः सम्बन्धिनोर्युतसिद्धिः। नित्ययोः सम्बन्धि-नोस्तु पृथग्गतिमत्वं युतसिद्धिः। उभयविधायापि युतसिद्धेः अवयवावयवि गुणगुण्यादिष्व-भावादयुतसिद्धत्वं तेषूपपद्यत इत्याक्षेपमनूद्य- **''नित्ययोरात्माकाशयोरजसंयोगे उभयस्मिन्नपि युतसिद्धेरभावात्''**[3] इति समाधानमुक्तम्। तस्यायमाशयः- नित्ययोर्विभुनोचात्माकाशयोः यः उत्पत्तिरहितः संयोगः तत्रापि अयुतसिद्धिर्भवति। निष्क्रिययोः निराश्रययोश्च आत्माकाशयोः पृथग्गतिमत्वरूपस्य पृथगाश्रयाश्रितत्वरूपस्य वा युतसिद्धत्वस्याभावात् तथा चायुतसिद्धयोः तयोः संयोगेपि समवायलक्षण सत्वादतिव्याप्तिरिति।

---

[1] न्यायकन्दली, पृ0 14
[2] भामती, पृ0 518
[3] भामती, पृ0 518

अत्रेदं समाधानम्। अयुतसिद्धयोराधार्याधारयोरिह प्रत्ययहेतुः सम्बन्धः समवायः इति हि लक्षणम्। आत्माकाशयोरुक्तरीत्या अयुतसिद्धयोरप्याधाराधेय विरहान्नातिव्याप्तिः। किञ्च विभुपदार्थयोः संयोगस्यैवानभ्युपगमान्नकोपि दोषः।

यत्तु भामत्यां-

**"न चाजसंयोगो नास्ति तस्यानुमान सिद्धत्वात् तथाहि आकाशात्मसंयोगि मूर्तद्रव्य संगित्वात् घटादिवदित्यनुमानात्"[1]।**

इत्यनेन ग्रन्थेन विभुद्वयसंयोगे अनुमानप्रमाणं प्रादर्श्य तत्-

**"यच्च अजसंयोगप्रतिपादकमनुमानमुक्त तदसाधनमुभयपक्षसिद्धत्वात्। यथेदं विभूनां संयोगं शास्ति तदा ताभ्यामेव हेतुदृष्टान्ताभ्यां विभागमपि। अस्तुद्वयोरप्यनुपपत्तिः, प्रमाणेन तथाभावप्रतीतेरिति चेन्न। संयोगविभागयोरेकस्य नित्यत्वे अन्यतरस्यासम्भवादिति द्वयोरप्यसिद्धिः परस्पर प्रतिबन्धात्।"[2]** इति ग्रन्थेन सयुक्तिकं दूषितं न्यायकन्दल्याम्।

तत्रैव शांकरभाष्ये युतसिद्धयोः संयोगसम्बन्धः अयुतसिद्धयोश्च समवाय इत्यभ्युपगमो न संगच्छते। कार्यात् पूर्वमेवकारणस्य वर्तमानतया पृथग्सिद्धस्य तस्यायुत-सिद्धत्वानुपपत्तेः। न च कारणस्य कार्यात् पृथगवस्थानेपि कार्यस्य कारणापेक्षया पृथगवस्थितिः नास्ति। अवयवरूपकारणविनाभावेनावयविरूपकार्यस्य स्थितेरभावदिति वाच्यम्। एवमपि प्रागसिद्धस्य कार्यस्य कारणेन सः सम्बन्धाभावात्। सम्बन्धिद्वयाधीन सद्भावो हि सम्बन्धो नासत्येकस्मिन्नपि सम्बन्धिनि भवितुमर्हति। कार्यमुत्पन्नं सत्कारणेन समवायमृच्छतीति यदि कथ्यते तदा द्वयोरपि कार्यकारणयोर्युतसिद्धिरभ्युपेतास्यादित्ययुतसिद्धत्वोक्ति विरोधः इति दूषणमभ्यधायि।

---

[1] भामती, पृ0 518
[2] न्यायकन्दली, पृ0 150

तत्र ब्रूमः, अयुतसिद्धत्वं यद्य पृथक्स्थितिमत्वरूपं तदानीं एते दोषाः प्रसजन्तीति सत्यम्। परन्तु पृथगाश्रयाश्रयित्वाभावः पृथग्गतिमत्वाभावो वा अयुतसिद्धत्वमिति पूर्वं परिष्कृतत्वाद् तद्रीत्या नैतेदोषाः क्षतिमावहन्तीति।

भामत्यान्तूक्तरीतिमत्परिष्कारादरे शांकरभाष्योक्तदोषाः न प्रसजन्तीत्यभ्युपेत्य समवायसिद्धौ दूषणान्तरमुपन्यस्तम्-

**''पृथगाश्रयाश्रयित्व पृथग्गतिमत्त्वलक्षणयुतसिद्धेरन्यात्वयुतसिद्धिर्यद्यपि नाभ्युपेत विरोधमावहति तथापि न सामानाधिकरण्य प्रथमुमपादयितुमर्हति''**[1] इत्यादिना।

गुणगुणिनादि समवायसम्बन्धः इत्यभ्युपगम्यते तदा घटपटौ संयुक्तावितिवत् गुणगुणिनोः सम्बद्धाविति प्रत्ययस्यान्नतु 'शुक्लः पटः' इत्यादि गुणगुणिनोस्तादात्म्यविषयकः प्रत्ययोभवेत्। गुणगुणिनोः तादात्म्यविषयकप्रत्ययोपपादनाय हि समवायोभ्युपेयते भवद्भिः। स चेदमभ्युपेतोपि यदि तादात्म्यप्रत्ययं न घटयेत अलं समवाय कल्पनया। न च शुक्लः पटः इत्यादि प्रत्ययस्य यो अभेदस्तदुपपादकः समवायः इति नास्माकं सिद्धान्तः अपितु तादृश प्रत्ययविषयमेव समवायः इत्यभ्युपगमोस्माकमिति वाच्यम्।

अभेदातिरिक्तस्य सम्बन्धस्य सामानाधिकरण्य प्रत्ययविषयत्वासम्भवात्। गुणगुणिनोः समवायं विषयीकुर्वद्धि प्रत्यक्षं 'पटे शुक्लः' इत्याकारकमेव स्यात् न तु पदः शुक्लः इत्याकारकम्। न च शुक्लपदस्य गुणविशिष्ट गुणि लाक्षणिकत्वान्नैष दोषः इति वाच्यम्। शाब्दस्य प्रत्ययस्य कथञ्चिल्लक्षणयोपपादन सम्भवेपि प्रत्यक्षरूपस्य शुक्लः पटः इत्याकारक प्रत्ययस्य लाक्षणिकत्वासम्भवात्। न हि प्रत्यक्षं शब्दवृत्तिमनुसरति। तथा च समवायाङ्गीकारे तादात्म्य प्रतीतेरसम्भवात्। न गुणगुणिनोः समवायसम्बन्धः अपितु स्वरूपमेव। शुक्लः पटः

---

[1] भामती, पृ0सं0- 518

इत्यादि प्रत्यक्षानुसारेण च गुणगुणिनो प्रभेदोपि स्वीकर्तव्यः इत्येवं रीत्या भामती ग्रन्थे दूषणानि प्रदर्शितानि विद्यन्ते।

**भामत्युक्तदूषणानां न्यायदिशापरिहारः**

इदानीं समवायाभ्युपगमे भामत्यां बहूनि दूषणानि प्रदर्शितानि। तेषां समाधानं न्यायदृष्ट्या इदानीं क्रियते। यदि गुणगुणिनोरभेदः स्यात् तदा शुक्लः इति ज्ञानेनैव पटस्यापि विषयीकृतत्वात् पट इति बुद्धिरनवसरा स्यात्। किञ्च शुक्लशब्द पटशब्दयोरेकार्थतया पर्यायत्वेन तरुवृक्ष शब्दवत् सहप्रयोगो न स्यात्। पटमानयेत्युक्ते यत्किञ्चिच्वछुक्लमानयेत् पदस्य शुक्लाभिन्नत्वात्। तथा अशुक्लः पटः इत्याकारिका प्रतीतिरपि न स्यात्। शुक्लाभिन्ने पटे शुक्लभेदस्य बाधितत्वात्।

एवमन्धस्य पुरुषस्य त्वगिन्द्रियेण पटोयमिति ज्ञानं यथा भवति तथैव शुक्लोयमित्यपि ज्ञानं स्यात्। अथवा अन्धस्य शुक्लज्ञानं यथा न भवति तथैव पटज्ञानमपि स्यात् अतः युक्तिविरूद्धत्वात् शुक्ल पटयोरभेदो नोपपद्यते इति युक्तिसहकारेण शुक्लः पटः इति प्रत्यक्षं पटशुक्लयोर्भेद मेव ज्ञापयतीति। सर्वमेतन्मनसि निधाय तात्पर्यटीकायां-[1]

**" 'शुक्लः पटः' इत्यादि सामानाधिकरण्यमज्ञानं न तु सम्बन्धिज्ञानमिति चेन्न। द्वितीयबुद्धि व्यपदेशयोः पौनरुक्त्यात्। अपौनरुक्त्यं चाभिमन्यन्ते प्रतिपत्तारः यदन्यतरदुपभ्यान्यतरत् बुभुत्सते।"**

इति प्रत्यपादयन्। मणिकाराऽपि समवायवादे एवमेव प्रत्यपादयन्।

ननु यदि गुणगुणिनोर्भेदोऽभिमतः तदा कुण्डेदधीतिवत् पटेशुक्लः इति भेदेनैव प्रतीतिः स्यात्, न तु पटः शुक्लः इत्यभेदेनेति शंकायाः किं समाधान नेतावतोक्तं भवतीति चेन्न। गुणगुणिनो भेदेप्युतसिद्ध्यभ्युपगमात् भेदः स्पष्टं न प्रतीयते। कुण्डदधनोस्तु युतसिद्धत्वात् भेदः स्पष्टत्वेन प्रतीयते इति समाधानस्यात्राभिप्रेतत्वात्।

---

[1] तात्पर्यटीका, पृ० 210

उक्तञ्च तत्रैव टीकायां-[1] **''अयुतसिद्ध्यातु कुण्डे दधीतिवन्न स्फुटतरो विवेकप्रकाशः''** इति। तथा चैवं फलति। शुक्लः पटः इति प्रात्यक्षिकी प्रतीतिः। गुणगुणिनोः समवायं विषयीकरोति। शाब्दी-प्रतीतिस्तु शुक्लपदस्य गुणिनि लक्षणया गुण्यभेदं विषयीकरोति। यद्वा प्रत्यक्षमभेदा-रोपरूपमिति। तथा च परिशुद्धिः-[2]

**''तर्क सहायं प्रत्यक्षमेव पटशुक्लत्वयोर्भेदमाकलयति''** इति। **''तस्मान्नीलो घट इत्यत्र नीलसम्बन्ध एव भासते। मतुपोलोपादभेदोपपाराद्वा।''**[3] इति मणिग्रन्थोप्यत्रा-नुसन्धेयः।

**परिमलाभिमत समवायदूषणम्**

अप्पयदीक्षिताः कल्पतरुपरिमले समवायमित्थं प्रकारेण दूषयन्त्यभावस्य यथा प्रतियोग्यनुयोगिभ्यां सः स्वरूपसम्बन्धः तथा अवयवावयव्यादीनामपि स्वरूपसम्बन्ध एवास्तु। किं समवायेन? न चावयवावयव्यादि स्वरूपाणामनन्तत्वात्तेषां सम्बन्धत्व कल्पनापेक्षया एकस्य समवायसंज्ञकस्य सम्बन्धस्य कल्पनमेव लाघवात् युक्ति संगतमिति वाच्यम्। एकस्य वा अनेकेषां वा कल्पनीयत्वे सति हि लाघवादेकस्य कल्पनमिति शक्यते शंकितुम्। इह तु अनेकेषामपि सम्बन्धिस्वरूपाणां क्लृप्तत्वात् तेषु सम्बन्धत्वमात्रं कल्पनीयमिति लाघवं भवति। समवायवादे तु समवायस्तस्य सम्बन्धत्वञ्चेत्युभयमपि कल्पनीयमिति गौरवात्।

न च समवायपक्षे समवायास्तस्य सम्बन्धत्वञ्चेति द्वयमेव कल्पनीयम्। अवयवाव-यव्यादिषु सम्बन्धत्वकल्पने तेषामननुगतत्वेन क्रोडीतारकाभावात् सम्बन्धिभेदेनानन्तानि सम्बन्धत्वानि कल्पनीयानीति गौरवम्। तस्मात् समवायपक्षे एव लाघवमिति वाच्यम्।

समवायेपि निरूपकभेदेन सम्बन्धत्वभेदोऽङ्गीक्रियते नवा? यद्यङ्गी क्रियते तदा समवाय मतेपि तन्निरूपकभेदप्रयुक्तनानासम्बन्धत्वकल्पनयाऽवश्यं भावात् समवायाख्यधर्मिकल्पना प्रयुक्त

---

1 तात्पर्यटीका, पृ० 210
2 ता०टी०, प०शु०, पृ० 244
3 तत्वचिन्तामणि, समवायवादः, पृ० 680

गौरवमधिकम्। यदि नाङ्गीक्रियते तदाऽवयवादिषु तत्तदभावसम्बन्धत्वस्य स्वीकृतस्यैवावयव्यादिसम्बन्धरूपतयाऽपि सम्भवेन सम्बन्धत्वस्यैकस्याप्यकल्पनेन गौरवाभावादिति।

**परिमलमत निराकरणम्**

अस्येत्थं समाधानं विधीयते- भूतलं घटाभाववदित्यादौ स्वरूपसम्बन्धस्थले सम्बन्धिनोर्मध्ये नैकस्य सम्बन्धत्वं विनिगमना विरहात्। किन्तु तदुभयसमुदायस्य परस्पर प्रतियोगिकमेकमेवसम्बन्धत्वं स्वीक्रियते। एवञ्चाभावाधिकरणादिस्वरूपद्वये सम्बन्धत्वस्य क्लृप्तत्वेपि अवयवावयव्यादिस्वरूपद्वये तन्न क्लृप्तम्। तथा च सम्बन्धत्वस्यापि कल्पनीयत्वात् गौरवम्।

वस्तुतस्त्वेवमप्यक्लृप्तयोः समवाय तद्गतसम्बन्धत्वयोः कल्पनापेक्षया एकस्यावयवावयव्यादि स्वरूपद्वयगतस्य सम्बन्धत्वस्य कल्पने लाघवमिति शंकावसरं लभते। अतः प्रकारान्तरेण समाधातुं प्रयत्नं कुर्मः। अस्ति तावदयं घटोयं पटः इति समूहालम्बनज्ञानादिमे घटाः इतिज्ञानस्य प्रत्यक्षरूपस्य शाब्दरूपस्य वा वैलक्षण्यमानुभविकम्, तदपलापः न हि कर्तुं शक्यते। तच्च समूहालम्बने विशेष्यताभेदेन प्रकारतानां भेदः नत्विमे घटाः इति ज्ञाने एवं स्वीकारेणैव निर्वाह सम्भवात्।

ततश्च तस्मिन्ज्ञाने नानाविशेष्यतानिरूपिता एकैव प्रकारता। तन्निरूपिता च संसर्गता समवाय स्वीकर्तृभिरेव स्वीकार्या। स्वरूपसम्बन्धवादिभिस्तु तत्तद्व्यक्ति स्वरूपात्मक भेदाभिन्नाः एव संसर्गताः स्वीकरणीया भवन्तीति सुस्पष्टमेवेदं गौरवम्। एवं नीलाः पीताः इत्यादिष्वपि बोध्यम्। इत्थंरीत्याऽनन्तेषु भूतलादिरूपेषु रूपादिप्रतियोगिकत्व कल्पनापेक्षया एकस्मिन् समवाये तत्कल्पनायान्तु लाघवमक्षतमेववृत्ति।

मणिकारास्तु यदि विशिष्टबुद्धेर्विशेषणविशेष्यसम्बन्धविषयकत्वं भवतीति नियममभ्युपेत्यविशिष्टबुद्धिविशेषणविशेष्यसम्बन्धविषयारित्यनुमानेन समवायः साध्येत तदा तादृश विशिष्टबुद्धि निरूपितायाः संसर्गताख्य विषयतायाः समवाये स्वीकरणीयतया तस्याश्च

निरूपकभेदेन भेदात् तत्कल्पनं समवायाख्यधर्मिकल्पनञ्चेत्यादयो दोषाः प्रशक्ताः भवेयुः। अतः गुणक्रियादि विशिष्टबुद्धिः विशेषणसम्बन्धः निमित्तिका इत्येवानुमानं कल्पनीयम्। कारणत्वेन साध्यमानश्च सम्बन्धः लाघवादेक एव सिद्ध्यति। न च धर्मिकल्पनातो वरं धर्मकल्पना इति न्यायात् कारणत्वमपि क्लृप्तानामेव गुणादिष्वरूपाणामस्त्विति वाच्यम्। अनुगतकार्यस्यानुगत-कारणनियम्यत्वात् गुणादिस्वरूपाणाञ्चाननुगतत्वादित्याशेरते। अतएव **''इहेदमिति यतः कार्यकारणयोः स समवायः''**[1] इति वैशेषिकसूत्रमपि विशिष्टबुद्धि हेतुत्वेन समवाय-सिद्धमभिप्रैति। यतः सः इति पदस्वारस्यात्। ततश्च कारणत्वेन समवाये सिद्धे निरूपकभेदेन नानासम्बन्धत्वकल्पना प्रयुक्त गौरवमपि फलमुखत्वान्नक्षतिमावहतीति मणिकृतामाशयः इति।

### अप्पयदीक्षिताभिमत समवायखण्डनम्

अप्पयदीक्षितास्तु पूर्वप्रदर्शित दिशामणिकारैः प्रदर्शितां विशिष्टबुद्धिकारणत्वेन समवायसिद्धिमपि नाभ्युपगच्छन्ति। तथाहि अवयवादि विशिष्टबुद्धीनां स्वयमननुगतत्वेना-नुगतकारणसापेक्षत्वं नापेक्ष्यते। अनुगतकार्यं हि अनुगतकारणमपेक्षते नाननुगतं कार्यम्। न च विशिष्टबुद्धित्वेन तासामनुगमः क्रियतेऽति वाच्यम्। अनुगतकारणापेक्षारहितासु दण्डिपुरुषः, घटस्यज्ञानं, घटस्याभावः इत्यादिषु द्रव्यविषयप्रतियोग्यादि विशिष्टबुद्धिष्वपि विशिष्टबुद्धित्वस्य विद्यमानत्वेन तस्यातिप्रसक्तत्वात्।

न च स्फुटतर विवेकरहित सम्बन्धिद्वयविषयकविशिष्टबुद्धित्वेन तासामनुगमः, दण्ड पुरुषादिद्वय, सम्बन्धिद्वयं हि स्फुटतर भेदं न तु गुणगुण्यादि सम्बन्धिद्वयमिति नोक्तदोषः इति वाच्यम्। तर्हि स्फुटतरविवेकरहितत्वेन समवायकल्पनया इति चोद्येश्य प्रसंगात्। किञ्चाभावा-धिकरणयोरपि स्फुटतरविवेकाभावेन स्फुटतरविवेकरहितसम्बन्धिद्वयगोचरविशिष्टबुद्धित्वमभावा-धिकरणयोः विशिष्टबुद्धावप्यस्तीति तत्रानुगतकारणजन्यत्वाभावात् व्यभिचारो दुरूद्धर इति।

---

[1] वैशेषिकसूत्र- 7/2/26

## दीक्षितमतखण्डनम्

अत्रोच्यते निर्विषयको यो भावस्तद्विशेषणकविशिष्टबुद्धित्वेन गुणक्रियादिविशिष्ट-बुद्धीनामनुगमे दोषाभावात्। अभावविशेषणकविशिष्टबुद्धौ भावविशेषणकत्वाभावात् ज्ञातो घटः इत्याकारिकायां ज्ञानविशेषणकबुद्धौ निर्विषयकभावविशेषकत्वाभावात्। विशेषणस्य ज्ञानस्य स विषयकत्वात्। अतः अप्पयदीक्षितोक्त दोषः न प्रसजतीति।

यद्यपि **'भूतले घटाभावः'** इत्यभावविशेष्यके घटस्य ज्ञानमिति ज्ञानविशेष्यके च ज्ञाने अनुगतसम्बन्धाजन्ये निर्विषयकभाव विशेषणकबुद्धित्वमस्तीति व्यभिचारशंकाऽस्मिन्नपि परिष्कारे भवत्येव। तथापि निर्विषयकभावमात्रविषयकलौकिकप्रत्यक्षत्वमत्र विशिष्टबुद्धित्वं विवक्षितम्।

प्रथम सत्यन्तेनज्ञानविषयकविशिष्टबुद्धेर्व्युदासः। **'इदानीमाकाशे वीणायां शब्दः'** इत्यादि बुद्धिव्यवच्छेदाय लौकिकेतिविशेषणम्, अतो न दोषः।

## श्रीभाष्याभिमत समवायदूषणप्रकारः

श्री रामानुजविरचिते श्रीभाष्ये अपृथक्स्थित्युपलब्धीनां जात्यादीनां तथा भावस्य निर्वाहकत्वेन चेत् समवायोभ्युपगम्यते। समवायस्या तत्साम्यात् तथाभावहेतुरन्वेषणीयः तस्यापि तथेत्यनवस्थितिः। समवायस्य तदपृथक्सिद्धत्वं स्वभावः इति चेत् जातिगुणानभिवैष स्वभावः परिकल्पनीयः। न पुनरदृष्टचरं समवायमभ्युपगम्य तस्यैषस्स्वभाव इति परिकल्पयितुं युक्तमिति। समवाय दूषणं प्रदर्शितम्। **''धर्मिकल्पनातो वरं धर्मकल्पना''** इति न्यायः श्रीभाष्यकृतामभिप्रेतः। तत्र यत्समाधानं वक्तव्यं तत्पूर्वमेवोक्तमिति नात्र पुनरुक्तिं कामयामहे। तत्वमुक्ताकलापे वेदान्तदर्शिकाः-[1]

**बन्धं नाध्यक्षयामः समधिकमपृथक् सिद्धयोस्तत्स्वरूपात्**
**कल्पेतस्यातिरिक्ते तदुपरि च तथेत्यप्रकम्प्यानवस्था।**
**ताभ्यामेष स्वभावाद् घटित इति कृता भक्तिरस्त्वेतयोस्ते**
**नोचेज्ज्ञानादिकानां विषयविषयितात्द्यापतेदन्यदेवम्।।**

---

[1] तत्वमुक्ताकलप- अद्रव्यसर- श्लोक 126

इति श्लोकेन समवायं दूषयामासुः। तत्र आद्यैस्त्रिभिः पादैः पूर्वोदाहृत श्रीभाष्योक्त दूषणमेव प्रतिपादितम्। चतुर्थे ज्ञानादीत्यादि पदेनाभावस्य विषयविषयितादीत्यादि पदेन वैशिष्ट्यस्य च परिग्रहः। विशिष्टव्यवहारानुपपत्या चेत् समवायः कल्प्यते 'ज्ञातो घट' इति विशिष्टव्यवहारनिर्वाहाय विषयविषयिभावलक्षणः सम्बन्धः।

घटाभाववद्भूतलमित्यत्र च विशिष्टव्यवहारसम्पादनाय वैशिष्ट्यरूपः सम्बन्धोपि सिद्ध्येत इति चतुर्थ पदार्थः।

आधार्याधारयोरयुतसिद्धयोः विशिष्टव्यवहारनिर्वाहायैव वैशेषिकाः समवायमभ्युपगच्छन्ति। ज्ञान घटयोराधाराधेयभावस्यायुतसिद्धत्वस्य चाभावात्। विषयविषयीभावः न प्रतिद्वन्द्वी सम्भवति। वैशिष्ट्यविषये परस्ताद्विस्तरेण वक्ष्यामः। अतः तत्वमुक्ताकलापोक्तं दूषणमपि नावकाशं लभते।

**शास्त्रदीपिकोक्तदूषणस्य निराकरणम्**

पार्थसारथिमिश्राः तर्कपादे[1] **"अयुतसिद्धानामिह प्रत्ययहेतु सम्बन्धः इति केचित्"**। इति वैशेषिकमतमनूद्य[2] **"कापुनर्युतसिद्धिः। पृथगगतिमत्वं पृगाश्रयाश्रयित्वं वा। तदभावोऽयुतसिद्धिः। यद्येवमवयवावयविनोः सम्बन्धः समवायो न स्यात्। विनाप्यवयवि चलनेनावयवानां चलनात्, अवयविनोऽवयवानाञ्च स्वावयवाश्रि-तत्वादस्ति पृथगाश्रयाश्रितत्वमितिसमवायानुपपत्तिः"** इति लक्षणघटकायुतसिद्धत्व विकल्पेन समवायं दूषयामासुः।

परन्तु नित्यानां पृथग्गतिमत्वं युतसिद्धिः। अनित्यानां सम्बन्धिभिन्नाश्रयाश्रयित्वं युतसिद्धिरिति पूर्वं परिष्कृतत्वात्तद्रीत्या शास्त्रदीपिकोक्तदूषणं न लगतीति सुधिभिरा-कलनीयम्।

---

[1] शास्त्रदीपिका, पृ0 100
[2] शास्त्रदीपिका, पृ0 100

**मणिकारनिर्दिष्टा समवायसाधनप्रकाराः**

तत्वचिन्तामणि ग्रन्थे गंगेशोपाध्यायाः चतुर्भिरनुमानैः समवायस्यातिरिक्तपदार्थत्वं नित्यत्वञ्च साधितवन्तः। द्वैतमताचार्याः व्यासतीर्थाः तर्कताण्डवग्रन्थे तान्यनुमानानि दूषणमासुः। अतः एकैकमप्यमनुमानमादौ मणिग्रन्थानुसारेण अनूद्य ततः तत्र तर्कताण्डवोक्तानि दूषणानि प्रदर्श्य तेषां यथाशक्ति प्रतिविधानाय इदानीं यत्नक्रियते।

**प्रथमानुमानम्**

**गुणक्रियाजातिविशिष्टबुद्धयः विशेषणसम्बन्धविषयाः विशिष्टबुद्धित्वात् दण्डीति विशिष्टबुद्धिवदिति** प्रथमानुमानम्। यथा **दण्डी पुरुषः** इति विशिष्टबुद्धिः विशेषणस्य दण्डस्य संयोगाख्यं सम्बन्धं विषयी करोति तथैव शुक्लः घटः इत्यादिबुद्धिरपि विशेषणस्य शुक्लादेः सम्बन्धं विषयी करोतीति वक्तव्यं स एव समवायः।

न चाभावविशिष्टबुद्धौ यथा स्वरूपसम्बन्धः विषयः तथैव स्वरूपसम्बन्ध एव विषयः अस्तु। तथा चार्थान्तरमिति वाच्यम्। यतो गुणक्रियादि विशिष्टबुद्धीनां पक्षधर्मताबलेन विषयः सम्बन्धः सिद्ध्यल्लाघवादेक एव सिद्ध्यति स एव समवायाख्यः न तु स्वरूपम्। तत्तत्स्वरूपाणमानन्त्यात्। नापिसिद्धसाधनम्। एतदनुमान प्रवृत्तेः पूर्वं गुणादि-स्वरूपाणां सम्बन्धत्वेनाक्लृप्तत्वात्। यद्यपि रूपे रसाभावः इत्यादि प्रतीत्या गुणस्वरूपस्यापि सम्बन्धत्वं पूर्वं क्लृप्तम्। तथापि गुण तद्गताभावात्मकसम्बन्धिद्वयस्वरूपस्य क्लृप्तत्वेपि गुणगुण्यात्मक-सम्बन्धिद्वयस्वरूपस्य सम्बन्धत्वमक्लृप्तमिति तदेवात्र साधनीयं स्यात्। तत्र च गौरवाल्लाघवसहकृत परामर्शादिकः समवायः संसर्गः अनेनानुमानेन सिद्ध्यतीति मणिकृतामभिप्रायः।

## तर्कताण्डवप्रदर्शितमेतदनुमानदूषणम्

अत्राहुः तार्कताण्डवकाराः[1]- समवायस्वरूपस्य तद्गतसम्बन्धत्वस्य च कल्पनादपि धर्मिकल्पनातः वरं धर्मकल्पनमिति न्यायेन सिद्धानां गुणादिस्वरूपाणां सम्बन्धत्वरूप धर्ममात्रस्य कल्पने लाघवात् मणिकारोक्तं प्रथमानुमानं न युज्यते इति।

## तत्खण्डनम्

अत्रोच्यते सम्बन्धस्य सप्रतियोगिकत्वं सानुयोगिकत्वञ्चानुभवसिद्धम्। तत्र स्वरूपमेव सम्बन्धः इति पक्षे अनेकेषु भूतलादि स्वरूपेषु रूपप्रतियोगिकत्वादेः कल्पनापेक्षया एकस्मिन् समवाये तत्कल्पनाया एव युक्तत्वात्। शेषं कल्पतर परिमल पर्यालोचनावसरोक्तरीत्याऽवसेयम्।

किञ्च ईश्वरानुमानेपि क्लृप्तेषु जीवेष्वेव सर्वज्ञत्वादि धर्मकल्पनमस्तु कृतमीश्वराख्य धर्मिकल्पनयेत्याक्षेपे यथा आदौ धर्मिकल्पनं तदनन्तरं धर्मकल्पनमिति यदि स्यात् तदा एवं आक्षेप्तुं शक्यते। धर्मिकल्पनबेलायामेव तु लाघवसहकृतात् प्रमाणादनेकधर्मविशिष्ट धर्मिसिद्धेर्न पृथग्धर्मकल्पना। अतो न दोषः इति समाधीयते, तथा साधक सहकृतेनानुमानेन सम्बन्धत्वविशिष्टसमवायसिद्धेर्नोक्तदोष इति शिखामणिकाराः[2] प्राहुः।

## मणिग्रन्थप्रदर्शितं द्वितीयानुमानम्

**'गुणक्रियाविशिष्टबुद्धिः विशेषणसम्बन्धनिमित्तिका सत्यविशिष्टबुद्धित्वादिति'** द्वितीयानुमानम्। यथा **दण्डी पुरुषः** इति विशिष्टबुद्धिः विशेषणीभूत दण्डसंयोगं निमित्तीकृत्य जायते एवं 'तन्तुषु पटः' इत्यादि विशिष्टबुद्धेरपि विशेषणीभूतपटादि सम्बन्धजन्यत्वमावश्यकम्। स एव समवाय इति समवायसिद्धिहेतौ सत्यपदोपादानात् भ्रमे न व्यभिचारः। अत्र विशिष्टबुद्धिकारणत्वेन सिद्ध्यन् समवायः क्षित्यादावीश्वर इव लाघवादेकः सिद्ध्यति।

---
[1] तर्कताण्डव, पृ0 455
[2] न्यायशिखामणि, पृ0 669

अनुगतकार्यस्यानुगतकारणजन्यत्वान्नचात्राप्रयोजकत्वमाशंकनीयम्। विशिष्टबुद्धेः सम्बन्धाजन्यत्वे गवाष्वादावपि विशिष्टबुद्ध्यापत्तेः।

## तर्कताण्डवानुसारमस्यानुमाने दूषणम्

अत्राहुस्ताण्डवकाराः- सम्बन्धनिमित्तिका इत्यत्र सम्बन्धस्य निमित्तत्त्वं किं विषयत्वेन, उत समवायत्वेन। आद्ये गुणादिस्वरूपाणामेव स्वरूपसम्बन्धत्वेनानुगृहीतां विशिष्टबुद्ध्याख्यानुगत कार्यहेतुत्वमस्तु किं समवायेन। द्वितीये समवायत्वं नित्यसम्बन्धत्वम्। तत्र च लाघवेन सम्बन्धत्वेनैव हेतुत्वमस्तु। तच्च स्वरूपसम्बन्धसाधारणमिति तेनानुगतानां गुणादीनामेव हेतुत्वं भवति। तथा चार्थान्तरं सिद्धसाधनञ्चेति।

## एतन्मत खण्डनम्

अत्र ब्रूमः। स्वरूपसम्बन्धत्वस्य तत्तद्व्यक्तिमात्रविश्रान्तस्यानुगतत्वाभावेन कथं तस्यानुगतत्व वाचो युक्तिर्घटत इति न जानीमः। यच्च सम्बन्धत्वेनैव हेतुत्वमस्त्वित्यापादितं, तत्रापि विमर्शनीयम्। स्फुटतरविवेकप्रकाशरहितसम्बन्धिद्वयगोचरविशिष्टबुद्धित्वं हि अत्र कार्यतावच्छेदकं तथा च तदवच्छिन्नकार्यतानिरूपितकारणताशून्ये संयोगादावपि विद्यमानस्य, अत एवाति प्रसक्तस्य सम्बन्धत्वस्य कारणावच्छेदकत्वं कथं वाऽपाद्यत इति।

तथा च नित्यसम्बन्धत्वात्मक समवायत्वेनैव हेतुत्वमिति। तस्य च गुणादिस्वरूप साधारणत्वाभावेन न स्वरूपसम्बन्धमादायार्थान्तरावकाशः इति।

## मणिकार प्रदर्शितं तृतीयानुमानम्

**"गुणक्रियादिविशिष्टबुद्धिः सम्बन्धिभिन्नविशेषणसम्बन्धविषया निर्विषयक-भावविशेषणक विशिष्टबुद्धित्वात्, इतर निरूपणानिरूप्यविशेषणकविशिष्टबुद्धित्वाद्वा इति नव्यास्तु"**[1] इत्यादिना मणौ तृतीयमनुमानमनूदितम्।

सम्बन्धिभिन्नो यो विशेषणस्य सम्बन्धः तद्विषयकत्वमत्र साध्यम्। सम्बन्धिभिन्नेति विशेषणान्न स्वरूपसम्बन्धमादायार्थान्तरस्यावकाशः। हेतौ निर्विकल्पके व्यभिचारवारणाय विशिष्टेति विशेषणम्। घटाभाववद्भूतलमिति विशिष्टबुद्धौ स्वरूपसम्बन्धविषयिण्यां सम्बन्धि-भिन्नसम्बन्धविषयकत्वरूपसाध्याभावात् विशिष्टबुद्धित्वरूपहेतु सद्भावाच्च व्यभिचारः स्यादिति तद्वारणाय भावविशेषणकेति बुद्धिर्विशेषणम्। घटाभाववद्भूतलमितिबुद्धौ अभावविशेषणकत्वमेव न भावविशेषणकत्वमिति न व्यभिचारः। 'ज्ञातो घट' इति बुद्धौ ज्ञानरूपभाव विशेषणकबुद्धित्वरूपहेतु सद्भावात्स्वरूपानतिरिक्तविषयतात्मकसम्बन्धविषयिण्यां तस्यां सम्बन्धिभिन्नसम्बन्धविषयकत्वरूप साध्याभावाच्च व्यभिचारस्यादिति तद्वारणाय हेतु घटकाभावे निर्विषयकेति विशेषणम्। विशेषणस्य ज्ञानस्य सविषयकत्वान्न दोषः।

नन्वेवमपि 'भूतले घटाभावः' इत्यभावविशेष्यते घटस्यज्ञानमिति ज्ञानविशेष्यके च ज्ञाने व्यभिचारः इति चेन्न। निर्विषयकभावमात्र विषयकबुद्धित्वस्य विवक्षितत्वात् तत्वञ्च सविषयकभावविषयकत्वेसति अभावविषयकत्वमतो न कोऽपि दोषः।

एवमपि 'रूपसमवायवान घटः' इति विशिष्टबुद्धौ उक्त हेतु सद्भावात् स्वरूपसम्बन्ध विषयिण्यां तस्यां सम्बन्धिभिन्नसम्बन्धविषयकत्वरूपसाध्याभावाच्च व्यभिचारस्यादिति पर्यालोच्येतरनिरूपणेऽत्यादि द्वितीया हेत्वनुधावनम्। इतरनिरूपणेन निरूप्यं यद्विशेषणं विशेष्यञ्च तद्विषयकबुद्धित्वादिति तदर्थः। समवायस्य प्रतियोग्यनुयोगि निरूप्यत्वेन न तद्विशेषणकबुद्धौ व्यभिचारः। ज्ञानस्यापिविषय निरूप्यत्वान्न तद्विशेषणकबुद्धौ व्यभिचारः। ज्ञानस्यापि-

---

[1] तत्वचिन्तामणि, पृ0सं0- 449-450

विषयनिरूप्यत्वान्न तद्विशेषणकबुद्धौ व्यभिचारः। अभावस्यापि प्रतियोगि निरूप्यत्वान्न तद्बुद्धौ व्यभिचारः इति मणिकृतामाशयः।

## तर्कताण्डवे एतदनुमान दूषणम्

अत्राहुः तर्कताण्डवकाराः **''उक्त हेतुद्वयस्यापि काले घटरूपमिदानीं आकाशे वीणायां शब्दः''**[1] इत्यादि प्रतीतौ व्यभिचारः। 'कालेघटरूपं' इति प्रतीतौ घटरूपे कालिकविशेषणतासम्बन्धेन कालोविशेषणम्। इदानीं आकाशे वीणायां शब्दः इति प्रतीतौ कालः कालिकविशेषणतासम्बन्धेन, वीणाऽवच्छेदकतासम्बन्धेन शब्दे विशेषणम्। कालिकविशेषणताऽवच्छेदकता च स्वरूपसम्बन्धान्नातिरिच्येते। तथा च सम्बन्धिभिन्नसम्बन्धविषयकत्वाभावादुक्तं प्रतीत्योर्हेतुद्वयस्यापि सत्वात् व्यभिचारः इति।

## प्रकाशे एतन्मतनिराकरणम्

अत्र मणिप्रकाशकृतः- निर्विषयकभावमात्रविषयकलौकिकप्रत्यक्षत्वस्य विवक्षितत्वान्नोक्तदोषः। न च सुरभिचन्दनमिति विशिष्टबुद्धौ लौकिकप्रत्यक्षत्वाभावात् भागासिद्धिरिति वाच्यम्। अलौकिकान्यविशिष्टबुद्धेरेव पक्षत्वाभ्युपगमात्।

न चैवं निर्विषयकत्वविशेषणं व्यर्थम्। ज्ञातो घटः इत्यादि ज्ञानविशेषणकबुद्धौ ज्ञानांशे अलौकिकत्वेनलौकिकत्वाभावादेव व्यभिचारवारणादिति वाच्यम्। ज्ञानसत्वबेलाया**मात्माज्ञात** इति विशिष्टबुद्धौ यत्र दोषान्न समवायो भासते किन्तु विषयविषयिभावमात्रं भासते तत्र व्यभिचार वारणार्थं निर्विषयकत्व विशेषणस्याऽवश्यकत्वादित्याहुः।

---

[1] तर्कताण्डव, पृ० 466

तत्रैव तर्कताण्डवे[1] समवायसिद्धानन्तरमपि समवायेतर सम्बन्धिभिन्नसम्बन्धविषया इत्यपि सुसाध्यम्। एवं तत्सिद्ध्यनन्तरं तदुभयेतर सम्बन्धिभिन्नसम्बन्धविषया इत्यपि साधयितुं शक्यमिति सम्बन्धानन्त्यप्रसङ्गः इति दूषणं प्रतिपादितम्।

अत्र तु समाधानं प्रकाशे[2]- अतएव यदि सम्बन्धिभिन्नत्वविशेषणात् समवायसिद्धिः तदा एतदुत्तरं तेनैव हेतुना तद्भिन्नत्वविशेषणादन्यान्यसम्बन्धसिद्ध्यापत्तिः इति परास्तम्। तत्र विपक्षे बाधकाभावादित्यभिहितम्।

## मणिकाराभिमतं चतुर्थमनुमानम्

इन्द्रियप्रत्यासत्तित्वेनापि समवायः सिद्ध्यति। **गुणक्रियादिसाक्षात्कारः इन्द्रियसम्बन्ध साध्यः जन्यप्रत्यक्षत्वात् दण्डिप्रत्यक्षवदि**त्यनुमानेन साक्षात्सम्बन्धासम्भवादिन्द्रियसंयुक्ते सम्बन्धः सिद्ध्यन् पक्षधर्मताबलाल्लाघवेनानुगतः समवायः सिद्ध्यति, अनुगतकार्यस्यानुगत-कारणजन्यत्वान्न तु संयुक्तविशेषणतारूपसम्बन्धः तस्य तत्तत्रूपादि रूपत्वेनाननुगतत्वादिति। इत्थं प्रकारेण चतुर्थमनुमानं मणिग्रन्थे प्रदर्शितम्। तर्कताण्डवकारेण एतदनुमानन्न निराकृतम्।

## अभावविशिष्टबुद्धावपि सम्बन्धान्तरापादनम्

सर्वेपि शास्त्रान्तरकाराः गुणक्रियादिविशिष्टनिर्वाहकतया यदि समवायसम्बन्धनामकः अतिरिक्तपदार्थः स्वीक्रियते तदा घटाभाववद्भूतलमित्यादि विशिष्टबुद्धिरपि पक्षीकृत्य तत्रापि सम्बन्धिभिन्नसम्बन्धिकल्पनापत्तिरिति प्रतिबन्दीमाश्रित्य समवायं दूषयन्ति।

## एतन्निराकरण प्रकारः

तत्र संक्षेपतः इत्थंप्रकारेण समाधानं क्रियते। यदेवं दूषयतां किम्? प्रतिबन्दी कथनमात्रे तात्पर्यम्, उत तन्मुखेन समवायानुमाने अप्रयोजकत्वस्यार्थान्तरत्वस्य वा उद्भावने। तत्र नाद्यः प्रतिबन्द्याः अनुचरत्वात्। न द्वितीयः अनुगतकारणं विनाऽनुगतकार्यासम्भवस्य विपक्षे बाधकत्वात्।

---
[1] त०ता०, पृ० 451
[2] त०चि०म०प्र०, पृ० 670

नाप्यर्थान्तरम्, एकत्वेन लाघवात् समवायस्यैवानुमिति विषयत्वात् स्वरूपसम्बन्धस्य तत्तत्स्वरूपत्वेनानेकतया गुरूत्वात्।

ननु यथाऽभावे वैशिष्ट्यानुमाने आवश्यकस्वरूपसम्बन्धेनार्थान्तरम्, तथा तेनैवात्राप्यर्थान्तरमित्यभिमतम्। तथापि तस्येन्द्रियप्रत्यासत्तित्वस्यानावश्यकत्वात्। अनुगते समवाय एव तस्य साधनात्। एवमभावेपि वैशिष्ट्यस्यैवप्रत्यासत्तिवमस्त्वनुगतत्वात्, इति शंकापरमवशिष्यते। साच प्रतिबन्दीमात्रत्वान्न प्रकृतानुमानदोषः।

अतएव प्रकाशकाराः- **''यदि कल्पनागौरवदोषः तदा न समवायसिद्धिरपि। अन्यथा वैशिष्ट्य सिद्धिरपीति दुरूत्तरा प्रतिबन्दी। तस्मात् यदि बाधकान्तरावष्टम्येन नव्यमतेन समवायसाधनं शक्यते। तदैव परं तदुद्धारो नान्यथेति''**[1] इत्यवोचन।

अभावस्थले वैशिष्ट्याख्यधर्मिकल्पनातोऽधिकरणादिष्वेन सम्बन्धत्व कल्पनया लाघवमिति यथाश्रीयते तदा तेनैव न्यायेन समवायोपि न सिद्ध्येत। अतो विपक्षे गौरवाख्यं बाधकं प्रदर्श्य समवायो नहि साधयितुं शक्यते। अपितु बाधकान्तरं प्रदर्श्यैव समवायः साधनीयः।

किं तद्बाधकमिति शंकायां न्यायशिखामणिकाराः प्राहुः। समवायिकारणव्यवस्था भंगः इति। समवायाख्य पदार्थसिद्धौ समवायघटित कारणत्रयविभागो न संगच्छते इति तदाशयः।

दिनकर्यामपि[2] :- **''कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धिः। न च समवाय स्थाने स्वरूपसंबन्धं निवेश्य कार्यकारणभावः कल्पनीय इति वाच्यम्। तथा सति यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति समवायिकारणव्यवस्था न स्यात्। न च यत्सम्बन्धकार्यमुत्पद्यते तत्समवायिकारणमित्येवास्त्विति वाच्यम्। कपालसम्बद्धघटध्वंसं प्रति कपालस्य समवायिकारणत्व प्रसंगादित्यपि द्रष्टव्यम्।''** इति ग्रन्थेनायमेवाशयः स्पष्टीकृतः।

---

1 तत्वचिन्तामणि- प्रकाश, पृ0 670
2 मुक्तावली- दिनकरी, पृ0 132

चिन्तामणि ग्रन्थेतु अभावस्थले वैशिष्ट्याख्यस्यातिरिक्तसम्बन्धस्य समवायवत् नित्यस्य स्वीकारे भूतले घटानयनानन्तरमपि घटाभाववत्ता बुद्धिप्रसङ्गः। घटाभाववैशिष्ट्ययोः नित्यत्वेन उभयोरपि तत्र विद्यमानत्वात्। अनित्यत्वेतु स्वरूपसम्बन्धाविशेष इत्यादीनि दूषणानि उद्भावितानि सन्ति।

वैशिष्ट्याख्यसम्बन्धमाधिकृत्य बहुपराक्रान्तं मुक्तावली व्याख्यायां मञ्जूषाकारैः इति अत्रैवास्याः चर्चायाः विरामः क्रियते।

**समवायस्य नित्यत्वमेकत्वञ्च**

वैशेषिकसूत्रे प्रशस्तपादभाष्ये च साधितां समवायस्य नित्यतां एकताञ्चामृष्यमाणाः भामतीकाराः '**समवायाभ्युपगमाच्चेति**'[1] सूत्र व्याख्यानावसरे-

"**अपि च समवायस्यापि सम्बन्धाधीन सद्भावस्य सम्बन्धिनश्चैकस्य द्वयोर्वा विशिष्टत्वेन विनाशित्वात् कार्यत्वं नहि अस्ति सम्भवो गुणो वा गुणगुणिनौ वा अवयवो वा अवयवावयविनौवा न स्तः, अप्यस्ति च तयोः सम्बन्धः इति।**" इति ग्रन्थेन सम्बन्धिनाऽनित्यत्वेन समवायसम्बन्धस्याप्यनित्यत्वमिति प्रत्यपादयन्।

"**सम्बन्धिद्वयाधीन सद्भावो हि सम्बन्धोनासत्येकस्मिन्नपि सम्बन्धिनि भवितुमर्हति।**"[2] इति शाङ्करभाष्येप्ययं विषयः उट्टंकितः विद्यते।

रामानुजभाष्येपि "**नित्यमेव च भावात्**" इति ब्रह्मसूत्रव्याख्यानावसरे-

"**समवायस्य सम्बन्धत्वात्सम्बन्धस्य नित्यत्वे सम्बन्धिनो जगतश्च नित्यमेव भावादसमंजसम्**"[3]। इति प्रत्यपादि। श्रुतप्रकाशिकायाञ्च-[4] "**सम्बन्धिविनाशविनाशित्वं**

---

1 शाङ्करभाष्य- ब्र0सू0, 2/2/13
2 शाङ्करभाष्य- ब्र0सू0, 2/2/13
3 ब्रह्मसूत्र, 2/2/12
4 श्रु0प्र0, रामा0भा0- (ब्र0सू0- 2/2/13)

**संयोगेदृष्टमिति समवायस्यापि सम्बन्धत्वादेव सम्बन्धिविनाशविनाशित्वापत्तेः तन्नित्यत्वायसम्बन्धि जगन्नित्यत्वं स्यात्।"** इत्युपर्युदाहृत भाष्यं विवृतम्। अत्र च समवायः **सम्बन्धिविनाशाधीनविनाशवाः सम्बन्धत्वात् संयोगवदित्यनुमानं** विवक्षितम्।

तर्कताण्डवकाराऽपि- **"नहि सम्बन्धनाशेपि सम्बन्धिनः स्थितिवत् सम्बन्धिनाशेपि सम्बन्धस्थितिः कुत्रचिद्दृष्टा"**[1] इति ग्रन्थेनानुमेवाक्षेपं प्रत्यपादयन्। तथा समवायस्यैकता स्वीकारे वायवात्माऽऽकाशादौ नीरूपेष्वपि स्पर्शादिसमवायसद्भावेन रूपसमवायास्याप्यावश्यकत्वात् रूपवत्ता प्रसङ्गः।

[1] त०ता०, पृ०सं०- 478

## ( ख ) सन्निकर्षस्योपयोगित्वम्

यथा पूर्वमिन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमित्युक्तं, तत्र प्रत्यक्षलक्षणघटकीभूत-सन्निकर्षस्योपयोगिताऽस्ति नवेतीति विचार्यते।

तत्र प्रत्यक्षज्ञाने सन्निकर्षस्यास्ति उपयोगिता। सन्निकर्षमाध्यमेनैव चक्षुरादीन्द्रियाणां करणत्वं सिध्यति। करणत्वं नाम व्यापारवदसाधारणकारणत्वम्। यत्कारणमसाधारणत्वे सति व्यापारवद्भवति, तदेव कारणं करणपदेन व्यपदिष्यते। तत्र व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपः। सर्वत्राऽपि एतादृश एव व्यापारः अभिमन्यते।

व्यापारोत्तरञ्च फलनिष्पत्तिर्भवति। तद्माध्यमेनासाधारणकारणस्य फलनिष्पादकत्वं सिध्यति। **"ज्योतिष्टोमेन यजेत् स्वर्गकामः"** इत्यत्र ज्योतिष्टोमयागस्य स्वर्गरूपफलस्यादृष्ट-द्वारा साधकत्वमभिमतम्। अन्यथा क्रियारूपस्य देवोद्देश्येन द्रव्यत्यागरूपस्य ज्योतिष्टोमयागस्य निवृत्युत्तरं फलानिष्पत्तावपि साधनत्वं स्वीक्रियते।

यतश्च ज्योतिष्टोमेन यागेनादृष्टं जायते। तच्चादृष्टं ज्योतिष्टोमयागजन्यस्वर्गरूपफलस्य जनकम्। अतः तज्जन्यत्वे सति तज्जन्यजनकत्वमदृष्टरूपे व्यापारे संगतम्। तद्माध्यमेन विनष्टस्यापि क्रियारूपस्य ज्योतिष्टोमयागस्य स्वर्गरूपफलसाधकत्वेन करणत्वं स्वीक्रियते। एवमेव प्रमाकरणभूतप्रमाणानामपि व्यापारद्वारैव करणत्वं सिध्यति।

### अनुमितिप्रमायां व्यापारस्वरूपविचारः

एवं व्याप्तिज्ञानस्यानुमितिप्रमां प्रति परामर्शरूप व्यापारद्वारैव करणत्वं सिध्यति। परामर्शश्च व्याप्तिविशिष्टपक्षधर्मता ज्ञानरूपः। तत्र व्याप्तेः विशेषणभूततया परामर्शे कारणं भवति। तत्र हि अयं धूमो वह्निव्याप्यः। वह्निव्याप्यो नाम **'वह्निव्याप्तिविशिष्टः'**। यतः **'अयं धूमः वह्न्यभाववद्वृत्तिः तद्वानयं पर्वतः, अतः वह्निमान्।'** पूर्वं धूमे वह्न्यभाववदवृत्तित्वं गृहीत्वैव पश्चात् व्याप्तिविशिष्टधूमज्ञानेन पर्वते वह्निनिश्चयो जायते। वह्न्यभाववदवृत्तित्वं व्याप्तिस्वरूपं,

तद्स्वरूपज्ञानं परामर्शे अभिलक्षितम्। अतः परामर्शे ज्ञानं **'व्याप्ति-ज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितेः जनकम्।'** अतः तज्जन्यजनकत्वरूपव्यापारलक्षणस्य संगतिः परामर्शे भवति। तादृश व्यापारद्वारा व्याप्तिज्ञानस्य करणत्वं सिद्ध्यति।

एवमेव **स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यता-वच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति** सिद्धान्तलक्षणव्याप्तिज्ञान-स्यापि परामर्शव्यापारद्वाराऽनुमितेः जनकत्वं सिद्ध्यति। तत्रापि लक्षणे स्वपदेन हेतुर्ग्राह्यः। स्वं धूमः तत्समानाधिकरणाभावः धूमाधिकरणात्यन्ताभावः, स चाभावः वह्नित्वावच्छिन्नसंयोग-सम्बन्धावच्छिन्नप्रतियोगिताको न सम्भवति। तत्र संयोगसम्बन्धेन वह्नेः वृत्तित्वात्। तत्र पर्वते संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नो मिलिष्यति। प्रतियोगितावच्छेदकं घटत्वमनवच्छेदकं वह्नित्वं, तदवच्छिन्नसाध्यवह्निसामानाधिकरण्यस्य धूमे संगच्छते। तत्सामानाधिकरण्यमेवा-विनाभावरूपेण व्याप्तिरूच्यते। अतः तत्रापि व्याप्तिविशिष्टः धूमः संजातः तस्य धूमस्य पक्षे वृत्तिता ज्ञानं परामर्श इत्युच्यते। अतः परामर्शः सर्वत्रापि व्याप्तिज्ञानजन्य एवास्ति। अथ च परामर्श ज्ञानोत्तरमेवानुमितिरूपा प्रमा जायते। अतः तज्जन्यजनकत्वं सर्वत्रापि परामर्शज्ञाने अव्याहतम्। तद्द्वारा च व्याप्तिज्ञानस्यानुमितेः करणत्वं सिद्ध्यति।

ते च वेदान्तिनः अनुमितिज्ञाने परामर्शरूपज्ञानं व्यापाररूपत्वेन न स्वीकुर्वन्ति तेऽपि व्याप्तिज्ञानस्य संस्कारः व्यापारत्वेनाभ्युपगच्छन्ति। **"अनुमितिकरणञ्च। व्याप्तिज्ञानम्, तत्संस्कारोऽवान्तरव्यापारः।"**[1] अयमाशयः, यत्प्रकारकं व्याप्तिज्ञानं तत्प्रकारकत्वेनैव पक्षधर्म-ताज्ञानस्यानुमिति हेतुत्वम्, अस्य च गुरुत्वेऽपि व्याप्यत्वप्रकारकत्वापेक्षया सामान्यधर्मत्वेनावच्छेदकतौचित्यात्। किञ्च पक्षधर्मताज्ञानमुक्तरूपेणैवानुमितिहेतुस्सर्वत्रा-व्यभिचारात्, न तु तदुक्तरूपेण व्यवहितधूमादिस्थले व्यभिचारात्। न च तत्र प्रत्यक्षपरामर्शः सम्भवति, विशेष्यसन्निकर्षाभावात्। तत्रानुमित्यात्मकपरामर्शादनुमित्यभ्युपगतावनवस्थापातात्। धूमे

[1] वेदान्तपरिभाषा, अनुमानपरिच्छेदः

व्याप्यत्वाज्ञानेऽपि व्यवहितधूमस्मरणादनुमितिदर्शनाच्च। न मनसा तत्र परामर्शः तस्यासहाय्यस्य बहिरस्वातन्त्र्यात्। न च ज्ञानं प्रत्यासत्तिः, निराकृतत्वात्। तस्मान्न व्याप्यत्वप्रकारकत्वेन पक्षधर्मताज्ञानमनुमितिहेतुरिति। यत्तु पक्षधर्मताज्ञानं करणं तत्संकारोऽवान्तरव्यापार इत्यन्ये तन्न, उद्बुद्धव्याप्तिसंस्कारस्य पर्वतादौ पक्षे धूमादिदर्शनानन्तरमनुमितेः पक्षधर्मतासंस्कारस्यानुमित्यहेतुत्वात्।

**उपमितिप्रमायां व्यापारस्वरूपविचारः**

एवमेवोपमितावपि अतिदेशवाक्यस्मरणं व्यापारः अभिमतः। तथाचोक्तं[1]

**ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम्।**
**सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम्।।**
**वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते।**
**गवयादिपदानां तु शक्तिधीरूपमा फलम्।।**

प्रथमतो गवयादिकं पश्यतो ग्रामीणस्य पुरुषस्य या गवादीनां सादृश्यधीः **'अयं गोसदृशः'** इति गवयादिविशेष्यक गोसदृश्यप्रकारकप्रत्यक्षं स्यात्, सा धीः उपमितेः करणं मतं तार्किकाणाम्। अथ च **'गोसदृशो गवयपदवाच्यः'** इति अतिदेशस्य स्मरणं व्यापारः उच्यते। गवयादिपदानां गोसदृशारण्यकपशौ **'गवयो गवयपदवाच्यं'** इति शक्तिधीः उपमितिप्रमा फलमुच्यते।

अत्रस्मृतिरूपव्यापारः समानप्रकारकानुभवजन्यः एव स्वीक्रियते। अतएव ग्रामीणस्य गवि सास्नादीनां प्रत्यक्षं कृत्वा अरण्यगतस्य तस्य चक्षुस्सन्निकर्षदेव गोसदृशव्यक्त्यात्मकधर्मिदर्शनेन गोसादृश्यप्रकारकभेदं विशेष्यक प्रत्यक्षसंभवेऽपि तदुत्तरं सादृश्यावच्छिन्नविशेष्यकगवयपद-वाच्यत्वप्रकारकस्मरणं नोत्पद्येत?

---

[1] न्या०सि०मु०, उपमानखण्ड, का०सं०- 79, 80

उक्तञ्च मुक्तावलिग्रन्थे **''यत्राऽऽरण्यकेन केनचिद् ग्रामीणायोक्तं 'गोसदृशो गवयपदवाच्य' इति पश्चाच्च ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यदर्शनं यज्जातं तदुपमितिकरणम्। तदनन्तरं 'गोसदृशो गवयपदवाच्य' इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः।''**[1]

अत्र सादृश्यज्ञानं करणं, तच्चातिदेशवाक्यस्मरणमन्तरा न सम्भवति। सादृश्यञ्च **'तद्भिन्नत्वेसति तद्गतभूयोधर्मवत्त्वम्'।** यथा गोभिन्नत्वेसति गो गता ये भूयांसो धर्माः श्रृंगादयस्तद्वत्वं गवये गोसादृश्यम्। तादृशसादृश्यप्रकारक व्यक्तिविशेष्यकनिश्चयात्मकोद्बोधक-जन्यं यद् 'गोसदृशो गवयपदवाच्य' इत्युपदेशवाक्यार्थानुभवसमानाकारं स्मरणं **'गोसदृशो-गवयपदवाच्य'** इति तदेव व्यापारः। तदनन्तरं गवयपदवाच्यत्वप्रकारकगवयविशेष्यक **'गवयोग वयपदवाच्य'** इति सामान्यज्ञानात्मिका गवये गवयपदशक्तिविषयकनिश्चयरूपा उपमितिरुत्पद्यते।

तच्चोपमानं त्रिविधं- सादृश्यविशिष्टपिण्डदर्शनम्, असाधारणविशिष्टपिण्डदर्शनम्, वैधर्म्यविशिष्टपिण्डदर्शनम्। तत्र प्रथममुक्तमुच्यते। द्वितीयं यथा भल्लुकः कीदृगिति पृष्टे **''पञ्चाङ्गुलिविशिष्टपादचतुष्टयसम्पन्नो लम्बनासिकालसन्मुखो दीर्घोऽनत्युच्चतरः कृष्णदीर्घरोमाकुलितशरीरो भल्लुकः''** इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशाऽसाधारणधर्मादिविशिष्टं पिण्डं पश्यति, तत उपदेशवाक्यार्थस्मरणं, ततो **'भल्लुको भल्लकपदवाच्य'** इत्युपमितिर्भवति। तृतीयं यथा- सिंहः कीदृगिति पृष्टे **'करश्रृंगपक्ष-खुरादिरहितशरीर'** इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे करश्रृंगादिधर्मविरूद्धधर्मविशिष्ट-पिण्डदर्शनं करोति, तत उपदेशवाक्यार्थस्मरणं भवति, ततः **'सिंहः सिंहपदवाच्य'** इति जायते। साम्प्रदायिकास्तु अतिदेशवाक्यार्थशाब्दबोधः करणम्, अतिदेशवाक्यार्थस्मरणं व्यापारः, सादृश्यविशिष्टपिण्डदर्शनं सहकारि, **'गवयो गवयपदवाच्य'** इत्युपमितिरिति वदन्ति। उपाध्यायास्तु **''सादृश्यज्ञानमात्रं करणम्, विशेषणज्ञानविधया तज्जन्यमति-**

---

[1] न्या0सि0मु0, उपमानखण्ड

**देशवाक्यार्थज्ञानं सादृश्यविशिष्टपिण्डदर्शनञ्च द्वयमेव व्यापारः 'गवयो गवयपदवाच्य' इत्युपमितिरिति।''**

अन्ये तु वाक्यज्ञानं करणं वाक्यार्थानुभवो व्यापारः 'गवयो गवयपदवाच्यः' उपमितीति स्वीकुर्वन्ति। तद्यथा- 'मुद्गपर्णसदृशौषधिर्ज्वरहरेति' वैद्यवाक्यं श्रुत्वा तदर्थबोधाऽन्तरं मुद्गपर्णसादृश्यविशिष्टौषधिदर्शनेन मुद्गपर्णसादृश्यविशिष्टविशेष्यकज्वरहरत्वप्रकारकातिदेशवाक्यार्थ-स्मरणाऽनन्तरमियं ज्वरहरेत्याकारककार्यकारणभावज्ञानमुपमितिरिति रघुनाथ-शिरोमणयः एतन्मते उपमितित्वजातिमत्वमेवोपमितेर्लक्षणम्। अन्यमतेषु तु संज्ञासंज्ञिसम्बन्धज्ञानत्वमुपमितित्वमिति लक्षणम्।

मीमांसकास्तु **'गोसदृशो गवयपदवाच्य'** इत्युपमितिमङ्गीकुर्वन्ति। तन्न। **'गोसदृशो गवयपदवाच्य'** इत्युपदेशवाक्यजन्यशाब्दबोधे तस्यान्तरगतत्वेनातिरिक्तप्रमात्वानुपपत्तेः।

वेदान्तिनस्तु प्राङ्गणेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गते सति गवय इन्द्रियसन्निकर्षे जाते सति **'अयं गोपिण्डः मदीय गोसदृशः'** इति सादृश्यज्ञानमुपमितौ व्यापारमभ्युपगच्छन्ति। तदनन्तरं **'अनेन सदृशी मदीया गौ'** इति निश्चयं उपमितिप्रमां स्वीकुर्वन्ति।

आदौ गौरित्यादिप्रतियोगिगवादिस्मरणं पश्चाद् गवयादिनिष्ठसादृश्यज्ञानं ततः सादृश्यं तत्प्रतियोगी चेति समूहालम्बनमिति सादृश्यं तत्प्रतियोगी चेति समूहालम्बनस्य सादृश्यप्रति-योगिस्मरणसहकृत सादृश्यज्ञानजन्यत्वेन सादृश्यं तत्प्रतियोगीत्येतदुभयविषयकसादृश्यं तत्प्रतियोगी चेति समूहालम्बनेऽतिव्याप्तेरित्यर्थः। ततश्चोपमित्यनिरूपणादेव, तस्य- गवादिप्रति-योगिकगवयादिनिष्ठसादृश्यज्ञानस्य, तत्त्वेन-सादृश्यज्ञानत्वेन, नाऽसम्भवः। सादृश्यज्ञानत्वेन सादृश्यज्ञानजन्योपमितिरित्युपमितिनिरूपणे सत्युपमितिकरणमुपमानमित्युपमानलक्षणस्या-सम्भवो न।

**शाब्दप्रमायां व्यापारस्वरूपविचारः**

शाब्दप्रमायामपि पदजन्यपदार्थस्मरणं व्यापारो भवति। उक्तञ्च कारिकावल्यां[1]

**पदज्ञानं तु करणं, द्वारं तत्र पदार्थ धीः।**

**शाब्दबोधफलं, तत्र शक्ति धीः सहकारिणी॥**

पदसमूहात्मक वाक्यजन्यो यो वाक्यार्थबोधः साफलरूपत्वे प्रमा उच्यते। पदजन्य-पदार्थस्मरणात्मकव्यापारे शक्ति धीः पदेन सह अर्थस्य सम्बन्धरूपाया वक्ष्यमाणायाः संकेताख्यायाः शक्तेः धीः, सा च शक्तिधीः **'अस्मात्पदार्थ अयमर्थो बोधव्यः'** इति पदप्रकारकार्थविशेष्यकेश्वरेच्छात्मकशक्तिज्ञानरूप, अत्र स्वजन्यबोधविषयत्वं पदस्यार्थे सम्बन्धः। अथवा **'इदं पदमिममर्थं बोधयतु'** इति अर्थप्रकारकपदविशेष्यकेच्छात्मक-शक्तिज्ञानरूपा, अत्र स्वविषयकबोधजनकत्वमर्थस्य पदे सम्बन्धः इति। एतादृशी शक्ति धीः सहकारिण कारणं व्यापारत्वेनाभिधीयते।

करणन्तु पदसामान्यज्ञानं न तु ज्ञायमानं पदं करणम्। यदि वर्तमानकालीन श्रावणज्ञानविषयिभूतं पदं करणं स्यात् तदा मौनि कर्तृकवाक्यबोधक लिप्यादौ मौनतया वाचिते यद्वा लिखितश्लोके द्वित्वादिबोधक अङ्गुल्यादि चेष्टादौ च श्रावणविषयकपदाभावेपि शाब्दबोधस्य जायमानतया तादृशान्वयव्यतिरेको न गृह्यते।

यत्र च घटादिपदार्थस्येन्द्रियसन्निकर्षे सत्यपि **'अयं घटः'** इति पदमुच्चार्य्यति तत्रापि शाब्दबोधः भवत्येव। यतश्च पदजन्यपदार्थस्मरणं व्यापारः उच्यते। तत्र यदि व्यापारस्मरणं व्यापारः उच्यते तदा प्रत्यक्षज्ञान सामग्र्याः सत्वेपि शाब्दबोध एव स्यात्। अयञ्च नियमः यत्र प्रत्यक्षज्ञानसामग्री अथ च शाब्दबोधसामग्री विद्येते तत्र प्रत्यक्षात्मकज्ञानमेव भवति।

पदज्ञानवतः 'घट' पदस्मरणवतः पुरुषस्य, प्रत्यक्षादिना चक्षुस्संयोगेन, अनुमानेन, अन्येन, उद्बोधकेन वा पदार्थस्य घटात्मकपार्थिववस्तुनः उपस्थितौ ज्ञाने स्मरणे सत्यपि

---

[1] न्या0सि0मु0, शब्दखण्ड, का0सं0- 81

घटविषयकशाब्दबोधापत्तिः स्यात्। न तु तत्र शाब्दबोधो भवति कारणञ्च चक्षुस्संयोगादिजन्यं पदार्थस्मरणात्मकं वर्तते, तथा च कारणे सत्यपि कार्यानुत्पादरूपोन्वयव्यभिचारः, अतो न पदार्थस्मरणमात्रं व्यापारः किन्तु पदज्ञानजन्यपदार्थस्मरणमिति भावः।

ननु पदार्थज्ञानस्य व्यापारविधयैव शाब्दबोधहेतुत्वप्रतिपादनात् प्रत्यक्षादेश्च पदज्ञानाऽजन्यतया व्यापारत्वाऽसंभवादेव नाऽऽपत्तिरिति चेन्न। कालिकसम्बन्धेन पदज्ञानजन्यत्वस्य तत्र सत्वात्। ननु पदज्ञाननिष्ठसमवायसम्बन्धेन पदज्ञानजन्यत्वस्य तत्र सत्वात्। ननु पदज्ञाननिष्ठसमवायसम्बन्धावच्छिन्नकारणतानिरूपितकार्यत्वरूपपदज्ञानजन्यत्वस्यैव निवेशेन प्रत्यक्षादेस्तादृशव्यापारत्वाऽभावान्नापत्तिरिति चेन्न। घटवदाकाशमित्याकारकविशिष्टवैशिष्ट्यावगाहिमानसप्रत्यक्षस्य घटपदत्वप्रकारकज्ञानजन्यतया घटपदलिङ्गज्ञानजन्याऽऽकाशपक्षकविभुत्व विधेयकानुमितेरपि घटपदज्ञानजन्यतया घटपदानुभवजन्यघटपदस्मृतेरपि घटपदज्ञानजन्यतया च एतेषां ज्ञानानां व्यापारत्वसंभवेन आकाशविभुत्वघटपटादीनां शाब्दबोधापत्तिवारणाय पदज्ञानजन्यत्वस्याऽऽवश्यकत्वात्। ननु पदार्थस्मृतेः साक्षात्पदज्ञानजन्यत्वविवक्षणात् पदविषयक-स्मृतेश्च संस्कारद्वारा पदज्ञानजन्यत्वेन साक्षात्पदज्ञानजन्यत्वाभावात् नोक्तापत्तिरिति चेन्न। सिद्धान्ते पदज्ञानस्यापि वृत्तिज्ञानद्वारैवार्थस्मारकत्वात् साक्षत्परम्परासाधारणजन्यत्वघटितव्यापारत्वस्याऽभिप्रेतत्वात्। ननु परम्परया पदज्ञानजन्यत्वेन पदस्मृतेरपि व्यापारतया तदुत्तरं पदविषयकशाब्दबोधापत्तिरिति चेन्न। पदज्ञानजन्यत्वस्योद्बोधकविधया पदज्ञाननिष्ठकारणतानिरूपितकार्यत्वस्यैव निवेशितादिति ध्येयम्।

तत्र वेदान्तिनः वाक्यस्यैव प्रमाणत्वमभ्युपगच्छन्ति। उक्तञ्च[1]- **''यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं न प्रमाणम्''**। एतेषां मते पृथग्रूपेण यद्यपि व्यापारो नाभिमन्यते। तथाहि-

[1] वेदान्तपरिभाषा, आगमपरिच्छेदः

मानान्तराबाधिततात्पर्यविषयीभूतपदार्थसंसर्गबोधकत्वं यस्य वाक्यस्य तद्वाक्यं प्रमाण शब्देत्यर्थः। शब्दसमानार्थके प्रमाणान्तरे प्रमाणशब्दलक्षणं मा प्रसाङ्क्षीदिति वाक्यस्येत्युक्तम्। पदार्थसंसर्गबोधकवाक्यत्वस्याग्निना सिञ्चेदित्ययोग्यवाक्येऽपि गतत्वादबाधितेति संसर्गविशेषणम्। ब्रह्मपरवाक्यातिरिक्तसकलवाक्येषु स्वार्थसंसर्गस्य नेह नानास्तीत्यादिना बाधितत्वादव्याप्तिरित्युक्तं मानान्तरेणेति। सजातीयमानान्तरेणेत्यर्थः। तथा च पारमार्थिकतत्त्वावेदकैर्वेदान्तैर्घटानयनादि-संसर्गस्य यागस्वर्गादिसाध्यसाधनभावस्य च बाधेऽपि सजातीयैर्व्यवहारिकतत्वावेदकैः प्रमाणान्तरैर्बाधाभावान्नाव्याप्तिः।

अर्थवादवाक्ये **'स प्रजापतिरात्मनोवपामुदखिदत्'** इत्यादौ श्रूयमाणपदार्थसंसर्गस्य व्यवहारदशायामपि बाधात्तात्पर्य्यविषयेत्युक्तम्। यद्वा योग्यशब्दत्वमिह प्रमाणलक्षणं योग्यत्वं च तात्पर्यविषयसंसर्गाऽबाधः। प्रमास्वरूपयोग्यशब्दमात्रस्य लक्षणत्वादनासन्नादौ नातिप्रसङ्गः। अथवा तात्पर्यविषयबाधितसंसर्गगोचरशब्दज्ञानजनकत्वं लक्षणम्। शाब्दज्ञानं च पदज्ञानत्वेन पदज्ञानजन्यं तात्पर्यज्ञानत्वेन तात्पर्यज्ञानजन्यं वा तात्पर्यज्ञानकारणत्वं चाकरे स्फुटम्। वैशेषिकास्तु शब्दो न पृथक्प्रमाणमनुमानेनैव तदर्थसिद्धेः। तथाहि लौकिकानि गामानयेत्यादीनि वैदिकानि च **''ज्योतिष्टोमेन स्वर्गकामो यजेत्''** इत्यादीनि तात्पर्यविषयपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षायोग्यताऽऽसत्तिमत्पदकम्बत्वाद् पटमानयेत्यादिवाक्यवद्। एते पदार्थास्तात्पर्यविषयमिथः। संसर्गवन्तः योग्यपदस्मारितत्वात्, सम्प्रतिपन्नवत्। न च शब्द एव संसर्गप्रतीति जनयतु अविशेषादिति वाच्यम्, अनुमानस्य क्लृप्तप्रमाणभावतया तस्यैव करणत्वौचित्यात्। तस्मादनुमान-विधया प्रमाणम्, न स्वातन्त्र्येणेति। तत्रापि वाक्यस्यपदसमूहरूपत्वात् वाक्यघटकपदानां शक्तिरपेक्षत एव। स च शक्तिः पदजन्यपदार्थस्मृति रूपत्वेन व्यापारः भविष्यति एव।

**अर्थापत्तिप्रमायां व्यापारस्वरूपविचारः**

एवमेव अर्थापत्तिप्रमायामपि व्यापारविचारः चिन्त्यते। तत्र ये दार्शनिकाः व्यतिरेकव्याप्तिं न स्वीकुर्वन्ति। तेषां मते अर्थापत्तिः अतिरिक्तप्रमाणत्वेन स्वीक्रियते। अर्थापत्तिं नाम **'उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः'।**[1] उत्पाद्यं नाम **'कार्यं'**। कार्यं दृष्ट्वा कारणमनुमीयते। यथा **'नद्याः जलवृद्धिमालोक्योपरिस्थले वृष्टिर्जाता'** इति अनुमीयते। उर्ध्वस्थले वृष्टिमन्तरा नद्याः जलवृद्धेरसम्भवात्। तद्वदेव दिवाभुञ्जानस्य देवदत्तस्य पीनत्वमवलोक्य रात्रिभोजनं कल्प्यते। अत्रोत्पाद्यं देवदत्तनिष्ठपीनत्वं, तच्च दिवाभुञ्जानस्य देवदत्तस्य रात्रि भोजनमन्तराऽनुपपन्नम्। यतोहि देवदत्तः दिवा न भुङ्क्ते तथापि पीनो दृष्टते। पीनत्वञ्च भोजनं विना न सम्भवति। अतः अयं देवदत्तः रात्रिभोजी।

अत्र उत्पाद्यज्ञानं करणम्। उत्पादकज्ञानञ्च फलरूपेण प्रमा इत्युच्यते। अत्रापि उत्पाद्यज्ञानस्य करणतासिद्ध्यर्थं कश्चिद्व्यापारः स्वीकरणीयः। यः उत्पाद्य ज्ञानजन्यः सानुत्पादकज्ञानस्य जनकं स्यात्।

अत्रापि व्यापारः तद्संस्कार एव अस्ति। भोजनं विना पीनत्वं न सम्भवतीति पूर्वतः एव ज्ञातत्वेन संस्काररूपेण अन्तःकरणे स्थितः सन् दिवाभुञ्जानस्य देवदत्तस्य पीनत्वमालोक्य संस्कारः उदेति। उदितः संस्कारः रात्रिभोजनरूपज्ञानस्य कल्पकं भवति। अतः अत्रापि व्यापारमन्तरा उत्पादकज्ञानस्य प्रमाकरणत्वं न सम्भवति।

ते च नैयायिकाः अर्थापत्तिप्रमाणमस्वीकुर्वन्तः व्यतिरेकानुमाने अर्थापत्तिं गतार्थयन्ति। तत्रापि परामर्शः व्यापाररूपत्वेन अभिमतः। देवदत्तः रात्रिभोजिदिवाभुञ्जानत्वेसति पीनवत्वात्, यन्नैवं तन्नैवं यथा दिवा भोजी यज्ञदत्तः।

अर्थापत्तिप्रमाणवादिनः मीमांसकाः वेदान्तिनश्च व्यतिरेकानुमानं खण्डयन्तः प्रतिपादयन्ति। यत्व्यतिरेकानुमानेनार्थापत्तिरूपप्रमायाः गतार्थता न सम्भविष्यति।

---

[1] वेदान्तपरिभाषा, आगमपरिच्छेदः

## अनुपलब्धिप्रमायां व्यापारस्वरूपविचारः

एवमेवानुपलब्धिप्रमायामपि कश्चिद्व्यापार अभ्युपगम्यते। येनानुपलब्धेः करणत्वं सिध्यति। अनुलब्धिप्रमाणत्वं नाम **'ज्ञानकरणाजन्याभावानुभवासाधारणकरणमनु-पलब्धिरूपं प्रमाणम्।'**[1]

ज्ञानरूपाणि यानि करणानि व्याप्तिज्ञानसादृश्यज्ञानतात्पर्यवच्छब्दज्ञानोपपाद्यज्ञानानि तेभ्योऽजन्यो योऽभावानुभवः तस्यासाधारणं कारणमनुपलब्धिरूपं प्रमाणम्। ननु इन्द्रियेण या व्यक्तिर्गृह्यते तेनैव सह तद्गता जातिस्तदभावश्च गृह्यत इति चक्षुरादिकमेवाभावज्ञानसाधारणं कारणं वक्तव्यं किमनुपलब्ध्येति चेत्, न, घटतदभावयोर्वैजात्यानुभवाद् वैजात्यानुभवे च प्रमाणवैजात्यमप्यवश्यं वक्तव्यम्। न च घटत्वादिजातिवद् घटाभावस्यापि चक्षुर्गम्यत्वात्स्विति वाच्यम्। रूपरसगन्धस्पर्शशब्दरहितस्याभावस्यैन्द्रियकत्वायोगात्। तस्मादनुपलब्धिः प्रमाणान्तरमेव।

अत्रानुपलब्धेः या योग्यता तार्किकप्रतियोगिसत्वप्रसञ्जितप्रतियोगिकत्वम् प्रतियोगित्व-रूपा स एव व्यापार रूपेणानुपलब्धौ स्वीक्रियते।

अत्र घटज्ञानाभाव घटाभावज्ञाने करणमस्ति। अनुपलब्धिपदेन ज्ञानाभावः गृह्यते। **'नोपलब्धिः अनुपलब्धिः'** षष्ठी तत्पुरुषसमासेनानुपलब्धिः अर्थात् ज्ञानाभावः अभावज्ञाने करणं भवति। अत्र करणता च यदि अत्र घटः स्यात् तर्हि उपलभ्येत इति तार्किकप्रतियोगि-सत्वेन तादृशव्यापारद्वारा निश्चीयते।

अनुपलब्धिप्रमाणं न स्वीकुर्वतां नैयायिकादीनां मते प्रत्यक्षप्रमाणेनैव गतार्थता स्वीक्रियते। येन इन्द्रियेण यो विषयः गृह्यते तेनैवेन्द्रियेण तद्गता जाति तत्प्रतियोगिकाभावश्च गृह्यते। अतः तत्र विशेषणताख्यसंसर्गरूपः व्यापारः अभिमतः। अतः सर्वाण्यपि प्रमाणानि व्यापारवन्ति विद्यन्ते। अतः प्रत्यक्षप्रमाणस्यापि व्यापारवत्वं स्वीक्रियते। तच्चानुमानं प्रत्यक्षप्रमाणं सा व्यापारं प्रमाणत्वादनुमानादिप्रमाणवत्। अनुमानादिप्रमाणेषु प्रमाणत्वं जातित्वेन यद्वा उपाधिरूपेणाभिमतं

[1] वेदान्तपरिभाषा, अनुपलब्धिपरिच्छेदः

तत्र च परामर्शादिव्यापारोऽपि अभिमतः। अतः सा व्यापारत्वस्य प्रमाणत्वे व्याप्तिरभिमता। तादृशप्रमाणत्वस्य प्रत्यक्षप्रमाणे विद्यमानतया अत्रापि सा व्यापारत्वमभिमन्यते। ते च व्यापाराः संयोगसंयुक्तसमवायादिरूपेण प्रसिद्धाः। तेषां प्रयोजनपुरस्सरमुपयोगिता निरूप्यते।

**प्रत्यक्षप्रमाणव्यापाराणामुपयोगित्वविचारः**

यथाऽनुमानादिप्रमाणानां ये व्यापाराः तेषां प्रमाजनकत्वेनोपयोगिता निरूपिता तद्वदेव संयोगादिसन्निकर्षरूपव्यापाराणामपि प्रत्यक्षप्रमाजनकत्वेनोपयोगिताऽस्त्येव। यथाऽन्येषां प्रमाणानां सव्यापारत्वं निर्णीतं तद्वदेव चक्षुरादीन्द्रियप्रमाणानामपि स व्यापारत्वं निश्चियते। तथा चानुमान **'चक्षुरादीन्द्रियाणि व्यापारवन्ति प्रमाणत्वात् व्याप्तिज्ञानादिप्रमाणवत्'** व्याप्तिज्ञानादिप्रमाणेषु परामर्शादिव्यापारवत्त्वं संसिद्धम्। अथ च प्रमाणभूतेषु व्याप्तिज्ञानादिषु प्रमाणत्वमपि अस्त्येव। अतः सा व्यापारवत्वरूपसाध्यस्य प्रमाणत्वरूपहेतौ व्याप्तिं संसिद्धा। तादृश व्याप्तिविशिष्टस्य प्रमाणत्वस्येन्द्रियादि प्रमाणेषु विद्यमानतया इन्द्रियादिप्रमाणेषु सव्यापारत्वमपि संसिद्धम्।

अत्र सन्निकर्षादिव्यापाराणामुपयोगिताऽस्ति न वेति विचार्यते। व्यापारमन्तरा कस्यापि कारणस्य करणत्वमनुपपन्नमित्येतत्पूर्वं विचार्यतामेव। यदि संयोगादिसन्निकर्षाणां कारणता न स्वीक्रियते, तदा व्यवहितविषयस्यापि प्रत्यक्षत्वापत्तिः स्यात्। व्यवहितविषयस्य सन्निकर्षाभावात् प्रत्यक्षत्वं न सम्भवति। उक्तञ्च सन्निकर्षस्वीकारपक्षे जयन्तभट्टेन **''यदि ह्यसन्निकृष्टमपि चक्षुरादीन्द्रियमर्थं गृह्णीयाद्व्यवहितोऽपि ततोऽर्थोपलभ्येत, न चोपलभ्यते, तस्मादस्ति सन्निकर्षः''**।[1]

यद्युच्येत इन्द्रियाणां विषयेण सः अव्यवधानमेव कारणत्वेनाभ्युपगच्छेत सन्निकर्षस्य कारणरूपेणोपयोगिता नास्ति। तत्रोच्यते, इन्द्रियाणां कारकत्वेन प्राप्यकारित्वमावश्यकम्। संसृष्टमेव कारकं फलाय कल्पते। अतः संसर्गरूपः सन्निकर्षादिव्यापारः कल्पते। यदि च

[1] न्यायमञ्जर्यां, प्रमाणप्रकरणम्

संयोगादि सम्बन्धरूपव्यापाराणां कारणत्वं न स्वीक्रियते तदा इन्द्रियाणां प्राप्यकारित्वं न सम्भवेत। अतः इन्द्रियाणां प्राप्यकारित्व संसिद्धये सन्निकर्षादिव्यापाराः स्वीक्रियन्ते। सन्निकर्षादि-व्यापाराणां पार्थक्येनोपयोगिता विचार्यते। तत्रादौ संयोगसन्निकर्षव्यापारस्योपयोगितायाः विचारः प्रारभ्यते।

**संयोगसन्निकर्षस्योपयोगित्वविचारः**

घटादिद्रव्यप्रत्यक्षे संयोगसन्निकर्षः। तत्र यदि संयोगरूपसन्निकर्षः न स्वीक्रियते तदा घटादिद्रव्याणां प्रत्यक्षं न सम्भवेत। यतः कार्याधिकरणे कारणानां सन्निधिः कार्य जनकत्वेनाभिमन्यते। तत्र घटविषयकप्रत्यक्षज्ञानरूपकार्यं समवायसम्बन्धेनाऽऽत्मनि उत्पद्यते। घटस्य च बहिर्देशविद्यमानतया प्रत्यक्षज्ञानरूप कार्यदेशे घटस्य संयोगसन्निकर्षमन्तरा सन्निधिर्न सम्भवति। संयोगरूपसन्निकर्षस्वीकारे संयोगसम्बन्धेन घटः इन्द्रियसम्बद्धः। इन्द्रियेण च मनसः संयोगसम्बन्धः। अथ च तस्यैव मनसः आत्मना सः संयोगसम्बन्धः। आत्मना संयोगोत्तरं ज्ञानमुत्पद्यते। ज्ञानोत्पत्याश्रयभूतात्मनि स्वसंयुक्तसंयुक्तसंयुक्तसम्बन्धेन घटोऽपि आत्मनि संगच्छते। स्वं घटः तद्संयुक्तं चक्षुरादीन्द्रियं, तत्संयुक्तञ्च मनः, मनश्च संयोगः आत्मनि। अतः विषयस्यापि ज्ञानाधिकरणे समन्वयः सम्भवति। यदि संयोगाख्यः सन्निकर्षरूपो व्यापारः न स्वीक्रियेत तदा चक्षुरादीन्द्रियेण घटादिविषयस्य सम्बन्ध एव न स्यात्। चक्षुरिन्द्रियस्य तैजस्सत्वात् घटादिविषयदेशे गमनं सम्भवत्येव। तत्र घटादीनां द्रव्यत्वेन इन्द्रियादि द्रव्यस्य संयोगः सन्निकर्षः। अथ च मनसः द्रव्यत्वात् चक्षुरादीन्द्रियद्रव्येण सः संयोगसन्निकर्षः। तस्य च मनसः आत्मरूपद्रव्येण सः संयोगः सन्निकर्षः। एतत्सम्बन्धेनैव घटादिविषयकज्ञानस्य घटादि विषयो भवति।

द्रव्यप्रत्यक्षे उद्भूतरूपत्वं महत्वञ्च कारणं भवति। अतएव परमाणूनां प्रत्यक्षापत्तिर्नास्ति। उद्भूतरूपत्वाभावात् महत्वाभावाच्च। एवञ्च घटादिद्रव्याणां चाक्षुषप्रत्यक्षे आलोकोऽपि सहकारी कारणतयाऽपेक्षते। अतो घनान्धकारवर्तिघटविषयकप्रत्यक्षत्वापत्तिर्नास्ति। यद्यपि चक्षुरिन्द्रियस्य

तैजससत्वात् बहिर्गमनसम्भवे घटेन सः संयोगः सम्भवति, परन्तु आलोकरूपसहकारी कारणाभावात् घनान्धकारवर्तिघटविषयकप्रत्यक्षं न सम्भवति।

द्रव्यप्रत्यक्षे त्वगिन्द्रियमपि कारणत्वेनाभ्युपगम्यते। तत्रापि त्वगिन्द्रियस्य द्रव्यरूपत्वात् घटादिद्रव्येण सह संयोगः सन्निकर्षः। त्वगिन्द्रियेण सह मनसः संयोगः, तस्य च मनसः आत्मना सह संयोगः। अतः पूर्वोक्त स्वसंयुक्तसंयुक्तसंयुक्तसम्बन्धेन घटस्य प्रत्यक्षज्ञानाश्रये आत्मनि वृत्तिता भवति। तत्र च प्रत्यक्षात्मकं ज्ञानमुत्पद्यते। अतः कार्यकारणयोः सामानाधिकरण्यं सम्भवति।

त्वचः प्रत्यक्षे आलोकस्य सहकारिकारणता नास्ति। अन्धकारवर्ति घटस्यापि त्वगिन्द्रियेण सह संयोगसन्निकर्षे सति ज्ञानमुत्पद्यते एव। अथ च चक्षुरिन्द्रियवत् त्वगिन्द्रियस्य प्राप्यकारिता नास्ति। त्वगिन्द्रियस्य तैजसत्वाभावेन बहिर्देशगमनासम्भवात्। अतः विप्रकृष्टदेशवर्तिघटस्य त्वाच्प्रत्यक्षं न सम्भवति। त्वचः प्रत्यक्षे घटादिद्रव्यस्य संयोगसन्निकर्षः कारणम्। घटादिद्रव्याणां त्वगिन्द्रियेण सह संयोगः अविप्रकृष्टदेशे एव सम्भवति। तत्र त्वगिन्द्रियस्य बहिर्गमनासम्भवात् घटादिद्रव्याणामेव इन्द्रियेण सह संयोगायापकर्षणमपेक्षते। तस्य संयोगस्य सर्वत्रापि समवायसम्बन्धेनैव कारणता सम्भवति। संयोगस्य गुणरूपत्वात् द्रव्येषु समवायसम्बन्धेनैव वृत्तिता स्वीक्रियते। यद्रूपेण संयोगस्य वृत्तिता सम्भवति तद्रूपेणैव तस्य कारणता निर्धार्यते। पूर्वं स्वसंयुक्तसंयुक्तसंयुक्तसम्बन्धेन विषयस्य ज्ञानाधिकरणे वृत्तिता संपादिता। स च ज्ञाननिष्ठप्रत्यासत्तिरुच्यते। विषयनिष्ठप्रत्यासत्तिसम्बन्धे प्रत्यक्षज्ञानस्य विषयवृत्तित्वं संसाध्यते। विषयतासम्बन्धेन घटादिविषयकप्रत्यक्षज्ञानं घटादिविषयनिष्ठं भवति। तत्रापि ज्ञानकारण-भूतस्याऽऽत्मना संयोगस्य वृत्तिताऽभ्युपेया। तस्याऽऽत्मनः संयोगरूपस्य कारणस्य स्वाश्रयसंयुक्त-संयुक्तसम्बन्धेन वृत्तिता सम्भवति। स्वं आत्मनः संयोगः तस्याऽऽश्रयः आत्मा मनश्च, मनःसंयुक्तं चक्षुरादीन्द्रियं, तत्संयुक्तश्च घटः, तेन सम्बन्धेन घटादि विषयदेशे आत्मनः संयोगस्य वृत्तिता सम्भवति। तत्र च विषयतासम्बन्धेन प्रत्यक्षात्मकं ज्ञानमपि वर्तते। अतः कार्यकारणयोः सामानाधिकरण्यं सम्भवति।

### संयुक्तसमवायसन्निकर्षस्योपयोगित्वविचारः

रूपादिगुणानां प्रत्यक्षे संयुक्तसमवायसन्निकर्षः कारणं भवति। संयुक्तसमवाय-सन्निकर्षमन्तरा रूपादिगुणानां प्रत्यक्षज्ञानं न सम्भवति। अतः संयुक्तसमवायसन्निकर्षः गुणादि-प्रत्यक्षे व्यापारत्वेन स्वीक्रियते। तथा चोक्तं न्यायसिद्धान्तमुक्तावल्यां[1] **"द्रव्यसमवेत चाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणम्।"**

द्रव्यरूपचक्षुरादीन्द्रियाणां संयुक्तसमवायसन्निकर्षं विना रूपादिगुणैः सह सम्बन्धो भवितुं नार्हति। रूपादिगुणानां घटादिद्रव्येषु समवायसम्बन्धेनवृत्तितया घटादिद्रव्येण सह चक्षुरादीन्द्रियाणां संयोगसन्निकर्षः। तत्र च समवायसम्बन्धेन वृत्तिरूपाणां गुणादीनामिन्द्रियेण सह संयुक्तसमवायसन्निकर्षः सम्भवति। चक्षुरादीन्द्रियसंयुक्तघटादिषु रूपादिगुणानां समवायसम्बन्धेन वृत्तितया स एव सम्बन्धः तेषां प्रत्यक्षज्ञाने स्वीक्रियते।

आत्मना सह मनसः संयोगः तस्य च मनसः इन्द्रियेण सह संयोगः सन्निकर्षः। मनःसंयुक्त इन्द्रियस्य घटादिद्रव्येण सह संयोगः सन्निकर्षः। तत्र च रूपादिगुणानां समवाय-सम्बन्धेन वृत्तिता भवति। अतः स्वाश्रयसंयुक्तसंयुक्तसंयुक्तसम्बन्धेन ज्ञानाश्रयाऽऽत्मनि रूपादि-गुणानां वृत्तिर्भवति। तत्र च समवायसम्बन्धेन ज्ञानस्य विद्यमानत्वात् सामानाधिकरण्येन। यतश्च विषयस्य ज्ञानजनने विषयविधया कारणता भवति। अतः कार्यकारणयोः सामाना-धिकरण्येनपेक्षते। अतः उक्तसम्बन्धेनैव रूपादिविषयाणां ज्ञानेन सह सामानाधिकरण्यं सम्भवति। उक्तञ्च न्यायमञ्जर्य्यां- **"तत्र बाह्ये रूपादौ विषये चतुष्टयसन्नि-कर्षाज्ज्ञानमुत्पद्यते, आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति।"**[2]

एवमेव रसप्रत्यक्षे रसनेन्द्रियस्यायमेव स्वसंयुक्तसमवायसन्निकर्षः रसप्रत्यक्षज्ञाने कारणं भवति। स्वं इन्द्रियं तत्संयुक्तं पृथिव्यादिद्रव्यं, तत्र च समवायसम्बन्धेन वृत्तिः रसः, अतः स एव

---

[1] न्या०सि०मु०, प्र०ख०, पृ०सं०- 201

[2] न्यायमञ्जर्य्यां, द्वितीय आह्निके, प्रमाणप्रकरणे।

सम्बन्धः रसादिप्रत्यक्षे कारणं भवति। गन्धप्रत्यक्षेऽपि अयमेव सन्निकर्षः कारणत्वेन स्वीक्रियते। अतः दूरस्थकस्तूरिकादिद्रव्यवृत्तिगन्धस्य स्वसंयुक्तसमवायसन्निकर्षाभावात् प्रत्यक्षज्ञानं न सम्भवतीति कृत्वा कस्तूरिकादिद्रव्याणां त्रणुकादिरूपेण वायुना घ्राणादिदेशे अपसर्पणं स्वीक्रियते। त्रणुकादिद्रव्याणामपसारतो भवति। वायुव्यापारेण गन्धदेशगतस्य कस्तूरिकादिद्रव्यस्य घ्राणेन्द्रियेण सह संयोगः सन्निकर्षः। तत्र च समवायसम्बन्धेन गन्धगुणस्य वृत्तितया स्वसंयुक्तसमवायसन्निकर्षः सम्भवत्येव। स च संसर्गः चक्षुरादीन्द्रियजन्यतया तदिन्द्रियजन्यज्ञानस्य जनकत्वात् व्यापारपदेनोच्यते।

तत्र रूपद्रव्यप्रत्यक्षे आलोकस्यापि सहकारिकारणतया हेतुत्वं सम्भवति। रसप्रत्यक्षे स्पर्शप्रत्यक्षे चाऽऽलोकस्य सहकारिकारणता नास्ति। एवञ्च गन्धस्पर्शेऽपि आलोकस्य सहकारिकारणता नापेक्षते। घनान्धकारस्थितस्यापि पुरुषस्य गन्धरसस्पर्शानामिन्द्रियेण सह उक्तसम्बन्धे सति प्रत्यक्षं भवत्येव। परन्तु रूपप्रत्यक्षं आलोकमन्तरा न सम्भवति। यतः चक्षुरिन्द्रियजन्यप्रत्यक्षे सर्वत्रापि आलोकस्य सहकारिकारणताऽभिमता। तत्र द्रव्यप्रत्यक्षे उद्भूतरूपत्वं महत्वञ्चापि कारणत्वेनाभिमतम्। **'गुणेषु गुणानामङ्गीकारात्'** गुणप्रत्यक्षे उद्भूतरूपत्वं कारणत्वेन नाभिमतम्। अथ च परिणामिभूतं द्रव्यमेव भवति। गुणेषु ह्रस्वत्व-दीर्घत्वास्वीकारात् महत्वमपि गुणप्रत्यक्षे कारणं न भवति।

संख्यारूपस्य गुणस्य चक्षुरिन्द्रियेण त्वगिन्द्रियेण च प्रत्यक्षज्ञानं भवति। तत्रापि स्वसंयुक्तसमवायसन्निकर्षः व्यापारत्वेनाभिमतः। तत्र चक्षुरिन्द्रियेण संख्याविषयकप्रत्यक्षे आलोकोऽपि सहकारि कारणत्वेनाभिमन्यते। आलोकसापेक्षमेव चक्षुरिन्द्रियं स्वसंयुक्त-समवायसम्बन्धेन संख्या रूपस्य गुणस्य ज्ञानजनने कारणं भवति। अतः घनान्धकारे घटादि-द्रव्यवृत्ति संख्यायाः चक्षुरादीन्द्रियेण ज्ञानं न सम्भवति।

तस्यैव संख्याभूत गुणस्य प्रत्यक्षज्ञाने त्वगिन्द्रियं सहकारिकारणत्वेन आलोकं नापेक्षते। अतः घनान्धकारे स्थितोऽपि पुरुषः स्पर्शद्वारा द्रव्यवृत्तिसंख्यायाः प्रत्यक्षं करोत्येव। आलोकस्य सहकारि रूपेण चक्षुरिन्द्रियजन्यप्रत्यक्षज्ञानम् एव कारणता विद्यते।

अस्य सम्बन्धस्य विषयतासम्बन्धेन ज्ञानजनने स्वरूपसम्बन्धेन कारणता भवति। विषयतासम्बन्धेन द्रव्यसमवेतगुणादिनिष्ठं यत् चक्षुरिन्द्रियजन्यप्रत्यक्षं तत्प्रति चक्षुस्संयुक्त-समवायः स्वरूपसम्बन्धेन कारणम्। विषयतासम्बन्धेन प्रत्यक्षं द्रव्यसमवेतगुणे वर्तते तत्र चक्षुस्संयुक्तघटादिद्रव्यसमवायः स्वरूपसम्बन्धेन वर्तते इति। एवं विषयतासम्बन्धेन द्रव्यसमवेतगुणादिसमवेतगुणत्वादिनिष्ठं चक्षुरिन्द्रियजन्यप्रत्यक्षं प्रति चक्षुस्संयुक्तसमवेतसमवायः स्वरूपसम्बन्धेन कारणमिति। स्पार्शनप्रत्यक्षादावपि तथैव रीतिः। तद्यथा विषयतासम्बन्धेन द्रव्यनिष्ठं स्पार्शनप्रत्यक्षं प्रति त्वक्संयोगः समवायेन कारणम्। विषयतासम्बन्धेन द्रव्यसमवेत-गुणादिनिष्ठस्पार्शनप्रत्यक्षं प्रति त्वक्संयुक्तसमवायः स्वरूपसम्बन्धेन कारणम्। विषयता-सम्बन्धेन द्रव्यसमवेतसमवेतगुणत्वादिनिष्ठस्पार्शनप्रत्यक्षं प्रति त्वक्संयुक्तसमवेतसमवायः स्वरूपसम्बन्धेन कारणमिति।

यद्यपि समवायस्य नित्यत्वादिन्द्रियजन्यता नास्ति। तथापि विशेषणभूतसंयोगस्य इन्द्रियजन्यतया तद्विशिष्टसमवायस्यापि जन्यता स्वीक्रियते। यथा आकाशस्य नित्यत्वेना-जन्यत्वेपि उपाधिभूतघटस्य जायमानतया घटाकाशो जातः इति व्यवहारः सम्पद्यते। तद्वदेव अत्रापि संयुक्तसमवायस्य इन्द्रियादि जन्यत्वमभिमतम्। इन्द्रियजन्यसंयुक्तसमवायस्येन्द्रियजन्य-गुणादिविषयकज्ञानस्य जनकत्वात् भवति व्यापार रूपता।

## संयुक्तसमवेतसमवायसन्निकर्षस्योपयोगित्वविचारः

यदि संयुक्तसमवेतसमवायरूपः सन्निकर्षो न स्वीक्रियेत तदा रूपादिगुणवृत्ति जातेः प्रत्यक्षत्वं न स्यात्। सन्निकर्षाभावात्। सन्निकृष्टमेव वस्तु प्रत्यक्षज्ञानेन प्रकाश्यते। प्रत्यक्षज्ञाने वस्तुनः विद्यमानत्वं अथ च इन्द्रियेण सह सन्निकृष्टत्वमापेक्षते। असन्निकृष्टं वस्तु

परोक्षात्मकेनज्ञानेन प्रकाशतां परन्तु प्रत्यक्षेण ज्ञानेनेन्द्रियासन्निकृष्टस्य वस्तुनः प्रकाशो न सम्भवति।

रूपादिगुणवृत्तिजातिः समवायसम्बन्धेन रूपादिगुणेषु वर्तते। चक्षुरादीन्द्रियाणां रूपादिगुणवृत्तिजात्या सह साक्षात्सम्बन्धो नास्ति। अतः असम्बद्धस्य जातिरूपवस्तुनः प्रकाशो न सम्भवति। भवति च प्रत्यक्षज्ञानेनापि गुणवृत्तिजातेः प्रकाशः। अतस्तादृशः कश्चिद्सम्बन्धः अभ्युपेयः। येन सम्बन्धेन गुणवृत्ति जात्यः सः चक्षुरादीन्द्रियाणां सम्बन्धः स्यात्। स च सम्बन्धः संयुक्तसमवेतसमवायरूपः। एतत्सम्बन्धेन गुणादिवृत्तिजातिः इन्द्रियेण सह सम्बद्धा भवति। तद्यथा- चक्षुरादीन्द्रियाणां द्रव्यत्वेन घटादिद्रव्येण सह संयोगः सन्निकर्षः। तत्र चक्षुरादीन्द्रियसंयुक्ते द्रव्ये गुणः समवायसम्बन्धेन वर्तते। तत्र च गुणे रूपत्वादिजातिः समवायसम्बन्धेन वर्तते। अतः स एव संयुक्तसमवेतसमवायरूपः चक्षुरादीन्द्रियगुणवृत्तिजात्योः सम्बन्धः उच्यते।

अस्यापि सन्निकर्षस्य व्यापारत्वमभ्युपगम्यते। समवायस्य नित्यत्वेन अजायमानतया इन्द्रियजन्यत्वं यद्यपि नास्ति। तथापि तद्विशेषणीभूतसंयोगस्येन्द्रियजन्यतया विशिष्टस्यापि संयुक्तसमवेतसमवायस्य जन्यत्वं स्वीक्रियते। अथ च चक्षुरादीन्द्रियजन्यगुणादिवृत्ति जातिविषयकज्ञानस्य जनकमपि संयुक्तसमवेतसमवायसन्निकर्षस्यास्ति। अतः **तज्जन्यत्वे सति तज्जन्यजनकत्वरूप व्यापारलक्षणस्य** संगति भवति।

## समवायसन्निकर्षस्योपयोगित्वविचारः

शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः सन्निकर्षः। शब्दस्य आकाशगुणत्वात्श्रोत्रात्मक-आकाशेन्द्रिये समवायसम्बन्धेन वर्तते। गुणगुणिनोः समवायातिरिक्तसम्बन्धस्यास्वीकारात्। अतः शब्दप्रत्यक्षे समवायः सन्निकर्षः कारणं भवति। येन सम्बन्धेन इन्द्रियं विषयं सम्बध्नाति स एव विषयेन्द्रिययोः सन्निकर्षः स्वीक्रियते। यद्यपि शब्दः आकाशे समवायसम्बन्धेन सदैव वर्तते। श्रोत्रेन्द्रियस्य आकाशरूपत्वात्शब्दः सम्बद्ध एवाऽस्ति। तथापि शब्दस्य प्रत्यक्षे

श्रोत्रानुयोगिकसमवायः कारणम्। एतेन यदा श्रोत्रदेशावच्छिन्नाऽऽकाशेन सह समवायः शब्दस्य भवति तदैव शब्दस्य प्रत्यक्षत्वं जायते। अतो न देशान्तरीणशब्दस्य प्रत्यक्षत्वम्।

## समवेतसमवायसन्निकर्षस्योपयोगित्वविचारः

शब्दवृत्तिशब्दत्वरूपजातिप्रत्यक्षे समवेतसमवायः सन्निकर्षः। यदि समवेतसमवायः सन्निकर्षः न स्वीक्रियेत तदा शब्दवृत्तिशब्दत्वजातेः आकाशात्मकश्रोत्रेण सः सम्बन्धः न स्यात्। श्रोत्रेन्द्रियेणासम्बद्धायाः शब्दत्वरूपजातेः प्रत्यक्षात्मक ज्ञानेन प्रकाशोऽपि न स्यात्। शब्दत्वजातेः श्रोत्रेन्द्रियासम्बद्धत्वात्। समवेतसमवायसन्निकर्षस्वीकारे च श्रोत्रेन्द्रियस्य आकाशात्मकद्रव्यतया तत्र शब्दरूपगुणस्य समवायसम्बन्धेन वृत्तितया तत्र च शब्दे शब्दत्वजातेः समवायसम्बन्धेन वृत्तित्वेन समवेतसमवायः सन्निकर्षः श्रोत्रेन्द्रियशब्दगतशब्दत्वजात्योः सम्बन्धः। समवेतसमवायसन्निकर्षरूप-सम्बन्धेन श्रोत्रेन्द्रियं शब्दवृत्तिशब्दत्वजातिरूपविषयं सम्बध्नाति। तत्र च पूर्वोक्त सम्बन्धेन आत्ममनसाऽपि सम्बन्धः अस्त्येव। एतेन सम्बन्धेन कार्यकारणयोः सामानाधिकरण्यं सम्भवति।

अत्रापि समवायरूपसन्निकर्षस्य नित्यत्वस्वीकारे समवायसन्निकर्षस्य समवेतसमवाय-सन्निकर्षस्य च व्यापारत्वं न स्यात्। उक्त सम्बन्धस्य नित्यत्वात् तज्जन्यत्वे सति तज्जन्य-जनकत्वरूपलक्षणस्य तज्जन्यत्वरूपविशेषणस्यासंगतेः। अत्रोच्यते समवायस्य यद्यपि स्वरूपेण नित्यत्वमेकत्वञ्च स्वीक्रियते, तथापि समवायसम्बन्धेन सम्बद्धवस्तुभेदेन समवायस्यापि भेदः स्वीक्रियते। तत्र जात्यादीनां नित्यत्वेन द्रव्यगुणकर्मसु वृत्तिर्भवति। स च वृत्तिः समवायसम्बन्धेन स्वीक्रियते। अत्र जातेः नित्यतया तस्य समवायरूपसम्बन्धस्यापि नित्यत्वं स्वीक्रियते। अतः व्यक्तिषु जातिः समवायसम्बन्धेन नित्यवृत्तिः। अतः एष समवायसम्बन्धः नित्यः, परन्तु जायमान गुणादीनामपि द्रव्येन सह समवायः सन्निकर्षः स्वीक्रियते। गुणादीनामनित्यत्वेन एष समवायः सन्निकर्षः अनित्येव। समवायसम्बन्धेन गुणः नित्यं द्रव्यवृत्तिः इति व्यवहारो न भवति। अतः अयं समवायः सम्बन्धिशब्दस्य जन्यत्वेन जन्यः इति स्वीक्रियते। एतेन तज्जन्यजनकत्वरूप-व्यापारलक्षणस्य संगतिर्भवति। समवेतसमवायसम्बन्धे समवायद्वयं एकः समवायः

शब्दश्रोत्रेन्द्रिययोः अपरश्च समवायः, शब्दशब्दत्वजात्योः। तत्र प्रथमः सम्बन्धः सम्बन्धिशब्दस्य जायमानतया जायमानः इति स्वीक्रियतः। परन्तु द्वितीयः यः शब्दशब्दत्वयोः सम्बन्धः स न जायमानः। शब्दत्व जातेः नित्यत्वात्। तत्र व्यापारलक्षणस्य संगतिर्न भविष्यति। तथापि विशेष्यणीभूतश्रोत्रेन्द्रियशब्दसम्बन्धस्य जायमानतया विशिष्टेऽपि जायमानत्वं स्वीक्रियते। अतः तज्जन्यत्वे सति तज्जन्यजनकत्वरूप व्यापारलक्षणस्य समवाय, समवेतसमवाययोरपि संगतिर्भवति। व्यापारलक्षणमन्तरा उक्तसन्निकर्षयोः व्यापारत्वं न स्यात्। तयोः व्यापारत्वाभावे श्रोत्रेन्द्रियस्य करणत्वमपि न संगच्छेत। अतः व्यापारत्वं समवाय, समवेतसमवायोरपि स्वीकर्तव्यमेव।

## नित्यद्रव्यप्रत्यक्षे सन्निकर्षस्वरूपविचारः

आकाशादिनित्यद्रव्याणां सर्वेषां प्रत्यक्षयोग्यता नास्ति। तत्र आकाशस्य निरूपत्वात्प्रत्यक्षयोग्यता न सम्भवति। बाह्येन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपत्वं महत्वञ्च कारणं भवति। आकाशस्य महत्वरूपत्वेऽपि उद्भूतरूपत्वाभावात्प्रत्यक्षयोग्यता नास्ति। एवमेव दिक्कालयोरपि रूपवत्वाभावात् प्रत्यक्षयोग्यता नास्ति। प्रत्यक्षरूपकार्यसत्वे एव तज्जनकसन्निकर्षादिरूपकारणं कल्प्यते। यदि च आकाशकालदिशां प्रत्यक्षयोग्यता नास्ति तदा प्रत्यक्षजनकसन्निकर्षस्य कल्पनमयुक्तम्। एवं मनसोऽपि प्रत्यक्षयोग्यता नास्ति। तस्य परमाणुरूपतया महत्वाभावादुद्भूतरूपत्वाभावाच्च। नित्यद्रव्येषु आत्मनि एव प्रत्यक्षत्वं स्वीक्रियते।

## आत्मप्रत्यक्षे सन्निकर्षस्वरूपविचारः

आत्मप्रत्यक्षे आत्मनः संयोगः सन्निकर्षः। मनसः इन्द्रियत्वात् समवायसम्बन्धेन आत्मनि सम्बद्धते। संयोगस्योभयनिष्ठत्वात् मनोरूपेन्द्रियजन्यत्वे सति मनोरूपेन्द्रियजन्याऽऽत्मप्रत्यक्षस्य जनकत्वात् तज्जन्यत्वे सति तज्जन्यजनकत्वरूप व्यापारस्य संगतिर्भवति। यद्यपि आत्मापि नीरूप एव तथापि द्रव्यप्रत्यक्षे उद्भूतरूपत्वं बाह्येन्द्रियजन्यप्रत्यक्षे एव कारणम्। मनसो अन्तः

इन्द्रियत्वात् तज्जन्यप्रत्यक्षे उद्भूतरूपत्वस्य कारणता नास्ति। नित्यद्रव्येषु आत्मनः एव प्रत्यक्षत्वमनुभव सिद्धम्। नान्येषां नित्यद्रव्याणामिति।

## सुखादिप्रत्यक्षे सन्निकर्षस्वरूपविचारः

आत्मवृत्तिप्रत्यक्षयोग्यसुखादिविशेषगुणानां प्रत्यक्षे संयुक्तसमवायसन्निकर्षः। सुखादिविशेषगुणानां समवायसम्बन्धेनात्मनि वृत्तिता भवति। आत्ममनसो संयोगः सन्निकर्षः। मनः संयुक्ते आत्मनि समवायसम्बन्धेन वृत्तीनां सुखादिरूपात्मगुणानां प्रत्यक्षे संयुक्तसमवायः सन्निकर्षः स्वीक्रियते। मनसः आत्मनः सह संयोगः सन्निकर्षः। तेन सम्बन्धेनाऽऽत्मा मनःसंयुक्तः, तत्र च प्रत्यक्षयोग्याऽत्मगुणानां प्रत्यक्षे सन्निकर्षरूपव्यापारद्वारा कारणं भवति।

## विशेष्यविशेषणभावसन्निकर्षस्योपयोगित्वविचारः

अभावप्रत्यक्षे समवायप्रत्यक्षे च विशेषणताख्यसन्निकर्षः व्यापारत्वेन कारणं भवति। यदि विशेषणताख्यसन्निकर्षः न स्वीक्रियेत तदा समवायाभावयोः प्रत्यक्षत्वं न स्यात्। विशेषणताख्यसन्निकर्षमन्तरा इन्द्रियेण सह अभावस्य कश्चिदपि सम्बन्धः नोपयुज्यते। तद्यथा-भूतले घटाभावप्रत्यक्षस्थले चक्षुरादीन्द्रियसंयुक्तभूतले विशेषणं घटाभावः स्वरूपसम्बन्धेन वर्तते, स्वरूपसम्बन्धावच्छिन्नवृत्तिता एव विशेषणता, विषयता, इत्युच्यते सा च घटाभावे वर्तते, अतोऽभावप्रत्यक्षे इन्द्रियसम्बद्धविशेषणतासन्निकर्षो हेतुः। एवं **रूपसमवायवान् घटः** इत्यत्र समवायप्रत्यक्षस्थले चक्षुःसम्बद्धघटे विशेषणं समवायः स्वरूपसम्बन्धेन वर्तते, विशेषणतारूपा विषयता समवायनिष्ठा, अतः समवायप्रत्यक्षे इन्द्रियसम्बद्धविशेषणतासन्निकर्षः कारणम्। विशेषणविशेष्यभावाख्यः षष्ठः सन्निकर्षो बोध्यः, स च द्विधा विभिद्यते इन्द्रियसम्बद्धविशेष्यत्वम्, इन्द्रियसम्बद्धविशेषणत्वञ्चेति। यदा **'भूतले घटाभाव'** इति प्रत्ययस्तदा **'भूतलवृत्तितावान् घटाभावः'** इति तदर्थत्वात्घटाभावो विशेष्यपदार्थः, भूतलं तु वृत्तितासम्बन्धेन घटाभावे विशेषणं भवति, तत्र घटाभावप्रत्यक्षे चक्षुःसंयुक्तभूतलनिरूपित-

विशेष्यताख्यः सन्निकर्षो हेतुः बोध्यः। **घटाभाववद् भूतलमिति** यदा प्रत्ययस्तदा घटाभावो भूतले विशेषणं भवतीति तत्र चक्षुस्संयुक्तभूतलनिरूपितविशेषतासन्निकर्षो हेतुर्बोध्य।

एषां मते समवायस्य प्रत्यक्षत्वमभिमतं तेषां नये चक्षुरादीन्द्रिसंयुक्तविशेषणताख्यसन्निकर्षः स्वीक्रियते। चक्षुःसंयुक्तं भूतलादिद्रव्यं तत्र स्वरूपसम्बन्धेन समवायस्य वृत्तिता। वैशेषिकमते तु समवायस्य प्रत्यक्षत्वं नाभिमतम्। यदि समवायः प्रत्यक्षः स्यात्तर्हि रूपादिसमवायवतां परमाण्वादीनामपि प्रत्यक्षापत्तिः स्यात्, समवायस्यैकतया च एकदा भाविभूतसकल-समवायाश्रयव्यक्तीनां प्रत्यक्षापत्तिश्च, सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात्, अतः समवायो न प्रत्यक्षम् इति वैशेषिका वदन्ति।

गौतमाः नव्यास्तु सम्बन्धप्रत्यक्षत्वं न कार्यतावच्छेदकं, किन्तु यावदाश्रयप्रत्यक्षस्य कार्यतावच्छेदकं संयोगप्रत्यक्षत्वमेव, तथा च समवायप्रत्यक्षे न वैशेषिकोक्ताऽऽपत्तिरिति समवायप्रत्यक्षं मन्तव्यमिति वदन्ति।

अयञ्च विशेषणताख्यसंसर्गः प्रतियोगिभेदेन भिन्नाभावानां प्रत्यक्षजनने नानारूपता-मधिगच्छते। उक्तञ्च न्यायसिद्धान्तमुक्तावल्यां[1] "**विशेषणता नानाविधा**"। अत्र विशेषणता-सन्निकर्षस्य प्रत्यक्षेण सह कार्यकारणभावस्थले, विशेषणतासम्बन्धेन्द्रियतत्सन्निकर्षभेदेन **'इन्द्रियसम्बद्ध'** इति विशेषणभेदाद् बहुविधो भवति, तेन विशेषणतासन्निकर्षः एकः षष्ठसंख्यापूरक इति कथनं न भवति सङ्गतम्, तथापि विशेषणतात्वेन एकेन धर्मेण विशेषणतानामेकत्वव्यवहारः, अतः षष्ठसंख्यापूरकतया स्वीकृतो वेदितव्य इति भावः।

उक्तञ्च न्यायमुक्तावल्यां "**संख्यादौ रूपाद्यभावः स्वसंयुक्तसमवेतविशेषणतया। संख्यात्वादौ रूपाद्यभावः स्वसंयुक्तसमवेतसमवेतविशेषणतया।**"[2] प्रथमस्तावत्घट-स्थायामेकत्वसंख्यायां गुणे रूपाऽभावो वर्तते। तस्य प्रत्यक्षं प्रति चक्षुस्संयुक्तघटसमवेतसंख्या-

[1] न्या०सि०मु०, प्रथमखण्ड, पृ० 204
[2] न्या०सि०मु०, प्रथमखण्ड, पृ० 205

विशेषणतासन्निकर्षः कारणम्। द्वितीये तु घटस्थैकत्वसंख्यावृत्तिसंख्यात्वे जातौ रूपाऽभावो वर्तते तस्य प्रत्यक्षं प्रति चक्षुस्संयुक्तघटसमवेतसंख्यासमवेतसंख्यात्वविशेषणतासन्निकर्षः कारणम्।

श्रोत्रे यः शब्दाऽभावस्तस्य प्रत्यक्षं प्रति श्रोत्रवृत्तिविशेषणतासन्निकर्षः कारणम्। श्रोत्रवृत्तिककारे खत्वजातेरभावो वर्तते तस्य प्रत्यक्षं प्रति श्रोत्रसमवेतविशेषणतासन्निकर्षः कारणम्। एवमाऽऽकाशात्मकश्रोत्रे यः कत्वावच्छिन्नस्य ककारस्याऽभावो वर्तते तत्राऽभावे गत्वजातेरभावो वर्तते तस्य प्रत्यक्षं प्रति श्रोत्रविशेषणककाराभावविशेषणतासन्निकर्षः कारणम्, श्रोत्रे विशेषणं ककाराभावः, ककाराभावे विशेषणं गत्वजातेरभाव इति। एवं भूतले यो घटाभावस्तत्र वर्तते यो पटाभावस्तत्र प्रत्यक्षं प्रति चक्षुस्संयुक्तभूतलविशेषणं घटाभाव-विशेषणता पटाभावनिष्ठसन्निकर्षः कारणम्।

उक्तविधविशेषणताख्यसन्निकर्षाणामभावे कथिताभावानां प्रत्यक्षत्वं न स्यात्। अतः विशेषणताख्यसन्निकर्षभ्युपेयः। तत्राभावस्य स्वस्वरूपतः एकत्वेऽपि प्रतियोगिभेदेन भिन्नताऽस्ति। अथ च तस्यैवाभावस्य तत्तत्पदार्थेषु स्वरूपसम्बन्धेन वृत्तिताऽपि भिद्यते। वृत्तिताभेदेन विशेषणता च भिद्यते। विशेषताभेदेनाभावप्रत्यक्षजनकविशेषणताख्यसन्निकर्षस्य भेदः सर्वैः दार्शनिकैः अभिमता।

वेदान्तिनः भाट्टमीमांसकाश्चाभावप्रत्यक्षे अनुपलब्धिप्रमाणं पृथग्रूपेण स्वीकुर्वन्ति। अतः तेषां नये उक्तविशेषणताख्यसंसर्गस्याऽवश्यकता नास्ति। ते चाभावस्याधिकरणा-तिरिक्तत्वेन स्वरूपं न स्वीकुर्वन्ति। भूतले घटाभावः इत्यत्र प्रतीतौ घटप्रतियोगिकाभावस्य भूतलरूपतैवास्ति प्रतीतिमह्निना कस्यापि पदार्थस्य स्वीकारे **'एष बन्ध्या सुतो याति'** इति वाक्यजन्य प्रतीतौबन्ध्यापुत्रस्य भानात्बन्ध्यापुत्रस्यापि स्वीकारापत्तिर्स्यात्। अतः भूतले घटाभावः इति प्रतीत्याऽभावपदार्थस्याभिमतिः अनुपपन्ना।

## अलौकिकसन्निकर्षाणामुपयोगित्वविचारः

लौकिकसन्निकर्षाणामिव अलौकिकसन्निकर्षोऽपि प्रत्यक्षज्ञानजनने कारणानि भवन्ति। ते च त्रयः। उक्तञ्च कारिकावल्यां-[1]

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा॥**

उक्त सन्निकर्षाणां लोके अप्रसिद्धतया यद्वा लोके प्रसिद्धसंयोगादिभिन्नतया अलौकिकत्वं स्वीक्रियते। इमे सन्निकर्षाः पदार्थप्रतीतिवशात्शास्त्रगम्या सन्ति।

## सामान्यलक्षणासन्निकर्षस्योपयोगित्वविचारः

उक्तसन्निकर्षघटकसामान्यपदं जातेः व्यक्तेश्च बोधकम्। लक्षणपदञ्च स्वरूपपरम्। सामान्यं जातिः घटादिव्यक्तिश्च, तदेव लक्षणं स्वरूपमात्मा यस्येति व्युत्पत्या जात्यात्मको व्यक्त्यात्मकश्च सन्निकर्षः सामान्यलक्षणा पदेनोच्यते। सामान्यलक्षणाख्यसन्निकर्षो न स्वीक्रियेत तदा एकस्यां धूमव्यक्तौ एकस्याः व्यक्तेः व्याप्तिगृहीता सति सर्वासु धूमव्यक्तिषु सर्वाषां वह्निव्यक्तीनां व्याप्तिग्रहो न स्यात्। सामान्यलक्षणास्वीकारे तु महानसीयधूमव्यक्तौ महानसीयवह्निव्यक्तेः अव्यभिचरितसाहचर्यरूपव्याप्तिग्रहे सति सर्वासु धूमव्यक्तिषु सर्वासां वह्निव्यक्तीनाम-व्यभिचरितसाहचर्यरूपव्याप्तिग्रहो न स्यात्। तेन पर्वतादौ धूमदर्शनेन वह्निव्याप्तेः स्मरणमपि न स्यात्। यतश्च पर्वतीयधूमव्यक्तौ महानसीयधूमव्यक्तेः पूर्वं व्याप्तिग्रहो नास्ति। व्याप्तिग्रहा-ऽभावात्व्याप्तिस्मरणमपि न भवेत्।

सामान्यलक्षणासन्निकर्षस्वीकारे हि एकस्यां महानसीयधूमव्यक्तौ एकस्याः महानसीय-वह्नेः व्याप्तिग्रहे सति धूमत्वरूपसामान्येन सर्वासु धूमव्यक्तिषु वह्नित्वरूपसामान्येन सर्वासां वह्निव्यक्तीनां साहचर्यग्रहो भवति। अतः वह्नित्वेन सकलवह्नीनां धूमत्वेन सकलधूमेषु व्याप्तिज्ञानं सम्भवति। अतः पर्वतीयधूमदर्शनेनापि **'अयं धूमः वह्निव्याप्यः'** इति व्याप्तिस्मरणपूर्वक

---
[1] न्या०सि०मु०, प्र०ख०, का०सं०-63

पर्वतवृत्तितया **'वह्निव्याप्यधूमवानयं पर्वतः'** इति परामर्शात्मकं ज्ञानं जायते। ततश्चायं पर्वतः वह्निमानित्याकारकानुमितिरपि भवति।

## ज्ञानलक्षणसन्निकर्षस्योपयोगित्वविचारः

ज्ञानं लक्षणं स्वरूपं यस्य प्रत्यासत्तेः स ज्ञानलक्षणप्रत्यासत्तिः। यदि ज्ञानलक्षणप्रत्यासत्तिः न स्वीक्रियेत तदा चन्दनखण्डदर्शनेन सौरभस्य प्रत्यक्षत्वं न स्यात्। अतः ज्ञानलक्षणं प्रत्यासत्तिरूपसन्निकर्षः स्वीक्रियते। तत्र येन पुरुषेण पूर्वं चन्दनखण्डे सौरभं गृहीतं सः पुरुषः यदा चन्दनखण्डं पश्यति तदा चन्दनखण्डवृत्ति सौरभमपि प्रत्येति। उक्तञ्च[1]-

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः।**

चन्दनखण्डे पूर्वं सौरभज्ञानवतः पुरुषस्यैव पश्चात् चन्दनखण्डदर्शनेन सौरभस्य प्रतीतिर्भवति। प्रथमदिवसे चन्दनं घ्रात्वा **''सुरभि चन्दनमि''**ति निश्चित्य दिवसान्तरेऽघ्रात्वैव दूरतश्चन्दनदर्शनमात्रेण **'सुरभिचन्दनमि''**ति ज्ञाने सौरभं चन्दनं चन्दनत्वं चेति भासते। तत्र चक्षुस्संयोगेन चन्दनज्ञानं, चक्षुस्संयुक्तसमवायेन चन्दनत्वज्ञानं लौकिकसन्निकर्षजन्यत्वात् लौकिकप्रत्यक्षमुच्यते, परन्तु घ्राणसम्बन्धं विनाऽपि सौरभज्ञानं यत्जातं तत्तु चक्षुस्संयुक्तमनः-संयुक्तात्मसमवेतज्ञानाख्येन सन्निकर्षेण संस्कारद्वारा जनितमलौकिकमेव प्रत्यक्षं बोध्यमिति। न च सौरभांशे स्मरणमपि वाच्यम्। स्मृतित्वप्रत्यक्षत्वयोः साङ्कर्यापत्तिभिया **''सुरभि चन्दनमि''**ति विशिष्टज्ञानस्यैकस्यैव स्वीकारात्।

## योगजसन्निकर्षस्योपयोगित्वविचारः

योगिनः आसन्निकृष्टमपि विषयं प्रत्यक्षी कुर्वन्ति। तत्र सन्निकर्षः योगजः सन्निकर्षः। स च योगाभ्यासेन जायमानः धर्मविशेषः। उक्तञ्च[2]-

**''योगाभ्यासजनितो धर्मविशेषः''।**

---

[1] न्या०सि०मु०, प्र०ख०, का०सं० 65

[2] न्या०सि०मु०, प्र०ख०,

एतत्सन्निकर्षे श्रुतिस्मृतिपुराणादयः मानानि सन्ति। श्रुतयस्तावत् **''तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति''**[1]। **''न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञान प्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः''**[2]। **''ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मनः सर्वमेवाविशन्ति।''**[3]

युक्तयुञ्जान भेदेन योगी द्विधा। तद्द्वैविध्येन योगजरूपः सन्निकर्षोऽपि द्विधा-

**'योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः।'**[4]

तत्र युक्तयोगि पक्वयोगि शब्देनापि उच्यते। युञ्जानस्यापक्वयोगिपदेनोच्यते। युक्तयोगी सर्वदैव सर्वान् विषयान् प्रत्यक्षीकरोति। युक्तयोगिनः योगजधर्मः ईश्वरप्रणिधान-जन्यानुग्रहविशिष्टज्ञाप्रसादात्मकधर्मः, तत्सहायेन, मनसा अन्तःकरणेन, आकाशपरमाण्वादयो ये निखिला पदार्थास्तेषां ज्ञानमलौकिकप्रत्यक्षात्मकं सर्वदैव मध्ये तिरोभावरहितमेव भवति।

युञ्जानयोगिनस्तु ध्यानधारणाद्यात्मकसंयमरूपश्चिन्ताविशेषः सहकारी, संयमसहकृत-पुण्यान्वितमनसा यद्विषयकसंयमस्तद्विषयकमलौकिकसाक्षात्कारात्मकं ज्ञानं भवतीति भावः। यद्यदिन्द्रियस्य यद्योग्यं स्थूलं सूक्ष्मं सन्निकृष्टं विप्रकृष्टं भूतं भव्यं च तत्सर्वमपि योगाभ्यास-जनितधर्मविशेषसहकृततत्तदिन्द्रियजन्याऽलौकिकसाक्षात्कारविषयं भवतीति नियमः, न त्वन्ये-न्द्रियविषयस्याऽन्येन्द्रियसाक्षात्कारविषयत्वमिति, अत एव च **''तत्राप्यतिशयो दृष्टः स्वस्वार्थानतिलंघनात्। स्थूलसूक्ष्मादिबुद्धौ स्यात् तत्र रूपे श्रोतृवृत्तिता''** इति प्रशस्तपादाचार्य्योक्तिरपि संगच्छते।

---

1 कठवल्ली, अ-1, व-2, मं-12
2 मु0-3, खं-1, मं-8
3 मु0-3, खं-2, मं-5
4 न्या0सि0मु0, प्र0ख0- का0सं0- 65

## (ग) सन्निकर्षविषये प्रमाणविचारः

चक्षुरादीन्द्रियाणि विषयैः सह असन्निकृष्टान्नेव विषयप्रकाशकानि भवन्तु नाम किमर्थं सन्निकर्षस्यापेक्षा? अत्रोच्यते- यदीन्द्रियाणि विषयैः सह असन्निकृष्टानि विषयप्रकाशकानि स्युस्तदा सर्वदैव विषयाणां प्रत्यक्षं स्यात्। विषयास्तु सर्वदा विद्यमानाः एव सन्ति, अथ चेन्द्रियाण्यपि तत्तदवच्छेदेन शरीरे विद्यमानानि सन्ति। अतः जाग्रतकाले सर्वदा प्रत्यक्षज्ञानेन विषयप्रकाशः स्यात्। अथ च सुसुप्तिकाले इन्द्रियाणि मनसि लीनानि भवन्ति। तत्रैव संस्कारात्मना विषयाः अवतिष्ठन्ते। अतः तत्र यथा सन्निकर्षमन्तरा विषयप्रकाशः तद्वज्जागरणे विषयः स्वास्वाऽधिष्ठानभूतेष्ववयवेषु विद्यमानाः सन्ति।

इन्द्रियाणां सन्निकर्षमनपेक्ष प्रकाशकत्वे सर्वदैव प्रकाशः स्यात्। अतः प्रत्यक्षज्ञाने व्यापाररूपत्वेन सन्निकर्षाः अपेक्ष्यन्ते। सन्निकर्षस्वीकारे व्यवहितानुपलब्धिरेव मानम्। यतः इन्द्रियव्यवहितस्य विषयस्य प्रत्यक्षत्वं न सम्भवति, अतः व्यवधाननिरासाय सन्निकर्षरूपो व्यापारः स्वीक्रियते। उक्तञ्च न्यायमञ्जर्यां-

**"यदि ह्यसन्निकृष्टमपि चक्षुरादीन्द्रियमर्थं गृह्णीयाद्व्यवहितोऽपि ततोऽर्थ उपलभ्येत, न चोपलभ्यते, तस्मादस्ति सन्निकर्षः।"**[1]

यदि अव्यवधानार्थं सन्निकर्षाः स्वीक्रियन्ते तदाऽव्यवधानमेव कारणत्वेन कथन्नाभ्यु-पगच्छेत्। तदोच्यते- इन्द्रियाणां विषयैः सह स्वोऽव्यवधानं न सम्भवति। घटादिविषयाः स्वदेशे स्थिताः इन्द्रियाणि च स्वस्वगोलकेषु स्थितानि सन्ति। अतः इन्द्रियाणां विषयैः सह व्यवधानमेवास्ति। अथ च इन्द्रियाणि ज्ञानजनकत्वेन कारकाणि सन्ति। अतः तेषां प्राप्य-कारित्वमावश्यकम्।

---

[1] न्या०म०, प्रमाण प्र०, पृ० 114

"इन्द्रियाणां कारकत्वेन प्राप्यकारित्वात्, संसृष्टश्च कारकं फलाय कल्पत इति कल्पनीयः संसर्गः।"[1]

इन्द्रियाणां विषयैः सह सन्निकर्षः सर्वैः दार्शनिकैः अभिमतः। सन्निकर्षमन्तरा विषयस्य प्रकाशाऽसम्भवात्। न्यायनये तु प्रथमलक्षणे आत्मनः संयोगः, मन इन्द्रियसंयोगश्च, तत इन्द्रियविषयसंयोग इति तृतीयक्षणे प्रत्यक्षमुत्पद्यत इति क्रमः प्रसिद्धः।[2] तन्मते मनसो विषयाकारः परिणामो नाङ्गीक्रियते, मनसः परमाणुरूपनित्यद्रव्यत्वेन[3] परिणामासम्भवात्। बुद्धेश्च ज्ञानरूपगुणत्वेन[4] तदसम्भवात्।

### सांख्यदर्शने सन्निकर्षोपयोगित्वविचारः

सांख्यदर्शनेऽपि प्रत्यक्षज्ञानजनने इन्द्रियाणि सन्निकर्षानिच्छन्ति। तत्र हि- बाह्येन्द्रियाणि विषयमालोच्य मनसे समर्पयन्ति, मनश्च संकल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य सर्वाध्यक्षभूतायां बुद्धौ समर्पयति, बुद्धिस्तु पुरुषसन्निधानात्तच्छायापत्त्या तद्रूपेव सर्वविषयोपभोगं पुरुषस्य साधयति। सुखदुःखाऽनुभवो हि भोगः, स च बुद्धौ, बुद्धिश्च पुरुषप्रतिबिम्बात् पुरुषरूपेति पुरुषमुपभोजयति।

यथार्थलोचनाभिमानसंकल्पास्तत्तद्रूपपरिणामेन बुद्धावुपसङ्क्रान्ताः, तथेन्द्रियव्यापाराऽपि बुद्धेरेवाध्यवसायात्मकव्यापारेण सहैकव्यापारीभवन्तीति बुद्धेः स्वव्यापारेण पुरुषस्य भोगसाधनत्वमिति निर्णीतम्।[5]

इयान् विशेषः- चतुर्विधस्य बुद्ध्यादिकरणस्य युगपदपि व्यापारः कदाचन भवति। यथा सन्तमसे विद्युत्प्रकाशे व्याघ्रमभिमुखं यदा पश्यति, तदा बुद्ध्यादीनां संयोगा एकस्मिन्नेव क्षणे,

---

1 पूर्ववत्
2 न्या०द०, वा०भा०- 1/1/4
3 त०स०, प्र०खं०
4 न्या०द०, अ०-1, सूत्र०-15
5 सां०त०कौ०, कारिका- 36-37

लोचनसंकल्पाभिमानाध्यवसाया अपि द्वितीये एव क्षणे भवन्ति। अवधानदशायां क्रमशोऽपि व्यापारा भवन्ति। तदानीं तु पञ्चमे क्षणे विषयालोचनम्, अष्टमक्षणे बुद्धेरध्यवसाय इति बोध्यम्।[1]

## व्याकरणदर्शने सन्निकर्षस्योपयोगित्वविचारः

व्याकरणदर्शनेऽपि सन्निकर्षसापेक्षमिन्द्रियमेवज्ञानं जनयति। तत्र ज्ञानोत्पत्तिक्रमः आत्माबुद्धिः संयुज्यते, बुद्ध्या सहाहङ्कारः, ततस्तेन मनः, तेन च सहेन्द्रियाणि, तैश्च सह विषय इति पञ्चमक्षणे प्रत्यक्षात्मकज्ञानोत्पत्तिः।

अयं भावः- बुद्धिमारभ्य विषयं यावत् संयोगे चत्वारः; क्षणा रुपयोक्ष्यन्ते। आत्मनस्तु विभुत्वेनाहङ्कारादिना सह बुद्धेः संयोगक्षणे एव संयोग इति न स्वतन्त्रकालापेक्षा, अतः पञ्चमे क्षणे प्रत्यक्षोत्पत्तिः। इत्यमेव प्रक्रिया योगदर्शनेऽपि सम्मतास्ति।[2]

यद्यपि वाक्यपदीयटीकाकृता श्रीहेलाराजेन 'आत्मेन्द्रियार्थमनोऽर्थसन्निकर्षात् प्रत्यक्षं भवतीत्युक्तम्।[3] तत्र स्फुटं क्रमो न निर्दिष्टः, तथापि उपरिनिर्दिष्टः क्रमस्तेनाऽप्यादृत एव। अक्रमेण ज्ञानोत्पादाननुभवात्। मनः पदस्य बुद्ध्यहङ्कारयोश्चाप्युपलक्षणत्वाच्च। प्रदीपकृत्कैयटोऽप्याह- **"वक्ष्यमाणस्य बुद्ध्या प्रत्यक्षीकृत्य परामर्शः"**[4] इति। क्रमवत्ता श्रीनागेशभट्टेनाऽपि समर्थिता।[5] उक्त हेलाराजवाक्ये प्रत्यक्षे अर्थपदस्य द्विरुक्त्या इन्द्रिय-विशिष्टस्यैव मनसो विषयकारा वृत्तिरित्यपि सूच्यते।

## वेदान्तनये सन्निकर्षस्योपयोगित्वविचारः

वेदान्तदर्शनेऽपि वृत्तिरूपज्ञानजनने संयोगादिसन्निकर्षाणामुपयोगिता भवत्येव। सा चेयं चित्तस्य विषयाकारपरिणामरूपा वृत्तिरिन्द्रियेण सहैव। अत एव रसनेन्द्रियगत्ताख्यदोषसम्बन्धेन

---

1 सां०त०कौ०, का०- 30
2 यो०द०, सूत्र०- 1/36
3 वा०प०, तृ०का०, साधनसमु०, श्लो०-12
4 म०भा०, प्र०, अ०-7, 3 पा०, सूत्र-44
5 म०भा०, उ०, अ०-5, 3 पा०, आ०-1

'**गुडः कटुः**', नयनगतपत्तियोगेन च '**शंखः पीतः**' इति प्रतीयते। पीतांशे सा भ्रमरूपा, शङ्खांशे तु प्रमारूपा। सर्वं हि ज्ञानं धर्मिण्यभ्रान्तम्, प्रकारांशे तु विपर्यय इति सर्वैरभ्युपगमात्। सेयं वृत्तिर्विषयाऽवच्छिन्ने पुरुषे प्रतिबिम्बिते[1] इति पुरुषस्य विषयाकारेण विद्यमानवृत्तिग्राहकत्वम्। प्रतिबिम्बोऽपि परिणामविशेष एव, न त्वादर्शादाविव प्रतिबिम्बः, उभयोरपि नीरूपत्वादान्तरत्वाच्च।

'**पीतः शंखः**' इत्यादौ विशिष्टविषयकज्ञानस्य भ्रमत्वं तु वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकत्वेन सत्यमिथ्यावस्तुनोस्तादात्म्याऽवगाहित्वेनोपपद्यते।

इयं च वृत्तिश्चेतनाऽपि चिदाभाससम्बन्धेन विषयं प्रकाशयति। पुरुषोऽपि बुद्धितादात्म्याध्यासेन बुद्धेः कर्तृत्वादिधर्मान् गृह्णानः '**कर्ता**' '**भोक्ता**' इत्यादिरूपेण व्यवहारभाग्-भवति। स्पष्टं चैतत्सर्वं लघुमञ्जूषायां तट्टीकाद्वये च। क्वचन ग्रन्थे वृत्तौ पुरुषस्य प्रतिबिम्बनं लिखितम्, अत्र तु पुरुषे वृत्तिप्रतिबिम्बनमिति कथमिदं सम्भवतीति न शङ्कनीयम्, अन्योऽन्यतादात्म्याध्यासेनोभयपक्षस्याऽपि समीचीनत्वात्। वस्तुतस्त्वधिष्ठानस्यातिस्वच्छत्वात्, विभुत्वाच्च। अधिष्ठाने एवाध्यासो भवितुमर्हतीत्यत्र एव पक्षः समीचीनतर इति निष्कर्षः।

---

[1] ल0म0, टीकाद्वय0, पृ0 319-322

## ( घ ) इन्द्रियस्वरूपविचारः

महदहङ्कारचेष्टाभिन्नत्वे सति प्रत्येकं जीवच्छरीरमात्मतत्त्वाऽनुमापकत्वमिन्द्रियसामान्य-लक्षणम्। इदमेवाभिप्रेत्य **'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा।''** इति सूत्रे[1] इन्द्रियपदस्येन्द्रस्य लिङ्गमिति विग्रहः प्रदर्शितः सूत्रकृता।[2]

तत्रेन्द्राऽऽत्मा तस्य लिङ्गं (ज्ञापकम्) करणेन कर्तुरनुमानादिति व्याख्यातं कौमुदीकृता।[3] कुठारादीनां छिदादिकरणानां कर्तारं विना छिदादिकार्यानुत्पादकत्वं दृष्टम्। एवं चक्षुरादीनामपि ज्ञानकरणानां कर्तारं (आत्मानम्) विना ज्ञानरूपकार्यानुत्पादकत्वमिति कारणातिरिक्तः कर्ता (आत्मा) कल्प्यत इति तात्पर्यम्।

एवं च प्रत्येकं जीवच्छरीरमात्मवद्, इन्द्रियवत्त्वाद्, व्यतिरेके घटादिवदित्यनुमान-स्वरूपमायातीन्द्रियस्याऽपि ज्ञानं शरीरात्मके पक्षे ज्ञानवत्त्वेन चेष्टावत्त्वेन वा हेतुना (अनुमानेन) करणीयम्, कार्येण कारणानुमानात्। अनेन हेतुना आत्मापि साक्षादनुमातुं शक्यते इत्यन्यत्। उक्तं च **'प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः'** इति।[4] अयं चानुमितिः पक्षतावच्छेदकावच्छेदेन सर्वत्र जीवच्छरीरात्मके पक्षे बोध्या। सेन्द्रियं चेतनं द्रव्यं निरिन्द्रिय-मचेतनमिति चरकाचार्योक्तिरपीन्द्रियस्यात्मानुमापकत्वे सँव्वादिनी बोध्या।

### लक्षणघटकपदानां व्यावर्त्यानि

महदहङ्कारयो[5]श्चेष्टायां चातिप्रसङ्गनिरासायात्र सत्यन्तदलम्। प्रत्येकं जीवच्छरीरमिति धर्मिनिर्देशः, सविकल्पकस्य ज्ञानस्य निर्धर्मिकस्यानङ्गीकारात्। आत्मतत्त्वेति साध्यनिर्देशः,

---

[1] पा0सू0, 5 अ0, 2 पा0, 93 सू0

[2] (क) अन्यत्रापि इन्द्रियपदस्य व्युत्पत्तिरियं दर्शिता, यथा बौद्धदर्शने विशुद्धि, पृ0 491 तत्र हि- (ख) प्रमाणमीमांसायां हेमचन्द्राचार्येण तु 'इनो द्रावयति' इति इन्द्रियमिति उक्तम्। (ग) माठरवृत्तौ तु- "इन इति विषयाणां नाम, तानि नो विषयान् प्रति द्रवन्ति इति इन्द्रियाणि'' इति व्युत्पत्तिर्दर्शिता। मा0वृ0का0 26

[3] वै0सि0कौ0पू0, तद्धितप्र0 मत्वर्थीयम्, पृ0 153

[4] न्या0सि0मु0, कारि0 49, पृ0 232

[5] इन्द्रियान्तरैः सात्त्विकाहङ्कारोपादानकत्वं साधर्म्यम्, न तु इन्द्रलिङ्गत्वम्, महदहङ्कारथोरप्यात्मलिङ्गत्वेननैन्द्रिय-त्वप्रसङ्गात्; तस्माद् व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वम्, न तु प्रवृत्तिनिमित्तम्, सां0त0कौ0, कारि0 27, पृ0 182

अन्यथा विधेयाभावेऽनुमितिस्वरूपमेव भज्येत। अनुमापकत्वपदाभावे ज्ञापकत्वमात्रस्वीकारे ज्ञापकत्वशरीरे ज्ञानपदेन प्रत्यक्षज्ञानग्रहणे मनस्येव लक्षणं गच्छेत्, तेनैव आत्मतत्त्वस्य प्रत्यक्षकरणादित्यव्याप्तिदोषः स्यात्। शाब्दस्य ग्रहणे तु आत्मादिपदघटिते वाक्ये लक्षणं गच्छेत्, न तु लक्ष्यमात्रे इत्यसम्भवदोषः। ज्ञानसामान्यग्रहणे तु अतिव्याप्तिदोष इत्युनुमापकत्वपदम्।

यत्तु महाभाष्ये उद्द्योते इन्द्रियाणां नियमेन स्वाधिष्ठानभूतवृत्ति गुणग्राहकत्वमुक्तम्, तत्तु ज्ञानेन्द्रियतात्पर्येणेति न तल्लक्षणस्य कर्मेन्द्रियेष्वव्याप्तिरुद्भावनीया। सूत्रकृत्सम्मतं लक्षणं तु उभयविधेन्द्रियाणाम्।

## सांख्यसम्मतमिन्द्रियसामान्यलक्षणम्

सात्त्विकाहङ्कारोपादानकत्वमिन्द्रियसामान्यलक्षणं सांख्यनये। उक्तं तथैव श्रीवाचस्पति-मिश्रैः सांख्यतत्त्वकामुद्याम्[1]- आत्मलिङ्गत्वस्य तत्त्वे तु महदहङ्कारयोरप्यतिप्रसङ्गः स्यात् तस्माद् व्युत्पत्तिमात्रं तद्, यथा गच्छतीति गौरिति। 'उभयमप्येतदिन्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमुच्यते' इत्युक्त्या उभयविधेन्द्रियाणामयमसाधारणो धर्म इत्युक्तम्।[2]

## न्यायदर्शनसम्पत्तिरुक्तविषये

"**विषयोपलब्धिकारणत्वमिन्द्रियत्वम्**" इति श्रीजयन्तभट्टाः प्राहुः।[3] "**शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्**" इति श्रीविश्वनाथभट्टाचार्याः प्राहुः।[4] वाकपाणिपादादीनां पञ्चानामिन्द्रियत्वमेषां मते नास्ति। उक्तं चैतत्तात्पर्यटीकायाम्,[5] न्यायमञ्जर्य्यां च।[6]

---

1 सा०त०कौ०, कारि० 27, पृ० 182
2 सा०त०कौ०, का० 26, पृ० 179
3 न्या०म०, द्वितीयभा०, पृ० 48
4 न्या०सि०मु०, प्र०खं०, पृ० 256
5 ता०टी०, पृ० 531
6 न्या०म०, द्वि०भा०, पृ० 54

### अत्र जैनदर्शनमतम्

प्रमेयकमलमार्तण्डे इन्द्रियद्वैविध्येन लक्षणमपि द्विविधमेव कृतम्। तत्र द्रव्येन्द्रियम्-गोलकादिपरिणामविशेषपरिणतरूपरसगन्धस्पर्शवत्पुद्गलात्मकम्। भावेन्द्रियं तु लब्ध्युपयोगात्मकम्। आवरणक्षयोपशमप्राप्तिरूपार्थग्रहणशक्तिर्लब्धिः। तदभावे सतोऽप्यर्थस्या-प्रकाशनात्।[1]

अत्र लक्षणे ग्रहपदेन प्रत्यक्षात्मक एव ग्रहो ग्राह्यः, अन्यथा स्मृत्यादिकमादाय तत्करणे संस्कारादौ अतिप्रसङ्गः स्यात्। रसयत्यनेनेति व्युत्पत्तिरप्यत्रानुकूला। रसग्रहलिङ्गं रसनमिति सांख्योक्तलक्षणमपि[2] किञ्चिदनुरूपमेव। अथवा स्वमतेऽपीदमेव लक्षणम्। अधिकप्रवेशो वस्तुस्थितिकथनपर एव।

एवमेव जिघ्रत्यनेनेति व्युपत्त्या गन्धग्रहे करणं घ्राणेन्द्रियमुच्यते। एवमेव चष्टे पश्यत्यनेनेति चक्षुः। चक्षिङ्धातोरौणादिक उसप्रत्ययः। नयनं दर्शनं नेत्रमित्यादि पर्यायतयोच्यते। रूपग्रहे करणमिदं चक्षुरिन्द्रियम्। एवमेव स्पृशत्यनेनेति स्पर्शनम्, स्पर्श-प्रत्यक्षे करणं स्पर्शनेन्द्रियमुद्गीयते। एवमेव शृणोत्यनेन इति श्रवणम्। शब्दश्रवणे करणमिदम्। इमानि लक्षणानि सांख्यशास्त्रसम्मतानि।[3] किन्तु पञ्चमहाभूतस्वरूपता तु न्यायदर्शने इवात्रापि बोध्या। यथा घ्राणेन्द्रियस्य पार्थिवत्वम्, रसनाया जलीयत्वम्, चक्षुषस्तैजसत्वम्, स्पर्शनस्य वायवीयत्वम्, श्रवणस्य आकाशात्मकत्वम्। मानं त्वत्र पूर्वमुक्तमेव।[4]

पञ्चानां वाक्पाणिपादपायूपस्थानां कर्मेन्द्रियाणां क्रमशो भाषणम्, ग्रहणम्, गमनम्, मलापहरणम्, मूत्रोत्सर्गरमणे च व्यापाराः। स्वस्वव्यापारवत्त्वमेव एषां लक्षणं वेदितव्यम्। यद्यपि इमे व्यापारा अत्र शास्त्रे सांख्यशास्त्र इव नोक्ताः, तथापि प्रत्यक्षप्रमाणसिद्धत्वेन प्रतिषेद्धुमशक्यत्वात् स्वीकार्या एव।[5] मनसो लक्षणं तु भाष्यमते मनसोऽपि विषयाकारता-वर्णनप्रसङ्गे उक्तमेव।[6]

---

1 प्रमेयक०, प्र०परि०, सू० 2-5, पृ० 229
2 सां०त०कौ०, कारि० 26, पृ० 179
3 सां०त०कौ०, कारि० 26, पृ० 179
4 श्रोत्रस्याप्राप्यकारित्वे निष्कर्षकथने।
5 सां०त०कौ०, कारि० 28, पृ० 184
6 प्रत्यक्षप्रमाणलक्षणप्रस्तावे- ''भाष्यमतेऽपि मनसो विषयाकारता'' इत्यस्य विवेचने।

## इन्द्रियस्य परिमाणपरिच्छेदः

मध्यमपरिमाणमिन्द्रियमिति शब्दशास्त्रविमर्शः।[1] इन्द्रियस्य यद्यणुपरिमाणमभ्युपेयते, तदा त्वगिन्द्रियेण सकलशरीरे एकदैव शैत्यस्य औष्ण्यस्य वा उपलब्धिर्न स्यात्। न्यूनपरिमाणेन्द्रियेणाधिकपरिमाणस्य शरीरस्य गुणादेर्युगपद् ग्रहणासम्भवात्। उद्भूतरूपाद्यभावान्न तेषां प्रत्यक्षविषयत्वम्। विभुत्वे तु रसगन्धादीनां युगपदेव सर्वदा उपलब्धिः स्यादिति तात्पर्यम्।[2]

**"लब्धिस्वभावं तावदिन्द्रियम्"** इति हेमचन्द्राचार्यः।[3] इनो (विषयान्) द्रावयति (गमयति) इतीन्द्रियमिति एतदुक्ता व्युत्पत्तिरपि अत्रानुकूला।[4]

## अत्र निष्कर्षः

उभयविधेन्द्रियाणां सामान्यलक्षणं व्याकरणदर्शनरीत्या निर्दुष्टं यदुक्तम्, तत् श्रीवाचस्पतिना **"उभयमप्येतद् इन्द्रस्यात्मनः चिह्नत्वादिन्द्रियमुच्यते"** इत्युक्त्यानु-मोदितमपि। अतिप्रसङ्गश्चेत्, सत्यम्; तत्तन्निवेशेन परिहृत एव सः। सात्त्विकाहङ्कारेति लक्षणं तु इन्द्रियाणामाहङ्कारिकत्वपक्षे गौरवस्योक्ततया निरस्तप्रायमेव। न्यायादिदर्शनोक्तं ज्ञानेन्द्रिय-मात्रस्य लक्षणं सम्यगपि असम्यगेव, कर्मेन्द्रियाणामसङ्ग्रहात्; इन्द्रियलक्षणे मनसः प्रवेशे, मनोलक्षणे इन्द्रियस्य च प्रवेशेऽन्योऽन्याश्रयदोषाच्च।

किञ्च, इन् इति विषयाणां नाम, 'तानिनो विषयान् प्रति द्रवन्ति (गच्छन्ति) इति इन्द्रियाणि' इति माठरवृत्त्युक्ता[5] व्युत्पत्तिरपि हस्तपादादीनामिन्द्रियत्वे मानम्, तेषामपि विषयान् प्रति गमनात्।

---

1 ल०म०, र०प्र० युता, शक्त्याश्रयनिरू० टिप्पणे, पृ० 172
2 वै०सि०ल०म०, कुञ्जिका टीका, पृ० 204-205
3 प्र०मी०, 1 अ०, 1 आ०, 23 सू०, पृ० 18
4 तदेव।
5 माठर०, कारि० 26

## इन्द्रियविशेषसमीक्षा

शाब्दिकमते उक्तेन्द्रियसामान्यलक्षणेन एकादशविधमिन्द्रियं स्वीकरणीयम्। तत्र घ्राणरसनचक्षुःस्पर्शनश्रवणभेदात् पञ्चविधं ज्ञानेन्द्रियम्, वाक्पाणिपादपायूपस्थभेदात् पञ्चविधं कर्मेन्द्रियम्। उभयात्मकमिन्द्रियं मन इति सङ्कलनया एकादशेति सांख्यशास्त्रोक्त एव पन्था अत्र स्वीक्रियते।[1] कर्मेन्द्रियाण्यपि शाब्दिकसम्मतानि महाभाष्येऽपि कीर्तितानि।

## इन्द्रियविशेषलक्षणानि

**"स्वस्मिन्नात्मनि रसास्वादग्राहकत्वलक्षणे स्वस्वरूपे"** इति भाष्यलापन-परोद्द्योतग्रन्थेन रसस्य तद्ग्रहजनितास्वादस्य (आनन्दस्य) च ग्राहकत्वं रसनेन्द्रियत्वमिति लक्षणमायाति रसनेन्द्रियस्य। तत्रात्मत्वारोपात् कर्तृत्वेन[2] ग्राहकत्वव्यपदेशः करणत्वं तु वास्तवमेव। अधिकरणत्वविवक्षया क्वचिदधिकरणत्वव्यवहारोऽपि।[3]

अणुपरिमाणत्वेऽपि गोलकनिर्गतस्य चक्षुरादेः पृथ्वग्रत्वान्न कश्चन दोष इत्यपि मतविशेषः।[4]

गोलकाद्यधिष्ठानमेवेन्द्रियम्; तत्सत्त्वे घटाद्युपलब्धिः, तदभावे तदभाव इत्यन्वय-व्यतिरेकसहचारादिति बौद्धाभिमतम्।[5]

किन्त्विदं न रोचते, घटादिदेशे गोलकरूपस्य तस्य गमनासम्भवात्। नापि भौतिकम्, न्यूनपरिमाणेनाधिकपरिमाणस्य ग्रहणासम्भवात्, न चाप्यग्रहणं प्रत्यक्षविरोधात्, तस्मादाहङ्कारिकाणीन्द्रियाणीति सांख्याचार्याणां सम्मतिः।[6]

एवमेव गोलकनिष्ठा शक्तिरिन्द्रियमिति मीमांसकानां मतम्।[7]

---

1 म०भा०उ०, 8 अ०, 2 पा०, 49 सू०, पृ० 123
2 द्र०- म०भा०, प्र०उ०, 1/2/59
3 म०भा०- श्रतौ च रूपग्रहणमिति।
4 वै०सि०ल०म०र०प्र० युता, टिप्पणम्, पृ० 172
5 वै०सि०ल०म०र०प्र० युता, टिप्पणम्, पृ० 172
6 वै०सि०ल०म० टीकाद्वय०- पृ० 204
7 वै०सि०ल०म० टीकाद्वय०- पृ० 205

तत्र बौद्धमतेऽपकृष्टमहत्परिमाणमिन्द्रियस्य प्रतिपादितम्। तच्च सांख्यरीत्या निरस्तप्रायमेव। न्यायदर्शनमपि परिमाणविषये व्याकरणदर्शनसंव्वादि एव।

**इन्द्रियाणामधिष्ठानविशेषविमर्शः**

शरीराऽन्तर्गतः कोऽवयवः, कस्येन्द्रियस्याधिष्ठानमिति अधिष्ठानविशेषो विमृश्यते। तत्र त्रिपुटिकाधिष्ठानकं घ्राणम्, जिह्वाधिष्ठानकं रसनम्, चक्षुर्गोलकाधिष्ठानकं नेत्रम्, सकलत्वगधिष्ठानकं स्पर्शनम्, शिरःप्रभृति आपादाङ्गुष्ठं स्पर्शोपलम्भात्। त्वगित्यनेन बाह्यमेव चर्म न ग्राह्यम्, अपि तु सकलशरीरव्यापि आन्तरमपि, शीतलसलिलपानसमयेऽन्तर्हृदयेऽपि शीतस्पर्शोपलम्भात्। कर्णविवराधिष्ठानकं श्रोत्रम्। जिह्वाधिष्ठानकमेव वागिन्द्रियमपि। एवमेव हस्तपादादीन्द्रियाणामधिष्ठानान्यपि लोकप्रसिद्धानि बोध्यानि। न्यायमञ्जर्यां श्रीजयन्तभट्टेनोक्तान्यप्येतानि।[1]

यद्यपि सांख्यमते इन्द्रियाणामहङ्कारपरिणामरूपत्वेनाहङ्कार एव अधिष्ठानम्, न्यायनये व्याकरणदर्शने च परिच्छिन्नपरिणामत्वेन सावयवतया घ्राणादीनां पार्थिवादयः स्वावयवा एव समवायेन तादात्म्येन वा आश्रयभूताः, तथाऽपि संयोगसम्बन्धेनाश्रयापेक्षायामिदमुक्तम्।

मनस्तु अहङ्कारः स्वाश्रयः, तथापि संकोचविकासशालितया मध्यमपरिमाणतया च सकलमपि शरीरमाश्रयत्वेन स्वीकार्यम्। बौद्धदर्शने[2] च हृदयदेशो मनसोऽधिष्ठानतया स्वीकृतोऽस्ति। द्रव्यमनसः सकलं शरीरम्, भावमनसस्तु आत्मैवाऽश्रय इति जैनसिद्धान्तः।[3]

---

1 न्या०म०, द्वि०भा०, 8 आ०, पृ० 48

2 ताम्रपर्णीया अपि हृदयवस्तु मनोविज्ञानधातोराश्रयं कल्पयन्ति।

3 सर्वार्थ० 2/11

## (ङ) इन्द्रियाणां भौतिकत्वविचारः

इन्द्रियाणां विषयोपलब्धिसाधकत्वं लोकतः शास्त्रतस्य सिद्धम्। तत्तद्भूतेभ्यः जायमानत्वञ्चेन्द्रियाणां सिद्धम्। न्यायनये तत्तद्परमाणुभ्यः द्व्यणुकादिरूपेणेन्द्रियाणामुत्पत्तिर्भवति। पार्थिवपरमाणुभ्यः द्व्यणुकादिरूपेण घ्राणेन्द्रियस्योत्पत्तिर्भवति। अथ च जलीयपरमाणुभ्यः द्व्यणुकादिरूपेण रसनेन्द्रियस्योत्पत्तिर्भवति। एवमेव वायुपरमाणुभ्यः द्व्यणुकादिरूपेण त्वगिन्द्रियस्योत्पत्तिर्भवति। एवं तैजसपरमाणुभ्यः द्व्यणुकादिरूपेण त्वगिन्द्रियस्योत्पत्तिर्भवति। एवं तैजसपरमाणुभ्यः द्व्यणुकादिरूपेण चक्षुरेन्द्रियस्योत्पत्तिर्भवति। श्रोत्रेन्द्रियस्याऽकाशरूपत्वात् नित्यत्वाच्चोत्पत्तिर्न सम्भवति, शष्कुल्यावच्छिन्नतयाऽकाशमेव शब्दग्राहकं भवति।

वेदान्तनयेऽपि अपञ्चीकृतमहाभूतानां सत्वांशेभ्यः चक्षुरादीन्द्रियाणामुत्पत्तिर्भवति। अपञ्चीकृतपृथिवीमहाभूतस्य सत्वांशात् घ्राणेन्द्रियस्योत्पत्तिर्भवति। एवमेव अपञ्चीकृत-जलमहाभूतस्य सत्वांशात् रसनेन्द्रियस्योत्पत्तिर्भवति। एवमेव अपञ्चीकृतवायुमहाभूतस्य सत्वांशात् त्वगिन्द्रियस्योत्पत्तिर्भवति। एवमपञ्चीकृततेजोमहाभूतस्य सत्वांशात् चक्षुरिन्द्रिय-स्योत्पत्तिर्भवति। वेदान्तनये आकाशस्य जायमानतया अपञ्चीकृत आकाशमहाभूतस्य सत्वांशात् श्रोत्रेन्द्रियस्योत्पत्तिर्भवति अतः समेषामिन्द्रियाणां भूतेभ्यः जायमानत्वात् भौतिकत्वं संसिद्धम्।

**"सत्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपंचकम्।**
**श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते॥"[1]**

विशेषलक्षणानि तु पञ्चानां पञ्चसमाख्यानिर्वचनसामर्थ्यात् प्रमाणवदवगन्तव्यानि। जिघ्रत्यनेनेति घ्राणम्, घ्रेयं गृह्णातीति गन्धोपलब्ध्यावसाधारणं करणं घ्राणम्। चक्षुरीक्षणं लोचनं तदुच्यते। स्पृशत्यनेन स्पर्शनम्, स्पर्श गृह्णातीति स्पर्शोपलब्ध्यावसाधारणं करणं स्पर्शनम्। स्पर्शनमिति वक्तव्ये त्वगग्रहणमुपचारात्, मञ्चाः क्रोशन्तीति तदधिष्ठानत्वं दर्शयितुम्। यथा त्रिपुरिकाधिष्ठानं घ्राणम्, जिह्वाधिष्ठानं रसनम्, गोलकाधिष्ठानं चक्षुः, तथा सकलत्वगन्धिष्ठान-

[1] पञ्चदशी, 1/19

स्पर्शनम्, शिरः प्रभृत्यापादाङ्गुष्ठं स्पर्शोपलम्भात्। त्वगिति च न बाह्यमेव चर्म केवलमुच्यते अपि तु सकलशरीरव्यापि, तुहिनकणशिशिरसलिलपानसमयेऽन्तर्हृदयेऽपि शीतस्पर्शोपलम्भादिति। स्वावयवसमवायित्वे चेन्द्रियाणां त्रिपुटिकाद्याश्रयत्वमाश्रयमात्रापेक्षयोच्यते, न समवायित्वादिति। शृणोत्यनेनेति श्रोत्रम्, शब्दं गृह्णातीति शब्दोपलब्ध्यावसाधारणं करणं श्रोत्रम्। तच्चाकाशैकदेशत्वादनाश्रितमपि कर्णशष्कुल्यधिष्ठानमुच्यते।

तदेवं विशेषलक्षणानि पञ्च पञ्चानामुक्तानि भवन्ति, तानीमानीन्द्रियाणि स्वविषयग्रहणलक्षणान्यात्मनो भोगसाधनत्वात् संसारकारणानीति हेयतया भावयितव्यानि, तथा भाव्यमानानि निर्वेदोत्पादनादिद्वारेणापवर्गाय कल्पिष्यन्त इति।

## इन्द्रियाणां भौतिकत्वे विषयप्रकाशकत्वविचारः

भूतेभ्यः जायमानाः घटपटादि पदार्थाः विषयप्रकाशकाः न भवन्ति। तद्वदिन्द्रियाण्यपि भूतेभ्यः जायमानानि प्रत्यक्षज्ञानसाधकानि न भविष्यन्ति। तत्रैतत्परीक्षणीयं वर्तते किं भौतिकानामिन्द्रियाणां स्वविषयग्रहणकरणत्वभूतान्यथेति। एवं हि साङ्ख्याः सम्प्रवदन्ते आहङ्कारिणीन्द्रियाण्यर्थं साधयितुमर्हन्ति, नान्यथा। तथा हि कारकं कारकत्वादेव प्राप्यकारि भवति, भौतिकानि चेन्द्रियाणि कथं प्राप्यकारीणि दूरवर्तिनि विषये भवेयुः? आहङ्कारिकाणान्तु तेषां व्यापकत्वाद् विषयाकारपरिणामात्मिका वृत्तिर्वृत्तिमतो नान्या सती सम्भवत्येवेति सुवचं प्राप्यकारित्वम्। अपि च महदणुग्रहणमाहङ्कारिकत्वे तेषां कल्पते न भौतिकत्वे, भौतिकत्वे हि यत्परिमाणं ग्रहणं तत्परिमाणं ग्राह्यं गृह्णीयात्। अस्ति च गोलकादधिकपरिमाणस्य पटपिठरादेर्ग्रहणं हीनपरिमाणस्य च वटधानादेरतोऽपि न भौतिकानीन्द्रियाणि। भौतिकानामपि दीपादीनां परं प्रकाशयतां स्वात्मप्रकाशकत्वमपि दृष्टम्। एवमिन्द्रियाण्यपि पटादिरूपं प्रकाशयन्ति स्वरूपमपि न प्रकाशयन्तीत्यतोऽपि न भौतिकानि।

## ( च ) इन्द्रियाणां प्राप्यकारित्वाप्राप्यकारित्वविचारः

प्राप्यकारित्वं नाम विषयदेशं गत्वा विषयेण सह संयुज्य प्रकाशकत्वम्। तच्च चक्षुरिन्द्रियस्यैव सम्भवति। चक्षुरिन्द्रियस्य तैजसत्वात् विषयदेशगमनं सम्भवति। तदितराणीन्द्रियाणिस्वस्वगोलके स्थितान्येव विषयप्रकाशकानि भवन्ति। चक्षुरिन्द्रियातिरिक्तानां विषयदेशगमनं न सम्भवति। वेदान्तिनस्तु चक्षुरिन्द्रियवत् श्रोत्रेन्द्रियस्यापि विषयदेशगमनं स्वीकुर्वन्ति।

**"घ्राणरसनत्वगात्मकानीन्द्रियाणि स्वस्थानस्थितान्येव गन्धरसस्पर्शोप-लम्भान् जनयन्ति चक्षुः श्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः श्रोत्रस्यापि चक्षुरादिवत्परिच्छिन्नतया भेर्यादिदेशगमनसम्भवात्।"**[1]

न च चक्षुः श्रोत्रयोर्विषयदेशं प्राप्तयोरेव स्वस्वविषयग्राहकत्वे झटित्यादिध्रुवादिमण्डलानुभवो न स्यादिति वाच्यम्, चक्षुरादेरतिस्वच्छद्रव्यत्वेन सावित्रकिरणवच्छीघ्रगति-सम्भवात्। ननु चक्षुरिन्द्रियं भवतु परिच्छिन्नत्वाद्दूरदेशं गत्वा विषयग्राहकं सर्वगतं तु गगनं कर्णशष्कुल्युपाधिना श्रोत्रपदवाच्यं कथं भेर्यादिदेशं गत्वा शब्दं ग्राह्येदित्याशङ्क्याह।

चक्षुश्रोत्रातिरिक्तानीन्द्रियाणि स्वदेशे एव समुपलब्धान्विषयान्प्रकाशयन्ति। स्वाश्रयसंयुक्तत्वसम्बन्धेन स्वगोलके प्राप्तो यः स्पर्शादिविषयस्तस्मिन्विषये यज्ज्ञानं तस्य जननमुत्पत्तिस्तद्रूपं त्वगादीनां यत्कार्य्यं चक्षुरादिगोलकदूरदेशस्थितघटादिकार्य्यज्ञानजननरूपं चक्षुः श्रोत्रयोर्यच्च कार्य्यं तस्य द्विविधकार्य्यरूपफलस्य यद्बलमिन्द्रियेषु स्वभावविशेषं विनानुपपत्तिरूपमर्थापत्तिप्रमाणं तेन जन्यार्थापत्तिप्रमारूपा या कल्पना तद्विषयस्वभावविशेषात् तत्तदिन्द्रियवृत्तितत्तद्विषयविषयकज्ञानजननानुकूलासाधारणधर्मरूपस्वभावभेदादयं विभागः।

अथैतस्मिन् प्रत्यक्षे इन्द्रियस्य विषयेण सह संयोगो हेतुतयोक्तः। तत्रेन्द्रियं विषयदेशं गत्वा विषयेण संयुज्य तं प्रकाशयति, अथवा विषयस्यैवेन्द्रियदेशे आगमने सति तेन संयुज्य तं प्रकाशयतीति जिज्ञासायां प्रोच्यते- **चक्षुरिन्द्रियं विषयदेशं गत्वैव विषयेण संयुज्य तं**

---

[1] वे०परि०, प्र० परिच्छेदः, पृ० 195

प्रकाशयति। उक्तं च भाष्यकृता- **अपक्रामति तत्तस्माद्दर्शनमिति।**[1] अत्र प्रदीपः- **''दर्शनं चक्षुरिन्द्रियं तेजोरूपं प्राप्य विषयग्राहित्वात् प्रासाददेशादपक्रम्य विषयं गच्छती-त्यर्थः''**[2] इति।

अत्रोद्द्योतः- **''दर्शनं चक्षुरिति करणे ल्युडिति भावः। तेजोरूपमिति-अपक्रमणसामर्थ्यमनेन दर्शितम्। विषयग्राहिणो नयनरश्मयः सूर्यरश्मिवत् प्रासाद-देशस्थपुरुषनयनादपक्रम्य यावद् विषयदेशं गच्छन्तीत्यर्थः''**[3] इति।

## चक्षुषःप्राप्यकारित्वे वाक्यपदीयमतम्

आचार्यभर्तृहरिणा वाक्यपदीये ब्रह्मकाण्ड उक्तम्-

**चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि।**
**विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः॥**[4] इति।।

अत्र तेजसा दीपादिना चक्षुषः संस्कारे प्राप्यकारित्वं कारणमुक्तम्। यतो हि सन्तमसे स्थितोऽपि पुरुष आलोकानुगृहीतेन चक्षुषा आलोकानुगृहीतं घटादिविषयं पश्यति। यदि चक्षुरिन्द्रियं प्राप्यकारि न स्यात्, तर्हि तस्य दृष्टपुरुषनयनगोलकस्थतया इदानीमालोकानुग्रहा-भावात् कथं बाह्यं विषयं पश्येत्? आलोके स्थितोऽपि पुरुषोऽन्धकारे स्थितं घटादिविषयं न पश्यतीति तेजसा विषयस्यापि संस्कारः।

## सर्वेन्द्रियाणां प्राप्यकारित्वे श्रीनागेशसम्मतिः

श्रीनागेशभट्टेन सांख्यमतमनुसृत्य आकाशाधिष्ठानक आहङ्कारिको धर्मविशेषः श्रोत्रेन्द्रियमित्युक्तम्। तदैकरूप्याय घ्राणादीनीन्द्रियाण्यपि पृथ्वीजलतेजोवाय्वधिष्ठानकानि आहङ्कारिकाण्येव स्वीकृतानि। अहङ्कारस्यान्तःकरणपरिणामत्वादन्तःकरणस्य चाधुनापि

---

[1] म०भा० 2/3, पृ० 28
[2] म०भा०, प्र० 2/3/28
[3] म०भा०, उ० 2/3/28
[4] वा०प० 1-81

बहुदूरदेशगमनानुभवेन तद्विकाराहङ्कारविकाराणां सर्वेषामिन्द्रियाणां तत्सम्भवेन प्राप्यकारित्वाभ्युपगमात्। पृथिव्यादिविकाराणां तावद्दूरदेशगमनं नैव सम्भवति।

एवं चेदं श्रोत्रमेव चित्तवृत्तिसहकृतं स्ववृत्तिसहकृतं स्ववृत्तिपरम्परया (स्वस्य इन्द्रियस्य वृत्तिः सन्निकर्षस्तस्य परम्परया) शब्ददेशमागत्य शब्दं गृह्णाति। अत एव ग्रामान्तरीयः शब्दो मया श्रुत इत्याद्यनुभवोऽपि सार्वजनीनः संगच्छते।[1]

## उक्तविषये मतान्तरम्

अणवः सर्वशक्तयः सर्वं देशं व्याप्नुवन्तीति पृथिव्यादिपरमाणूनां तत्तदिन्द्रियस्य तत्तद्विषयबोधनकाले विषयदेशपर्यन्तं तत्तदिन्द्रियरूपेण परिणाम इति तत्तद्देशे प्रत्यक्षानुभवः। अथैतस्मिन् मतेऽसन्निकृष्टस्यापि विषयस्य प्रत्यक्षं स्यादिति न शङ्कनीयम्, विषयदेशं यावदेव इन्द्रियरूपेण अणूनां परिणामात्। अस्मिन् मतेऽपि प्राप्यकारित्वमेव सर्वेन्द्रियाणामुपवर्णितं श्रीनागेशेन।[2] **''अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः''** इत्युक्त्या श्रीहरिसम्मतोऽप्ययं पक्षः सम्भाव्यते।[3]

## श्रोत्रेन्द्रियस्याप्राप्यकारित्वे भाष्यमतम्

श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः, एकं च पुनराकाशमिति महाभाष्ये[4] श्रोत्रे एवोपलब्धिर्यस्येत्यर्थिकया श्रोत्रोपलब्धिरित्युक्त्या शब्दस्याकाशदेशत्वबोधने हेतुता सूचिता। एवं च दिगादीनां श्रोत्रत्वनिरासपूर्वकं कर्णशष्कुल्यवच्छिन्ननभःप्रदेशविशेषस्यैव श्रोत्रेन्द्रियत्वमभिमतं भाष्यकृतामित्यायाति।[5]

---

1 वै०सि०ल०म०, टीकाद्व०, पृ० 207
2 ल०म०, टीकाद्वयो०, पृ० 208
3 वा०प० 1-110
4 म०भा०, 1 अ०, 1 पा०, 2 आ०, "अ इ उण्" सूत्रे।
5 द्र०- म०भा०, प्र०उ०- तत्रैव।

तत्र श्रोत्रेन्द्रियं यद्यसम्बद्धमेव शब्दं गृह्णीयात्, तर्हि काशीस्थोऽपि जनो रामेश्वरादि-प्रदेशाऽवच्छिन्नं शब्दं कुतो न गृह्णीयात्? सम्बद्धशब्दग्रहणेऽपि श्रोत्रस्य शब्दे देशे शब्दस्य च श्रोत्रदेशे निष्क्रियत्वाद् गमनासम्भवेन सम्बन्धो न सम्भवत्येवेति चेत्, अत्रोच्यते- श्रोत्रेन्द्रियस्य भाष्यसम्मतमप्राप्यकारित्वमेव मन्तव्यं शाब्दिकैः। अनुसृतं च श्रीकैयटेन इदमेव मतम्।[1] श्रीनागेशेनापि लघुमञ्जूषायां बहुषु स्थलेषु अयमेव पक्षः सिद्धान्तरूपेणानुसृतः कर्णशष्कुल्य-वच्छिन्ननभ एव श्रोत्रत्वेन तादृशश्रोत्रं स्वदेशे समुत्पन्नं शब्दं ध्वन्यात्मकं गृह्णातीत्यादिकथनेन।[2] यद्यप्यत्र पक्षे तादृशश्रोत्रस्य नित्यतया नाशासम्भवेन कस्यचिदपि बाधिर्यं न सम्भवतीत्यापद्यते, तथापि धर्मविशेषविशिष्टस्य तादृशाकाशस्य श्रोत्रत्वमिति रोगादिना तस्य धर्मस्याभिभवः, औषधादिना च तस्योद्भव इति स्वीकारेणोक्तदोषो निरस्तो वेदितव्यः। सांख्यशास्त्रानुसारित्वं तु न समीचीनम्, अनन्तश्रोत्रसन्निकर्षकल्पनापत्त्या गौरवात्। आणविकत्वपक्षोऽपि न समीचीनः, अनन्तपरमाणुपरिणामकल्पनायामतिगौरवात्।[3]

**अत्र शाब्दिकानां सिद्धान्तः**

एवं च चक्षुरिन्द्रियं विहायान्यानि ज्ञानेन्द्रियाणि श्रोत्रवदप्राप्यकारीण्यैव। नहि आपण-स्थमोदकस्य चाक्षुषवद् विशेषतो रासनघ्राणजस्पार्शनप्रत्यक्षाण्यपि दूरतः कर्तुं प्रभवति निपुणोऽपि कश्चिदिति शब्दशास्त्रनिष्कर्षः।

ग्रामान्तरीयः शब्दो मया श्रुत इत्यनुभवोऽपि अभिव्यक्तिवादे न विरुध्यते। शब्दस्या-भिव्यक्तिरेव दूरदेशं व्याप्नोति, नोत्पत्तिरिति स्वीकारेणादोषात्।

यद्यपि शाब्दिकस्य सांख्यशास्त्रानुसारित्वं भाष्यकृता सूचितमस्ति, तथाऽपि सर्ववेद-पारिषदं हीदं शास्त्रमिति भाष्योक्त्यैव यथाऽवसरं तत्तत्सिद्धान्तानुसरणास्यानुज्ञातत्वेनेदृशा-चरणेऽपि न

---

1 आकाशप्रदेशविशेषस्य श्रोत्रत्वात्। द्र०- म०भा०, प्र० 1 अ०, 1 पा०, 2 आ०, पृ० 95

2 ल०म०, टीकाद्वय०, पृ० 201

3 ल०म०, टीकाद्वय, पृ० 211

क्षतिरिति भावः। आहङ्कारिकाणीन्द्रियाणीति मतेऽपि- इत्युक्त्वा[1] तन्मते दोषं परिहरता श्रीनागेशेनेन्द्रियविषये सांख्यमतस्वीकारेऽपि शब्दशास्त्रसिद्धान्ते न क्षतिरित्यपि सूचितम्। अत एव मनसो विषये तेन न्यायमतमनादृत्य योगशास्त्रसम्मतिः स्वीकृता।[2]

## उक्तविशये मतान्तराणि

इन्द्रियाणां प्राप्यकारित्वमेव सिद्धान्तितं न्यायदर्शने। तत्र प्राप्य विषयेण संयुज्येन्द्रियेण क्रियते ज्ञानमित्येव तात्पर्यम्, न तु विषयदेशगमने। चक्षुष एव तैजसत्वेन तत्र सामर्थ्यात्।[3] वैशेषिकदर्शनेऽपीयमेव रीतिः समादृताऽस्ति।[4] सांख्यशास्त्रेऽपि प्राप्यकारित्वमेव सम्मानितम्, किन्तु समेषामिन्द्रियाणां विषयदेशं प्राप्य विषयबोधकता प्रतिपादिता।[5]

योगदर्शनेऽपि सांख्यदर्शनवद् विषयदेशं प्राप्यैव तज्ज्ञापकतेत्येव सिद्धान्तः।[6]

पूर्वोत्तरमीमांसाभ्यामप्ययं पूर्वोक्त एव सिद्धान्तः स्वायत्तीकृतोऽस्ति।[7] एतेषु सांख्य-योगवेदान्तानां नये मनसोऽपि प्राप्यकारित्वमिति सिद्धान्तः।[8]

जैनदर्शने तु चक्षुरतिरिक्तानि चत्वारि घ्राणरसनत्वक्श्रोत्राणि बाह्येन्द्रियाणि प्राप्य-कारीणि, मनस्त्वप्राप्यकारीति पक्षः समर्थितः।[9] आचार्यहेमचन्द्रेण-काचादिव्यवहितस्याऽपि पदार्थस्य चक्षुषोपलब्ध्या अस्य अप्राप्यकारित्वं साधितम्।

---

1 म०भा०, उ०, 1 अ०, 1 पा०, 2 आ०

2 म०भा०, उ०, 3 अ०, 2 पा०, 2 आ०, सू० 118

3 (क) न्या०म०, अष्टमाह्निके पृ० 49 (भौतिकत्वेऽपीन्द्रियाणां प्राप्यकारित्वम्)
(ख) न्या०सू० 3/1/33-53 (ग) न्या०वा०, पृ० 36

4 कन्दली, पृ० 23

5 (क) न्या०म०, अष्टमाह्निक०, पृ० 49
(ख) सां०सू० 1/87/3, अत्रेयं प्रक्रिया-इन्द्रियप्रणालिकयाऽर्थसन्निकर्षेण लिङ्गज्ञानादिना आदौ बुद्धौ-अर्थाकारा वृत्तिर्जायते- सां०प्र०भा०, पृ० 47

6 योगकारिका० 23/4; ''इन्द्रियप्रणालिकया बाह्यवस्तूपरागात् सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम्'' यो०द०, व्या०भा०, पृ० 27

7 (क) शाबरभा०, 1 अ०, 1 पा०, 13 सू० (ख) वे०प०, टीकाद्वय०, पृ० 49

8 (क) सा०त०कौ०, पृ० 51-52 (ख) योगभाष्यम् 1-7 (ग) वे०प० टीकाद्वय०, पृ० 49

9 (क) आव०नि० 5 (ख) तत्त्वार्थ० सू० 1/19

बौद्धदर्शने तु घ्राणरसनस्पर्शनानि त्रीण्येवेन्द्रियाणि प्राप्यकारीणि, चक्षुःश्रोत्रे त्वप्राप्यकारिणी। मनोऽपि अप्राप्यकार्येवेति पन्थाः समाश्रितः।[1]

आचार्यदिङ्नागेनैतन्मतमित्थं समर्थितम्- चक्षुः श्रोत्रे यदि विषयं प्राप्य गृह्णीतः, तदा यदिदं दूरे शब्दः, दूरेऽर्थ इति व्यवहितग्रहणं तन्न स्यात्, न स्याच्चाधिकपरिमाणानां पर्वतादीनां ग्रहणम्, प्राप्यकारिषु त्वग्रसनादिषु अस्य नियमस्यादर्शनादिति।[2] व्यवहितस्या- धिकपरिमाणस्य च ग्रहणाननुभवात्।

## चक्षुषोऽप्राप्यकारित्वनिरासे शाब्दिकानां मतम्

यथा दीपप्रभा दीपरूपस्वाधिष्ठानासम्बद्धस्याऽपि विषयस्य (दूरस्थघटादेः) प्रकाशं करोति। तत्र प्रभाप्रकाशयोः सामानाधिकरण्यमावश्यकम्। कार्यकारणयोः सामानाधिकरण्य-मन्तरा करणस्य कार्योत्पादनासम्भवादिति दीपप्रभा प्राप्यैव विषयं प्रकाशयति। तथैव गोलकरूपाधिष्ठानेनासम्बद्धोऽपि पृथुतरोऽपि विषयो गोलकनिर्गतेन नयनेन पृथ्वग्रतया संकोचविकासशालितया च प्रकाश्यते।[3]

## उक्तविषये न्यायदर्शनसम्मतिः

श्रीजयन्तभट्टा न्यायमञ्जर्य्यां चक्षुषः प्राप्यकारित्वमित्थं न्यरूपयन्- तेजसः प्रसरणात् चक्षुषः प्राप्यकारिता। यद्यपि प्रत्यक्षेण नायनं तेजो नोपलभ्यते, तथापि पदार्था न खलु प्रत्यक्षैकशरणाः अनुमानादिभिरपि एषामुपलब्धिः सम्भवत्येव। काचादीनां केषाञ्चिदति-स्वच्छतया केषाञ्चिच्च सच्छिद्रत्वात् चाक्षुषतेजःप्रसरस्य निरोधः कर्तुं न शक्यते। यथा भर्जन-कपालादौ तेजःप्रसरस्यानिरोधोऽनुभूयते, तद्वत्।[4] अयस्कान्तमणेरपि सामर्थ्यं यावति सन्निकर्षे कार्याय प्रभवति, तावान् सन्निकर्षोऽपेक्ष्यत एव। व्यवहितस्य ग्रहणे कुड्यादिव्यवहितमपि कथं न गृह्यते?

---

1 "अप्राप्तान्यक्षिमनःश्रोत्राणि त्रयमन्यथा" अभिधर्म० 2/43
2 प्रमाणसमु०, पृ० 101, पृ० 41
3 वै०सि०ल०म०; र०प्र० युता, टिप्पणम्, पृ० 172
4 न्या०म०, 8 आ०, पृ० 49

## भौतिकत्ववादेऽपि प्राप्यकारित्वमित्यत्र न्यायशास्त्रम्

यच्चोच्यते- भौतिकाः (भूतविकाराः) दीपादयः परं प्रकाशयन्त आत्मनमपि प्रकाशयन्ति, न चैतदिन्द्रियेष्वितीन्द्रियाणां न भौतिकत्वं भूतत्वं वा, अपि तु आहङ्कारिकत्व-मेवेति। तदपि न, भौतिकत्वपक्षेऽपि न हि गोलकमेव चक्षुः अपि तु तदधिष्ठानकं तेजस्तत्त्वम्। तत्र चास्मदादिनयनरश्मिसमवेतं रूपमनुद्भूतमिति प्रत्यक्षीकर्तुं न शक्यते। बिडालव्याघ्रसिंहादीनां चाक्षुषं तेजो भास्वररूपं दूरमपि प्रसरत् प्रत्यक्षीक्रियते एव। किञ्च, महदणुग्रहणान्न भौतिकत्वमित्यपि न विचारसहम्, ईदृशकार्यदर्शनेन तत्र संकोचविकासशालि-त्वस्यानुमानात्।[1]

उक्तं च महर्षिगौतमेनाऽपि-दृष्टानुमितानां पदार्थानां विधिः प्रतिषेधो वा कर्तुं न शक्यते, तद्विषयकस्य प्रमाणस्य विद्यमानत्वादित्यर्थकेन **"दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः, प्रमाणस्य तत्त्वविषयत्वात्"** इति[2] सूत्रेणेति निःसन्देहं चक्षुषः प्राप्यकारित्वम्।

## चक्षुषःप्राप्यकारित्वे आधुनिकानां शङ्का तत्परिहारश्च

चक्षुषः प्राप्यकारित्वमते अधुनातना बहवो विद्वांस आक्षिपन्ति- सूर्यमण्डलप्रत्यक्षकाले मध्ये मार्गं स्थितानां ग्रहादीनामपि चाक्षुषं कुतो न? यदि चक्षुः प्राप्य विषयं गृह्णातीति। अत्रोच्यते- अल्पपरिमाणत्वेन दूरत्वदोषेण च तेषां चाक्षुषं न भवति, सूर्यमण्डलस्य तु दूरत्वदोषे सत्यपि परिमाणबाहुल्याच्चाक्षुषं जापत एव। अनुभूयते च सर्वैः पञ्चषयदपरिच्छिन्नेऽपि देशे दूरस्थितानां सूच्यादीनामप्रत्यक्षम्, दूरस्थितानामपि घटादीनां प्रत्यक्षम्। तत्र को हेतुः? तद्गतपरिमाणाल्पत्वमहत्त्वे एव।

यदि तु तत्रैव स्थितानां सूच्यादीनां स्वल्पपरिमाणानामपि प्रत्यक्षमुपनेत्रोपकृतेन चक्षुषा भवतीति ब्रूषे, तदोपनेत्रविशेषोपकृतेन यन्त्रविशेषोपकृतेन वा चक्षुषाऽन्तरिक्षस्थितानामपि अल्पपरिमाणानां ग्रहादीनां प्रत्यक्षं भवत्येव।

---

1 न्या०म०, 8 आ०, पृ० 49, 52
2 गो०सू०, 3 अ०, 1 पा०, 53 सू०

## प्राप्यकारित्वमतेऽन्धत्वप्रसक्तिनिरासः

नन्वस्मिन् प्राप्यकारित्वमते चक्षुषो विषयदेशे गमने सति प्राणिनामन्धत्वं प्रसज्यते, चक्षुषोऽभावादिति चेन्न, चक्षुषो विषयेण सह यः सन्निकर्षस्तस्य सन्ततत्वमिति भाष्य-सिद्धान्तस्य पूर्वमुल्लिखितत्वात्।[1] श्रीवाचस्पतिमिश्रैरपि अस्यैव सिद्धान्तस्यानुसृतत्वाच्च। तथा चोक्तं सांख्यतत्त्वकौमुद्यां टिप्पणे वृत्तिः सम्बन्धविशेषः, स चानुच्छिन्नमूलो न तूच्छिन्नमूलः, निर्गताऽप्यच्छिन्नमूला चक्षुःसन्ततिः कार्याय समर्था न छिन्नमूला इति। एतेन **''यदि च चक्षुः प्राप्यार्थं गृह्णीयात्तदोन्मील्य निमीलितनयनोऽपि रूपं पश्येत्, इति निराकृतं भवति। अन्धत्वादिप्रसङ्गोऽपि निरस्तो वेदितव्यः।**[2]

परीक्षितं तावदिन्द्रियाणां विषयसन्निकर्षे विषयाकारवृत्तिरूपा प्रत्यक्षप्रमा। तत्र चक्षुषो विषयदेशे गमनेन प्राप्यकारिता, अन्येषां तत्र गमनाभावेनाप्राप्यकारिता, विषयस्यैवेन्द्रियदेशे प्राप्तौ सत्यां प्राप्यकारिता।

## इन्द्रियाणां स्वद्रव्यगुणव्यञ्जकत्वविचारः

गन्धयुक्तद्रव्याणां कस्तूरिकादीनां गन्धविशेषार्थमुपादानाम्, यस्मात् तेषामेव गन्ध-व्यञ्जकत्वम्। यथाहि क्षितिद्रव्यव्यक्तयः प्रत्येकं सामस्त्येन च गन्धाभिव्यक्त्यर्थमुपादीयन्ते नैवं जलादिव्यक्तयः इति पृथिवीद्रव्यव्यक्तीनामेव गन्धाभिव्यञ्जकत्वम्। न च वाच्यं गन्धयुक्तिद्र-व्याणि गन्धविशेषस्योत्पादकानि नाभिव्यञ्जकानीति; उत्पादकत्वेऽप्यभिव्यञ्जकत्वाविरोधात्। ग्रहणयोग्यत्वापादकत्वं हि द्रव्यव्यञ्जकत्वम्। तच्चोत्पादकत्वेऽप्यविरूद्धमिति। एवं रसनादि-ष्वपि प्रयोगा इति। आप्यं रसनेन्द्रियम्, द्रव्यत्वे सति रूपादिमध्ये रसस्यैव व्यञ्जकत्वात्, घटोदकवत्। तैजसं चक्षुः, द्रव्यत्वे सति रूपादिषुमध्ये रूपस्यैव व्यञ्जकत्वात् प्रदीपवत्। वायवीयं स्पर्शनेन्द्रियम्, द्रव्यत्वे सति रूपादिषु मध्ये नियमेन स्पर्शग्राहकत्वाद् व्यञ्जनानिलवत्।

---

1 धारावाहिप्रत्यक्षेऽव्याप्तिनिरासावसरे, पृ० 10

2 सां०त०कौ०, टिप्पणम् बलरामोदासीन०, पृ० 58

**तैजसेन चक्षुषा पार्थिवरूपग्राहकत्वविचारः**

यदि इन्द्रियं स्वद्रव्यगुणस्यैव ग्राहकं तदा तैजसं चक्षुः पार्थिवरूपस्य ग्राहकं कथं स्यात्? अथ च आप्येन रसनेन पार्थिवरसस्य ग्रहणं कथं स्यात्? एवञ्च वायवीयस्पर्शेन्द्रियेण पृथिव्यादिगतस्पर्शस्य ग्रहणं कथं स्यात्? तदुच्यते तैजसेनापि चक्षुषा पार्थिवरूपस्य व्यञ्जकत्वं लोकसंसिद्धम्। अथ च आप्येनापिरसनेन्द्रियेण पार्थिवरसस्य व्यञ्जकत्वं संसिद्धम्। वायवीयेन स्पर्शेनेन्द्रियेण पृथिव्यादिगतस्पर्शव्यञ्जकत्वं संसिद्धम्। अतः रूपादि विषये अयं नियमः न तु तदाश्रयविषये नियमः। चक्षुषा रूपगुणस्य व्यञ्जकता भवति। अथ च रसनेन्द्रियेण रसस्य व्यञ्जकत्वं एवञ्च स्पर्शेन्द्रियेन स्पर्शस्य व्यञ्जकत्वम्। तेच रूपादयः विषयाः केषुचिद् द्रव्येषु आश्रिताः स्युः। यथा तैजसं प्रदीपादि द्रव्यं रूपमेव प्रकाशयति तद्वदेव तैजसं चक्षुः रूपमेव व्यनक्ति। उक्तञ्च न्यायमञ्जर्यां-[1]

**''रूपादिविषयविषयोऽपि ह्येषां नियमो न तदाश्रविषयः तैजसं हि प्रदीपादिद्रव्यं रूपमेव प्रकाशयद् दृश्यते न तेजोवृत्त्येव रूपम्।।''**

यत् पुरनभ्यधायि भौतिकत्वे परगुणवत् स्वगुणस्यापि प्रकाशमिन्द्रियं स्यादिति, तदयुक्तम्, सगुणस्येन्द्रियस्येन्द्रियभावात्। इन्द्रियेण हि सत्ता तेन विषयः परिच्छिद्यते सगुणस्य चास्येन्द्रियत्वं स्वगुणरहितं तदिन्द्रियमेव न स्यात्, अनिन्द्रियञ्च कथं ग्राहकमत इन्द्रियगुणानां अन्तः पतितत्वान्न प्रमेयत्वम्। तस्माद्भौतिकानीन्द्रियाणि स्वं स्वं विषयमुपलभ्यन्त इति।

प्रयोगस्तु पार्थिवं घ्राणं द्रव्यत्वे सति रूपादिमध्ये गन्धस्यैव व्यञ्जकवाद् गन्धयुक्तद्रव्यवत्, तत्र व्यञ्जकत्वमात्रमनैकान्तिकमिति गन्धस्यैव विशेष्यते। सोऽयमसिद्धो हेतुर्भवेत्, गन्धत्वस्यापि घ्राणव्यत्वादिति रूपादिमध्येत्युक्तम्। तथापि सन्निकर्षेण व्यभिचार इति तद्व्युदासाय द्रव्यत्वे सतीति विशेषणम्, एवं रसनादिष्वपि प्रयोग रचनीयाः। श्रोत्रं त्वाकाशैकदेश इति शब्दाधिकरणे

---

[1] न्या०म०, अष्टमाह्निकं, पृ० 275

निर्णीतम्। गन्धादिविषयोपलब्धिनिबन्धनसुखदुःखोपभोगहेतुभूतधर्माधर्मोपनिबद्धानां चेन्द्रियाणामिन्द्रियत्वमिति। तद्वशाद् यथा नियतविषयग्रहणकारणता घटते, तथा कल्प्यत इति सर्वमनवद्यम्।

इन्द्रियार्थसन्निकर्षजन्यज्ञानं प्रत्यक्षमित्युक्तम्। तत्रेन्द्रियाणां भौतिकत्वं अथ च तत्तद्-द्रव्याश्रित गुणप्रकाशकत्वमुक्तम्- यतश्च लक्षणप्रमाणाभ्यां वस्तुसिद्धिर्भवतीति रीत्या इन्द्रिय-सामान्यलक्षणं विशेषलक्षणञ्च सप्रमाणमुच्यते।

**मीमांसकानां नये इन्द्रियाणां प्राप्यकारित्वाप्राप्यकारित्वविचारः**

अथ वार्तिके श्रोत्रचक्षुषोः विषयमप्राप्यैव प्रत्यक्षजनकत्वेन तत्रेन्द्रियसंप्रयोगाभावेन लक्षणमव्यापकमिति बौद्धानामाक्षेपः संप्रयोगशब्दस्य व्यापारमात्रबोधकत्वाङ्गीकारेण परिहृतः। तद्यथा-[1]

> **''ततश्चाप्राप्यकारित्वाद् यद्बौद्धैः श्रोत्रचक्षुषोः।**
> **लक्षणाव्याप्तिसिद्ध्यर्थं संयोगो नेति कीर्त्यते।।**
> **प्राप्यग्रहणपक्षे हि सान्तराग्रहणं किल।**
> **अधिष्ठानाधिकश्चार्थो न गृह्येत त्वगादिवत्।।**
> **व्यापारमात्रवाचित्वादविरूद्धं तदत्र नः।।''** इति।

अयमस्यार्थः- एवं सूत्रावयवव्याख्यानेन यत् बौद्धैः **''श्रोत्रचक्षुषोः अप्राप्यकारित्वात् ग्राह्यार्थसंयोगो नास्ति। अनयोः प्राप्यकारित्वं तु न संभवति। अर्थं प्राप्यज्ञान-जनकत्वपक्षे सान्तरग्रहणं न स्यात्। एतावति दूरे शब्दः श्रूयते, एतावति दूरे पर्वतो दृश्यते इति अन्तरालदेशविशिष्टः अर्थः श्रोत्रेण चक्षुषा च गृह्यते। अनयोरप्यर्थं प्राप्य प्रत्यक्षजनकत्वे इन्द्रियार्थयोर्मध्ये व्यवधायकस्यान्तरालदेशस्यैवाभावेन तद्ग्रहणं न स्यात्। एवं श्रोत्रचक्षुषोः प्राप्यकारित्वे, यथा प्राप्यकारिणा त्वगिन्द्रियेण स्वाधिष्ठानभूतचर्मणः यत्परिमाणं तत्तुल्यपरिमाणमेव वस्तु गृह्यते, नाधिकपरिमाणं,**

---
[1] श्लो0वा0, 4/40-42

**तथा आभ्यामपीन्द्रियाधिष्ठानभूतनेत्रगोलककर्णशष्कुलीपरिमाणतुल्यपरिमाणमेव वस्तु गृह्येत, ततश्च परिमाणतः अधिष्ठानापेक्षया अधिकानां महीधरादीनां प्रत्यक्षं न स्यात्।''** इति लक्षणाव्याप्तिसिद्ध्यर्थमुक्तं; तत् संप्रयोगशब्दस्येन्द्रियव्यापारमात्रवाचित्वाद-स्माकमविरुद्धम्। इन्द्रियाणामप्राप्यकारित्वेऽपि संप्रयोगशब्दस्य प्राप्ति (संयोग) वाचकत्वा-भावेनाव्याप्त्यभावादिति।

अथवाऽर्थार्जवावस्थानमेव (ग्राह्यस्यार्थस्य सम्मुखास्थितिरेव) संप्रयोग इत्यस्तु। चाक्षुषादिप्रत्यक्षरूपकार्यलक्षिता या इन्द्रियरूपकारणनिष्ठा रूपाद्यर्थसंबन्धिनी कार्यजननयोग्यता सैव वा संप्रयोगशब्दार्थोऽस्तु। सर्वथाऽप्राप्यकारित्वेऽपि न लक्षणस्याव्याप्तिः।

वस्तुतः प्राप्यकारित्वं वदतः सांख्यादीन् विनिर्जित्यैव प्राप्यकारित्वपक्षो बौद्धैः दूषयितुं शक्यः। न च ते निर्जेतुं शक्याः। एवं हि श्रोत्रचक्षुषोः प्राप्यकारित्वेऽनुमानप्रयोगः- **''श्रोत्र-चक्षुषी प्राप्यकारिणी, इन्द्रियत्वात्, त्वगादिवदिति।** न च कर्णशष्कुलीनेत्रगोलकयोः शरीरदेशे एवोपलम्भेन विषयदेशे अनुपलम्भेन पूर्वोक्तं प्राप्यकारित्वानुमानं योग्यानुपलब्धि-बाधितमिति वाच्यम्। सांख्यरीत्या अहङ्कारपरिणामयोः श्रोत्रचक्षुषोः शरीराद्बहिरपि वृत्तिसत्त्वेन तस्याः विषयप्राप्तिसत्त्वेऽपि अप्रत्यक्षत्वेनोपलम्भायोग्यत्वाद्योग्यानुपलब्धेरनुमानबाधिकाया अभावात्। इन्द्रियाणि न प्रत्यक्षाणि, तेषामधिष्ठानान्येव प्रत्यक्षगम्यानि।

न चेन्द्रियाणामसौष्ठवे चिकित्सादिप्रयोगस्याधिष्ठानेष्वेव क्रियमाणत्वेनाधिष्ठानान्येवे-न्द्रियाणीति वाच्यम्। चिकित्सादिप्रयोगस्याधिष्ठाने क्रियमाणत्वेन तत्संस्कारत्वेऽपि तद्द्वारा तदाधेयेन्द्रियोपकारकत्व संभवात्। यदा पादादौ क्रियमाणः आज्यैरण्डलेपनादिरूपः संस्कारः अन्यदेशस्थोऽपि चक्षुरादिकमुपकरोति। तदा इन्द्रियाधिष्ठानदेशे क्रियमाणः संस्कारः अपरित्यक्ताधिष्ठानसंबन्धाया इन्द्रियवृत्तेः सर्वावयवव्याप्तमुपकारं कथं न जनयेत्?

यत्तु प्राप्यकारित्वे सान्तरग्रहणमधिष्ठानाधिकग्रहणं च न स्यादित्यापादितं, तत्रोच्यते- श्रोत्रचक्षुषोः बहिर्वृत्तिः पृथ्वग्रा सन्तता चेष्टा। तेन यत्र वृत्तिभागे यादृशं पृथुत्वं स्यात् तदनुरूपमधिष्ठानाधिकं वस्तु गृह्यते। तथैव दूरेऽपि ग्रहणम्। अर्थात् यावद्दूरं वृत्तिर्गच्छति तावति

दूरे विद्यमानमेवार्थं प्रकाशयति। कियद्दूरं गच्छतीत्येतत् कार्येणैवानुमीयते। अतो नातिदूरस्थस्यार्थस्य ग्रहणापत्तिः। विच्छिन्नः इति बुद्धिः इन्द्रियाधिष्ठानमपेक्ष्य स्यादिति।

नन्वर्थं प्राप्ता इन्द्रियवृत्तिः नष्टेऽप्यधिष्ठाने कुतोऽर्थं न प्रकाशयतीति चेदुच्यते- यथा दीपप्रभा बहिर्गतापि दीपे नष्टे विनश्यति, तथेन्द्रियवृत्तिरपि आधारभूताधिष्ठाने नष्टे विनश्यतीति वृत्तेरेवाभावेन न तयाऽर्थप्रकाशापत्तिः। न च नष्टेऽधिष्ठाने अर्थज्ञानासंभवेऽपि तस्मिन् पिहितेऽर्थज्ञानमस्तु इति वाच्यम्। पिधाने, पीन्द्रियवृत्त्या अपेक्षित यत्नराहित्येनार्थ-स्यानुपीतत्वेन आत्मनाऽर्थस्यानुभवितुमशक्यत्वात्। यथोक्तम्-

**अधिष्ठानपिधाने तु सत्याप्युच्छिन्नयत्नया।**
**तयार्थोऽनुपनीतत्वादात्मना नानुभूयते॥** इति।

एवं दूरग्रहणे अधिष्ठानाधिकग्रहणे च चक्षुषः प्राप्यकारित्वेऽपि नानुपपत्तिः। एवमेव श्रोत्रेण दूरस्थो महाँश्च शब्दो गृह्यत इति सांख्याः। परन्तु शब्दस्य विभुत्वेन सर्वगतत्वात् व्यवहितग्रहणं भ्रान्तिरेव। अयं वर्णस्तदपेक्षयाऽधिकपरिमाण इत्येवमाधिक्यग्रहणमपि अमूर्तस्य वृद्धिह्रासाभावात्मकन्न संभवतीति मीमांसकानां सिद्धान्तः।

प्राप्यकारित्वेऽपीन्द्रियाणां न सांख्यरीत्याऽऽहङ्कारित्वं किन्तु भौतिकत्वमेव मीमांसक-सम्मतम्। तास्माभिरिन्द्रियाणां बहिर्वृत्तिरिष्यते। त्वग्घ्राणरसनानां प्राप्यकारित्वं स्पष्टमेव। चक्षुषोऽपि तेजोरूपत्वेन तेजसश्च विसरणस्वभावत्वादर्थप्राप्तिः (संयोगः) उपपन्नः। अदृष्ट-विशेषोपहितकर्णविवरवृत्याकाशरूपं तादृश दिग्रूपं वा श्रोत्रं सर्वगतमपि शब्दं स्वदेशे गृह्णातीति सिद्धं तस्यापि प्राप्यकारित्वम्।



# तृतीयोऽध्यायः

## (क) लौकिकसन्निकर्षविचारः

**"इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमि"**[1]ति अन्नंभट्टपादाः। इन्द्रियस्यार्थेन सन्निकर्षाद् यज्ज्ञानमुत्पत्ते तत्प्रत्यक्षम्। इन्द्रियं चक्षुः, श्रोत्रं, घ्राणं, रसनं, त्वक् चेति पञ्चकम्। अर्थो घटपटादिः इन्द्रियग्रहयोग्यो विषयः। तयो इन्द्रियार्थयोः स्वस्वग्राह्यविषयैः सह इन्द्रियाणां सम्बन्धः सन्निकर्षः। तज्जन्यं ज्ञानं प्रत्यक्षम्। तथा च गौतमसूत्रम् **"इन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्"**[2] इति।

नैयायिकमते हि इन्द्रियाणां प्राप्यकारित्वमप्युपगम्यते। अतः इन्द्रियार्थयोः सन्निकर्ष षड्विधं बाह्यप्रत्यक्षहेतुतयाऽभिवर्ण्यति ते। सन्निकर्षमिदं प्रथमतः सूत्रकारेण प्रत्यक्षलक्षणे ततश्च भाष्यकारेण च प्रयुक्तम्। सम्+नि+कर्षः, सम्बन्ध इत्यर्थः।

सन्निकर्षोऽयं द्विविधः लौकिकालौकिकभेदेन। तत्र लौकिकप्रत्यक्षे यो विषयेन्द्रिययोः सन्निकर्षः स षड्विधः। यथाहि- **"विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः।"**[3] इति।

इन्द्रियग्राह्याणामर्थानां षड्विधत्वेनैव सन्निकर्षोऽपि षड्विधत्वमिति बोध्यम्। ते च सन्निकर्षाः षड्विधाः इति उद्योतकरेण न्यायवार्तिके स्पष्टीकृतम्। यथा-

**"सन्निकर्षः पुनः षोढा भिद्यते, संयोगः, संयुक्तसमवायः, संयुक्तसमवेत-समवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति"**[4] इति।

---

1 तर्कसंग्रह, प्र0खं0, पृ0 78
2 न्या0द0, सूत्र- 1/1/4
3 न्या0सि0मु0, प्र0खं0, पृ0 59
4 न्या0वा0, पृ0 199

**संयोगः-** **''द्रव्यग्रहस्तु संयोगात्''**[1] इति कारिकावल्यां प्रत्यक्षयोग्यद्रव्याणां प्रत्यक्षे संयोगः सन्निकर्षः। घटादि द्रव्यै सह चक्षुरादीनामिन्द्रियाणां संयोगे इति घटादि द्रव्याणां प्रत्यक्षं भवति। **''द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम्''**[2]। तत्र चक्षुः, त्वक्, मनश्चेति त्रीणीन्द्रिययाण्येव द्रव्यप्रत्यक्षे समर्थान। तत्र त्वक्, चक्षुः च बाह्यद्रव्यग्रहणे एव समर्थे, मनस्तु केवलमात्मानमात्मधर्मान् च गृह्णाति। घ्राणं, रसनं च द्रव्यैः सह संयोगे सत्यपि द्रव्यग्रहणे समर्थो न भवति। श्रवणस्य तु द्रव्यैः सह संयोग एव न सम्भवति। अत्र च विशेष्यैव कार्यकारणभावस्वीकारात् द्रव्यचाक्षुषं प्रति चक्षुः संयोगः कारणम्, द्रव्यस्पार्शन् प्रत्यक्षे त्वक् संयोगः कारणमित्येवं बोध्यम्।

**संयुक्तसमवायः-** द्रव्येषु समवेतानां समवायेन वर्तमानानां गुणकर्मसामान्यानां प्रत्यक्षं तु संयुक्तसमवायतः इन्द्रियसंयुक्तसमवायसन्निकर्षेण भवति, अतः संयुक्तसमवायो द्वितीयः सन्निकर्षः।[3] इन्द्रियसंयुक्तेषु घटादि द्रव्येषु घटरूपघटत्वादीनां समवायसम्बन्धेन वर्तमानात्संयुक्तसमवायसन्निकर्षः श्रवणेन्द्रियभिन्नानां सर्वेषामिन्द्रियाणां क्षेत्रे सम्भवति। घ्राण-रसनाभ्यां गन्धरसयोः प्रत्यक्षे संयुक्तसमवाय एव सन्निकर्षः। मनसा आत्मगुणानां सुखदुःखादीनामात्मत्व द्रव्यत्वादि जातीनां प्रत्यक्षे च संयुक्तसमवायः सन्निकर्षः।

**संयुक्तसमवेतसमवायः-** प्रत्यक्षयोग्यगुणेषु आश्रितानां रूपत्वादि सामान्यानां प्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। रूपाधिकरणं घटादिकमिन्द्रिये संयुक्तं, तत्र रूपादिकं समवेतं तत्र रूपत्वजातिः समवायसम्बन्धः वर्तते इति तत्प्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः।

**समवायः-** श्रोत्रेण शब्दसाक्षात्कारे समवायसन्निकर्षः। श्रोत्रेन्द्रियं नाम कर्णविवरावच्छिन्नाकाशमिति नैयायिकाः। शब्दश्चाऽऽकाशस्य गुणः। गुणगुणिनोश्च समवायसम्बन्ध इति

---
[1] न्या०सि०मु०, प्र०खं०, का०सं०- पृ० 59
[2] न्या०सि०मु०, प्र०खं०, पृ० 200
[3] न्या०सि०मु०, प्र०खं०, पृ० 200

आकाशरूपेण श्रवणेन्द्रियेण शब्दस्य सम्बन्धः समवाय एव। अतः शब्दप्रत्यक्षे समवायसन्निकर्षः।

**समवेतसमवायः-** शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः।[1] कर्णविवरावच्छिन्ने आकाशे शब्दः समवेतः शब्दे च शब्दत्वादिकं समवायसम्बन्धेन वर्तते इति तत्तत्प्रत्यक्षं समवेतसमवायः सन्निकर्षः।

**विशेषणविशेष्यभावः-** न्यायमते इन्द्रियेणेन्द्रियसम्बद्धविशेषणतया तत्सम्बद्ध-विशेषणतया वा अभावस्य प्रत्यक्षं भवति। अनुपलब्धिस्तु सहकारिकारणं न तु करणम्। घटाभाववद्भूतलमित्यत्र चक्षुः संयुक्तं भूतलम्, तत्र घटाभावस्य विशेषणतया चक्षुःसंयुक्तविशेषणतासन्निकर्षेण चक्षुषा घटाभावस्य प्रत्यक्षं भवति। भूतले घटाभाव इत्यत्र तु चक्षुसंयुक्ते भूतले घटाभावस्य विशेष्यतया चक्षुःसंयुक्तविशेष्यतासम्बन्धेन चक्षुषा घटाभावस्य प्रत्यक्षं भवति। एवं विशेषणतात्वेन नानाविशेषणताया, विशेष्यतात्वेन नानाविशेष्यताया ग्रहणाद्विशेषणताविशेष्यता वा सन्निकर्षः अभावप्रत्यक्षस्थले स्वीक्रियते।[2]

केचित्तु भूतले घटाभाव इत्यत्रापि चक्षुः संयुक्तविशेषणतासन्निकर्षं स्वीकृत्य सर्वत्राऽऽभावप्रत्यक्षस्थले विशेषणतात्वेनानुगतरूपतया एकस्या एव विशेषणतायाः सन्निकर्षमिच्छन्ति। **'रूपसमवायी घटः, रससमवायी सूपः'** इत्यादिप्रतीतिस्थले घटो विशेष्यः, रूपसमवायश्च विशेषणमित्यादिरीत्या विशेषणविशेष्यभावः सन्निकर्षः स्वीक्रियते। वस्तस्तु तत्रापि चक्षुसंयुक्तो घटः, तत्र विशेषणं समवाय इति चक्षुः संयुक्तविशेषणतया घटे रूपसमवायस्य चक्षुषा प्रत्यक्षं भवति। एतच्च नैयायिकानां मते।

वैशेषिकमते समवायस्य प्रत्यक्षं न भवति। एवं रसनासंयुक्ते सूपे विशेषणतया रससमवायस्य रसनेन्द्रियेण प्रत्यक्षं भवतीति समवायस्य विशेषणतया प्रत्यक्षं स्वीक्रियते।

---

[1] (क) न्या०सि०मु०, प्र०खं०, पृ० 203
(ख) तर्कसंग्रह, पृ० 84
[2] न्या०सि०मु०, प्र०खं०, का०-62

मीमांसकैर्वेदान्तिभिश्च एतन्नानुमन्यते। ते हि एवं वदन्ति। यत्र सम्बन्धान्तरं संयोगादिकं विद्यते तत्रैव विशेषणविशेष्यभावो भवति। घटवद्भूतलमित्यत्र घटभूतलयोः संयोगसम्बन्धोऽस्ति। तेन तं संयोगमवलम्ब्यैव तत्र प्रतीतो घटो विशेषणम्, भूतलन्तु विशेष्यम्। यथा वा नीलं सरोजमिति प्रतीतौ नीलसरोजयोस्तादात्म्यसम्बन्धोऽस्ति। मीमांसकादिमते गुणगुणिनोस्तादात्म्यसम्बन्धः स्वीक्रियते। तं तादात्म्यसम्बन्धमुपाश्रित्य सरोजस्य विशेष्यत्वम्, नीलस्य विशेषणत्वं सिध्यति। अभावस्य तु संयोगादिसम्बन्धो नास्ति, तत् कथं तत्र विशेषणविशेष्यभावः? एवं समवायस्यापि नास्ति सम्बन्धान्तरम्, तत्कुतो वा तत्र विशेषणविशेष्यभावः? तेन अभावस्येन्द्रियसम्बन्धाभावादनुपलब्धिरूपोऽभाव एव तत्प्रतीतौ करणं स्वीक्रियते।

तत्र नैयायिकैरूच्यते विशेषणविशेष्यभावस्य सम्बन्धातारनियम्यत्वं नास्ति। कुत्रचित् सम्बन्धान्तरसम्भवस्थले विशेषणविशेष्यभावस्य सत्वेपि न सर्वत्र तथात्वं स्वीक्रियते। अभावस्थले सम्बन्धान्तराभावेऽपि विशेषणविशेष्यभावोऽस्ति। न चाभावस्य न प्रत्यक्षत्वम् किन्तु अभावप्रमाणगम्यत्वमिति वाच्यम्। योग्यानुपलब्धिसहकारेणेन्द्रियेणैवाभावस्य प्रत्यक्षत्व-सम्भवादतिरिक्तप्रमाणकल्पनमयुक्तम्। न चेन्द्रियस्याधिकरणप्रत्यक्षे अन्यथासिद्धत्वम्। अधिकरणप्रत्यक्षानन्तरमपीन्द्रियस्य सत्यापारतयाऽन्यथासिद्धत्वाभावात्। न हि व्यापारेण व्यापारिणोऽन्यथासिद्धत्वं भवति इति संक्षेपः।

उपर्युक्तेषु षड्विधसन्निकर्षेषु संयोगसमवायविशेषणविशेष्यभावास्त्रयः साक्षात्सम्बन्धाः सन्ति, अन्ये च त्रयः परम्परासम्बन्धाः सन्ति। यद् द्रव्यप्रत्यक्षं प्रति विषयेन्द्रियसंयोगः, सन्निकर्षः कारणं भवति, तत्र द्रव्येविद्यमानानां गुणकर्मजातिनां प्रत्यक्षं प्रति संयुक्तसमवायः, तत्र च गुणकर्मणोर्विद्यमानाया जातेः प्रत्यक्षं प्रति संयुक्तवमवेतसमवायः सन्निकर्षः कारणं भवति। यद्द्रव्यं येनेन्द्रियेण गृह्यते, तद्गताः गुणकर्मजातयस्य तदभावश्च तेनैवेन्द्रियेण गृह्यन्ते।

अत्रेदमपि ज्ञातव्यम् – न्यायमते द्रव्यप्रत्यक्षं प्रति उद्भूतरूपं वा उद्भूतस्पर्शोऽपि वा कारणं भवति। अतश्च द्रव्यप्रत्यक्षं प्रति चक्षुषस्त्वन्योऽपि वा करणत्वम्। अन्यानि च घ्राणरसनश्रोत्राणि त्रीणीन्द्रियाणि न द्रव्यप्रत्यक्षं प्रति किन्तु द्रव्यगतगुणजात्यादिप्रत्यक्षं प्रति करणानि भवन्ति। अत्र च प्राचीनानां नवीनानां च नैयायिकानां मतं विभिद्यते। द्रव्यप्रत्यक्षं प्रति चक्षुरेव कारणम्। त्वक् तु घ्राणादिवत् गुणस्यैव ग्राहकमिति प्राचीनाः। नव्यास्तु चक्षुस्त्वचश्च द्रव्यप्रत्यक्षं प्रति तद्गतगुणकर्मजातीनां तदभावस्य च प्रत्यक्षं प्रति कारणत्वं प्रतिपादयन्ति। अन्यानि चेन्द्रियाणि गुणकर्माभावादीनामेव ग्राहकमिति। द्रव्यप्रत्यक्षं प्रति चक्षुषस्त्वचश्चोभयस्यापि करणत्व स्वीकारे तदस्वीकारे च हेतुरमं यत् प्राचीनाः द्रव्यप्रत्यक्षं प्रति उद्भूतरूपस्य नवीनास्तु रूपस्पर्शयोर्द्वयोः करणत्वं स्वीकुर्वन्ति।[1]

न्यायसिद्धान्तमुक्तावलीकारेण अत्र मध्ययोर्मार्गः आश्रितः, उद्भूतरूपवद्द्रव्यमात्रप्रत्यक्षं प्रति त्वचोऽपि चक्षुषोऽपि च करणत्वस्य तेन स्वीकारात्।[2]

अत्र त्वाचप्रत्यक्षं प्रत्यपि उद्भूतरूपस्य सत्वमपेक्षितम्। विश्वनाथस्य मते इन्द्रियान्तर-जन्यप्रत्यक्षमपि तत्रोद्भूतरूपस्य विद्यमानत्व एव भवति। एवं चात्र मते परमाणुगतरूपादीनां प्रत्यक्षं न सम्भवति तत्रोद्भूत रूपस्याभावात्। परं विश्वनाथस्येदं मतं तदा समीचीनं प्रतिभायात्यदा साऽऽकाश समवेतशब्दस्य मन्यते च शब्दस्य वायुवृत्तिस्पर्शस्य च प्रत्यक्षत्वं तेन। अत एव तेनोद्भूतरूपस्य न प्रत्यक्षमात्रं प्रति कारणत्वं स्वीकृतम्, किन्तु द्रव्यप्रत्यक्षं प्रति। एवञ्चास्य मतेन वायोर्न प्रत्यक्षत्वं किन्तु स्पर्शाश्रयत्वेनानुमेयः सः। वायुवृत्तिस्पर्शाख्य-गुणस्य तु त्वग्ग्राह्यत्वं त्वचश्च प्रत्यक्षेन्द्रियत्वमभिमतमेव।[3]

वैशेषिकमते समवायस्य प्रत्यक्षत्वं नाऽऽश्रिता नैयायिकानां मते तु समवायः प्रत्यक्षसिद्धः। तस्य समवायस्य प्रत्यक्षत्वेऽपि विशेषणविशेष्यभावः स्वीक्रियते नैयायिकैः।

---

1 न्या०सि०मु०, प्र०खं०
2 न्या०सि०मु०, प्र०खं०
3 न्या०सि०मु०, प्र०खं०, वायुनिरूपणम्

तथा समवेतो गुण इति प्रत्यक्षं समवायेन सह विशेषणता सन्निकर्षः। द्रव्ये समवाय इति प्रत्यक्षे च विशेष्यता सन्निकर्षः इति बोध्यम्। यथा हि[1]-

**"प्रत्यक्षं समवायस्य विशेषणतया भवेत्।"**

यद्यपि सूत्रभाष्यकाराभ्यां केवलं सन्निकर्ष शब्द एव कण्ठरवेणोक्तः। वार्तिककारेण षोढा तद्विभागः अभिहितः। वार्तिकानन्तरकालिकेषु सर्वेष्वपि न्यायग्रन्थेषु प्रामाणिकेषु विभागोऽयमादृतः।

न्यायदर्शने तृतीयाध्यायप्रथमाऽह्निके इन्द्रियाणां प्राप्यकारित्व समर्थनेन[2] प्रथमाध्याय प्रथमाऽह्निके गन्धादीनां गुणानां तत्तदिन्द्रियजन्यज्ञानविषयत्वनिदर्शनेन[3] च पूर्वोक्त गुणानां तदाश्रयभूतद्रव्याणां च प्रत्यक्षे जननीये आवश्यकः सन्निकर्षः सूत्र सम्मतं एवेति प्रतीयते।

एवमेव वैशेषिकदर्शनेऽपि षड्विधाः सन्निकर्षाः निर्विरोधेन स्वीकृताः। तत्र प्रशस्तपादभाष्ये पञ्चसन्निकर्षाः अङ्गीकृताः। अभावविषये संयुक्तविशेषणतासन्निकर्ष प्रस्तावः तत्र न दृश्यते। परं न्यायकन्दल्यां तु षड्विधः सन्निकर्षः सम्यक्प्रतिपादितः।

---

1 न्या०सि०मु०, प्र०खं०, का०सं०- 61
2 न्या०द०, 3/1/47
3 न्या०द०, 3/1/48

## (ख) अभावसन्निकर्षस्य प्रत्यक्षत्वविचारः

एवमेव आत्मनः प्रत्यक्षे संयोगः कारणं। आत्मसमवेत ज्ञानादि गुणानां मानस प्रत्यक्षे मनः संयुक्तसमवायः सन्निकर्षः मनसः द्रव्यत्वादात्ममनः संयोगः सन्निकर्षः, आत्मनि समवायसम्बन्धेन वृत्तीनामात्मगुणानां मनः संयुक्तसमवायः सन्निकर्षः। आत्मगुण वृत्तीनां ज्ञानत्वादि सामान्यानां मनः संयुक्तसमवेतसमवायः सन्निकर्षः।

अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसम्बद्धविशेषणतासन्निकर्षः। ता विशेषणताः नानाविधाः सन्ति। तत्र वैशेषिकमते समवायो न प्रत्यक्षः। यदि समवायस्य प्रत्यक्षत्वं स्वीक्रियेत तदा रूपादि समवायीनां परमाण्वादिनामपि प्रत्यक्षापत्तिः स्यात्। समवायस्य एकत्वात्।

नव्यास्तु समवायस्यापि प्रत्यक्षत्वमभ्युपगच्छन्ति। सम्बन्धप्रत्यक्षं न कार्यतावच्छेदकम्। अतः वैशेषिकोक्तापत्तिः न संगच्छते।

अत्र विशेषतासन्निकर्षस्य प्रत्यक्षेण सह कार्यकारणभावस्थले, विशेषणतासम्बन्धे-न्द्रियतत्सन्निकर्षभेदेन **'इन्द्रियसम्बद्ध'**[1] इति विशेषणभेदाद् बहुविधो भवति। तेन विशेष-णतासन्निकर्ष एकः षष्ठसंख्यापरक इति कथनं न भवति संगतम्, तथापि विशेषणतात्वेन एकेन धर्मेण विशेषणतानामेकत्वव्यवहारः, अतः षष्ठसंख्यापूरकतया स्वीकृतो वेदितव्य इति भावः।

भूतले जले वा घटपटाद्यभावप्रत्यक्षं प्रति (स्व) चक्षुः संयुक्त (भूतलजल) विशेषता-सन्निकर्षः कारणम्। घटस्थायामेकत्व-संख्यायां गुणे रूपाऽभावो वर्तते तस्य प्रत्यक्षं प्रति चक्षुः संयुक्त (घट) समवेत (संख्या) विशेषणतासन्निकर्षः कारणम्। घटस्यैकत्वसंख्यावृत्ति-संख्यात्वे जातौ रूपाऽभावो वर्तते तस्य प्रत्यक्षं प्रति चक्षुः संयुक्त (घट) समवेत (संख्या) समवेत (संख्यात्व) विशेषणतासन्निकर्षः कारणम्। श्रोत्रे यः शब्दाऽभावस्तस्य प्रत्यक्षं प्रति

---

1 न्या०सि०मु०, प्र०खं०, पृ० 204

श्रोत्रवृत्तिविशेषणतासन्निकर्षः कारणम्। श्रोत्रवृत्तिककारे खत्वजातेरभावो वर्तते तस्य प्रत्यक्षं प्रति श्रोत्रसमवेत (क) विशेषणतासन्निकर्षः कारणम्। एवमाकाशात्मक श्रोत्रे यः कत्वावच्छिन्नस्य ककारस्याऽभावो वर्तते तत्राऽभावे गत्वजातेरभावो वर्तते तस्य प्रत्यक्षं प्रति श्रोत्रविशेषण (ककाराभाव) विशेषणतासन्निकर्षः कारणम्, श्रोत्रे विशेषणं ककाराऽभावः, ककाराऽभावे विशेषणं गत्वजातेरभाव इति। एवं भूतले यो घटाभावस्तत्र वर्तते यो पटाभावस्तस्य प्रत्यक्षं प्रति चक्षुस्संयुक्त (भूतल) विशेषण (घटाभाव) विशेषणता (पटाभावनिष्ठ) सन्निकर्षः कारणम्। यथा घटद्रव्ये गुणः, गुणे गुणत्वं, गुणत्वे पदार्थत्वं, पदार्थत्वे धर्मे घटाभावः, घटाभावे गुणत्वाभावः, इत्येवं क्रमेण विशेषणविशेष्याणामवस्थितिस्तत्र तत्तद्विशेष्येण सह विशेषणानां ये ये सम्बन्धा भवेयुस्ताँस्तानादाय सम्बन्धपरम्परा कल्पनीया। यथा- गुणत्वाऽभावप्रत्यक्षं प्रति चक्षुस्संयुक्त (घट) समवेत (गुण) समवेत (गुणत्व) विशेषण (पदार्थत्व) विशेषणता (गुणत्वाभावनिष्ठ) सन्निकर्षः कारणमिति। येन येन सम्बन्धेन पदार्थाः संकलितास्तत्तत्सम्बन्धपरम्पराऽन्ते विशेषणता योजनीया इत्यूह्यमिति भावः।[1]

विशेषणतात्वेन धर्मेण सा बहुविधाऽपि विशेषणता एकैव स्वीक्रियते अतो न षोढा-सन्निकर्षव्यघातः। अन्यथा, विशेषणतात्वेन एकत्वानभ्युपगमे तु षड्विधसन्निकर्षगणना विरूध्येतेति भावः।

मीमांसकैः अभावो न प्रत्यक्षं, किन्तु अनुपलब्धिप्रमाणजन्याऽनुलम्भात्मकमिति विषय एव, समवायानङ्गीकाराच्च, तयोः प्रत्यक्षानुरोधेन विशेषणतासन्निकर्षो नैव स्वीकार्य इति वदन्ति, तन्मतं दूषयति। अनुपलब्धिसहकृतेनेन्द्रियेणैवाऽभावप्रत्यक्षसम्भवे अनुपलम्भात्मक-प्रमित्यन्तरं तत्करणत्वेनानुपलब्ध्यात्मकं प्रमाणञ्च न स्वीकार्यं गौरवादिति भावः। इन्द्रियजन्येऽ-भावप्रत्यक्षे योग्याऽनुपलब्धिः सहकारिकारणम्। यथा- घटादिप्रत्यक्षाभावो घटाद्यभावप्रत्यक्षे सहकारिकारणम्। वस्तुतस्तु- योग्यताविशिष्टः उपलब्ध्यभावः, योग्यताऽभावनिष्ठा। कारणमेव

---

[1] न्या०सि०मु०, चौखम्भा संस्कृत संस्थान, वाराणसी, पृ० 205

न तु करणमिति।[1] भूतलाद्यात्मकेऽधिकरणे चक्षुःसंयुक्तसंयोगेन घटपटादिप्रत्यक्षज्ञाने जाते सति घटाभावादिकं न प्रत्यक्षो भवति। तत्तदिन्द्रियजन्यसंयोगादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्न-प्रकारताशाल्यनाहार्यनिश्चये जाते सति तत्तदिन्द्रियजन्यसंयोगादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्न-प्रतियोगिताकाभावत्वावच्छिन्नलौकिकप्रकारताशाल्यनाहार्यज्ञानत्वावच्छिन्नं न जायते। विशेष्यता-सम्बन्धेन भूतलनिष्ठं घटाभावज्ञानं प्रति विशेष्यतासम्बन्धेन घटनिश्चयः प्रतिबन्धकः इति। विशेष्यतासम्बन्धेन घटाद्यभावज्ञानं प्रति प्रतियोग्युपलम्भाभावः-[2] विशेष्यतासम्बन्धेन घटाद्यात्मकप्रतियोगिनिश्चयाऽभावः, कारणम्।

ननु अभावप्रत्यक्षे यदि प्रतियोग्युपलम्भाभावः कारणं तदा जलपरमाणौ पृथिवीत्वोप-लम्भाभावसत्वात् पृथिवीत्वाभावप्रत्यक्षमापद्येतेत्याशंकावारणार्थं योग्यताविशिष्टः प्रतियोग्युप-लम्भाभावः कारणमिति। प्रतियोग्युपलम्भाभावे पृथिवीत्वादिप्रत्यक्षाभावे कारणे इति। योग्यता सहकारिकारणतया स्वीक्रियते।[3] सा च कीदृशी? इत्यतो मणिकारमतेन[4] प्रदर्शिता। अत्र तर्कः **'यद्यत्र घटः स्यात्, तर्ह्युपलभ्येत'** इति तत्र **'यद्यत्र घटः स्यात्'** इति प्रथमं दलमापादकम्, प्रतियोगिनो घटस्य सत्वस्याऽऽरोपकं भवति, तेनाऽऽपादकेन प्रतियोगिसत्वारोपेण 'तर्हि उपलभ्येते'त्यापाद्यस्य घटोपलम्भस्याऽऽरोपो भवति। आपाद्याभावेन-घटोपलम्भाभावेन चाऽऽपादकाभावस्य सिद्धिरत्र प्रत्यक्षात्मिका भवति। तत्र आपाद्याभावे यदापाद्यप्रतियोगित्वं धर्मः, घटोपलम्भप्रतियोगिकत्वं धर्मः, स एव योग्यतापदार्थः। तथा च 'प्रतियोगिसत्वप्रसंजनं' घटस्य सत्तायाऽऽरोपो 'यद्यत्र घटः स्यादुत्याकारकः, तेन आरोपेण, प्रसञ्जितप्रतियोगिकः- आरोपितो प्रतियोगी- 'तर्हि उपलभ्येत' इत्यारोप विषयो घटोलम्भः, तदेव प्रतियोगी अभावस्य स घटोपलम्भप्रतियोगिकोऽभावः, तत्राऽभावे यस्तादृश-

---

1 न्या0सि0मु0, पृ0 206
2 'तेनाभावोपलमे प्रतियोग्युपलम्भाभावः कारणम्', न्या0मु0, पृ0 206
3 'तत्र योग्यताप्यपेक्षिता' न्या0सि0मु0
4 'प्रतियोगिसत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा।' न्या0सि0मु0

प्रतियोगिकत्वात्मको धर्मः स एव योग्यतापदार्थः, तादृशयोग्यताविशिष्टप्रतियोग्युपलम्भाभावः प्रतियोग्यभावप्रत्यक्षे कारणमिति।

जलपरमाणौ च यद्यत्र पृथिवीत्वं स्यात् तर्ह्युपलभ्येतेत्यापादयितुमशक्यत्वात् पृथिवीत्वसत्तारोपजन्यारोपविषयपृथिवीत्वात्मकप्रतियोगिकत्वस्य जलपरमाणुगतपृथिवीत्वाभावे विरहात् न तत्र तस्य प्रत्यक्षमिति। प्रतियोगिसत्ताव्यापकोपलम्भप्रतियोगिकत्वं योग्यत्वमिति हृदयम्।

यस्याभावः प्रत्यक्षीकर्तव्यः स प्रतियोगी घटादिः, तस्य सत्वप्रसक्त्या स्यादिति। प्रतियोगी (घट) सत्ताया व्याप्यत्वं, प्रतियोग्युपलम्भस्य च व्यापकत्वम्। यदा यत्र भूतले घटादौ च आलोकसंयोगादिकम्[1], आलोकसंयोगावच्छिन्नोद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्न चक्षुः संयोगो वर्तते तदा तत्र भूतले **'यद्यत्र घटः स्यात् तर्ह्युपलभ्येते'**त्यापादयितुं शक्यते, तादृशाधिकरणे, घटाभावादेश्चाक्षुषप्रत्यक्षं भवतीति यत्र प्रतियोगिसत्ता तत्र प्रतियोग्युपलंभो भवति। तथा च चक्षुस्सन्निकर्षसहकृतो यः प्रतियोगी (घटादि) सत्तानिष्ठव्याप्यता-निरूपितव्यापकतावान् प्रतियोग्युपलम्भस्तस्य विशेष्यतासम्बन्धेनाभावो भूतलादिनिष्ठः प्रतियोग्यभावनिष्ठप्रत्यक्षे हेतुरिति। तन्निष्ठप्रकारताशालि प्रत्यक्षस्य लौकिकविशेष्यतासम्बन्धा-वच्छिन्नप्रतियोगिताकस्वात्मकयोग्यताविशिष्टोऽभावः तदभावप्रत्यक्षे हेतुरिति तु हृदयम्। यत्र आलोकसंयोगाद्यवच्छिन्न-चक्षुस्संयोगो न वर्तते तत्राऽन्धकारे तु **'यद्यत्र घटः स्यात् तर्ह्युपलभ्येत'** इति आरोपितुं न शक्यते। प्रतियोगिसत्ताव्यापक-प्रतियोग्युपलम्भ-प्रतियोगिकत्वात्मकयोग्यताया एवाऽभावेन, योग्यताविशिष्टप्रतियोग्युपलम्भाभावात्मककारणा-ऽभावदन्धकारे घटाभावस्य न चाक्षुषप्रत्यक्षात्मकं कार्यं भवतीति। किन्तु, घटस्य स्पार्शनप्रत्यक्षं त्वगिन्द्रियजन्यप्रत्यक्षं भवत्येव, घटस्पार्शनप्रत्यक्षे आलोकसंयोगस्याऽकारणत्वात्, उद्भूतस्पर्शावच्छिन्नमहत्त्वावच्छिन्नत्वक्संयोगस्यैव कारणत्वात्। तथाचान्धकारेऽपि यदा घटो न

---

[1] तथाहि- 'यत्रालोकसंयोगादिकं वर्तते, तत्र यद्यत्र घटःस्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते।' न्या०सि०मु०, पृ० 207

वर्तते तदा त्वगिन्द्रियजन्याभावप्रत्यक्षं प्रति उद्भूतस्पर्शावच्छिन्न महत्त्वावच्छिन्नत्वक्संयुक्त-विशेषणताया एव हेतुत्वेन तस्याश्चान्धकारेऽपि गृहनिष्ठे घटाभावे सत्त्वात्। तत्र आलोकसंयोगं विनाऽपि स्पार्शनप्रत्यक्षस्य त्वगिन्द्रियजन्यप्रत्यक्षस्य **'यद्यत्र गृहे घटः स्यात् तर्हि त्वचोपलभ्येते**ति आरोपितुं शक्यत्वाद् घटसत्ताव्यापक-घटस्पार्शनोपलम्भप्रतियोगिकत्वात्मक-योग्यताविशिष्टाभावस्य कारणस्य बलाद्-घटाभावस्पार्शनप्रत्यक्षं भवत्येवेति भावः।[1]

अतीन्द्रियपदार्थस्याभावोऽपि न प्रत्यक्षं भवति। गुरुत्वं धर्मः अधर्मः पिशाचः इति ये अयोग्याः प्रत्यक्षाऽयोग्यताऽतीन्द्रियाः पदार्थाः, तेषामभावोऽपि न भवति योग्यः, गुरुत्वाधिकरणे गुरुत्वादि प्रत्यक्षस्य **'यदि घटे गुरुत्वं स्यात् तर्ह्युपलभ्येत'** इत्यापादयितुमशक्यत्वात्। गुरुत्वस्य सर्वथा तुलयाऽनुमेयत्वमेव। एवं धर्माऽधर्मावपि न प्रत्यक्षयोग्यौ, अतो **'यदि मयि धर्मः स्यात् तर्ह्युपलभ्येते**त्यापादनमपि न हि भवति। किन्तु सुखादिफलात्मकलिङ्गेन धर्मोनुमेय एवेति। तथा च तादृशयोग्यताया उपलम्भस्य चाऽप्रसिद्धत्वात् कारणाप्रसिद्ध्यैव कार्यं गुरुवादिप्रत्यक्षमप्रसिद्धिमिति बोध्यम्।

अथ चक्षुरादि मनोऽन्तानामेकैकेन्द्रियजन्यमेकैकेन्द्रियमात्रे ग्राह्यगुणप्रतियोगिकाऽभाव-लौकिकप्रत्यक्षं क्रमेणोपपादयति। पृथिव्यादावुद्भूतरूपस्य चाक्षुषप्रत्यक्षात् **'वायौ यदि उद्भूतरूपः स्यात् तर्हि चक्षुषा उपलभ्येते**त्यापादयितुं शक्यत्वाद्। उद्भूतस्य सत्ताव्यापकचाक्षुषप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाभावात्मककारणसत्वादुद्भूतरूपाऽभावो वायौ गृह्यते इति। एवं पुष्पादुद्भूतसौरभस्य चाक्षुषप्रत्यक्षात् **'पाषाणे यदि उद्भूतसौरभं स्यात् तर्हि घ्राणेनोपलभ्येते**त्यापादयितुं शक्यत्वादुद्भूतसौरभाभावः पाषाणे गृह्यते। एवं मरीचिकादावुद्भूत तिक्त रसस्य रासनप्रत्यक्षाद् गुड़े यद्यदुद्भूततिक्तः **स्यात् तर्हि रसनयोपलभ्येते**त्यापादयितुं शक्यत्वादुद्भूततिक्ताऽभावो गुड़े गृह्यते। रासनप्रत्यक्षप्रतियोगि-कत्वात्मकयोग्यताविशिष्टाभावात्मककारण सत्वादुद्भूततिक्ताभावो गुडे गृह्यते। एवं पृथिव्या-

---

[1] 'आलोकसंयोगं विनाऽपि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात्।' न्या०सि०मु०, पृ० 4

मनुष्णस्पर्शस्य त्वाचप्रत्यक्षाद्वह्नौ **यदि उद्भूताऽनुष्णस्पर्शः स्यात् तर्हि त्वचोपलभ्येते**त्यापादयितुं शक्यत्वादुद्भूताऽनुष्णस्पर्शसत्ताव्यापकत्वाचप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाभावात्मककारणसत्वादुद्भूताऽनुष्णाऽभावो वह्नौ गृह्यते। श्रोत्रे शब्दस्य एकदा प्रत्यक्षादन्यदा **'यदि श्रोत्रे शब्दः स्यात् तर्हि श्रोत्रेणोपलभ्येते'**त्यापादयितुं शक्यत्वात्, शब्दसत्ताव्यापकश्रोत्रजप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽभावात्मककारणसत्वात् शब्दाऽभावः श्रोत्रे गृह्यते।[1]

आत्मनि सुखादेः प्रत्यक्षादन्यदा **'यद्यात्मनि सुखं स्यात् तर्हि मनसोपलभ्येते'**-त्यापादयितुं शक्यत्वाद्, सुखसत्ताव्यापक मानसप्रत्यक्षप्रतियोगिकत्वात्मकयोग्यताविशिष्टाऽभावात्मककारणसत्वादात्मनि सुखाभावो मनसा गृह्येतेति। एवमादयः प्रत्यक्षयोग्यपदार्थाऽभावास्तत्पदार्थग्राहकेन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्याऽऽपादयितुं शक्यत्वादिति भावः।

अथ संसर्गाभावप्रत्यक्षे अन्योन्याभावप्रत्यक्षे च योग्यताभेदमिति।[2] संसर्गाभावस्त्रिविधः-प्रागभाव-प्रध्वंसाभावात्यन्ताभाव भेदात्। तस्य प्रत्यक्षे प्रतियोगिनो घटादेः प्रत्यक्षयोग्यता अपेक्ष्यते। येन केनापीन्द्रियेण यः प्रतियोगी प्रत्यक्षयोग्यः, तस्यैव प्रागभावस्य प्रध्वंसाभावस्यात्यन्ताभावस्य च प्रत्यक्षं भवति। यस्तु प्रतियोगी सर्वथा इन्द्रियाऽगोचरः, तदीयसंसर्गाभावस्य कदापि न प्रत्यक्षम्। तथा च प्रतियोगियोग्यत्वम्- तच्च योग्यमात्रप्रतियोगिकत्वमभावनिष्ठं योग्यता इति। अयोग्याऽप्रतियोगिकत्वे सति योग्यधर्मावच्छिन्नप्रतियोगिताकत्वमिति। अत्र पृथिवीत्वसामान्याभावप्रत्यक्षवारणाय सत्यन्तम्। घटादिनिष्ठगुरुत्वव्यक्तिनिष्ठतद्वयक्तित्वावच्छिन्नावच्छेदकताप्रतियोगिताकाभावात्मक तद्वयक्तिमदत्यन्ताभावप्रत्यक्षवारणाय विशेष्यदलम्।

वस्तुतस्तु इयं योग्यता न जातिरूपा, अभावाऽवृत्तित्वप्रसंगात्, नापि प्रत्यक्षप्रयोजकोपाधिरूपा, सप्तातिरिक्तपदार्थानङ्गीकारात्, नाऽप्यभावरूपा-अननुगतत्वात्। किन्तु प्रतिबन्धका-

1 'श्रोत्रे शब्दाभावः', न्या०सि०मु०, पृ० 208
2 संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता, न्या०सि०मु०, प्रत्यक्षखण्ड

ऽभावत्वात्मिका, सर्वत्र तस्याः सुलभत्वात्। संसर्गाभावभिन्नाऽभावस्य प्रत्यक्षे तु, अधिकरण योग्यता, यदि अधिकरणं प्रत्यक्षयोग्यं भवेत् तदाऽन्योन्याभावस्य प्रत्यक्षं भवत्वेवेति प्रत्यक्ष-विषयाधिकरणवृत्तित्वमन्योन्याभावनिष्ठं योग्यता पदार्थमिति।[1] जात्यतिरिक्तयोग्यधर्मावच्छिन्न-प्रतियोगिताकत्वाऽन्यतरदेवान्योन्याभावे योग्यतेति। अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यतायाः कारणत्वादित्यर्थः। **'स्तम्भः पिशाचो ने'त्यत्र** स्तम्भात्मकेऽधिकरणेप्रत्यक्षाऽयोग्यस्यापि पिशाचस्यान्योन्याभावः पिशाचत्वावच्छिन्नप्रतियोगिताकत्वात्मक योग्यताविशिष्टत्ववद् योग्या-धिकरणवृत्तित्वात्मकयोग्यताविशिष्टत्वाद्वा चाक्षुष प्रत्यक्षो भवति। घटवत्कपालान्योन्याभावस्य भूतले प्रत्यक्षोपपत्तये जात्यतिरिक्तयोग्यधर्मावच्छिन्नप्रतियोगिताकत्वात्मिका योग्यतापि प्रदर्शिता।

---

1 न्या0सि0मु0, प्रत्यक्षखण्ड, पृ0 209

## ( ग ) कणादमते लौकिकसन्निकर्षस्वरूपविचारः

**कणादमते** योगजमपि ज्ञानमिन्द्रियजन्यमिति अभिमतम्। **''इन्द्रियजमपि द्विविधं सर्वज्ञीयमसर्वज्ञीयञ्च।''**[1] सर्वज्ञीयं ज्ञान योगजधर्मलक्षणा प्रत्यासत्ति माध्यमेन जायते। योगजज्ञानेनैव परमाणुगतक्रियायाः तद्गत संयोगादीनां ज्ञानं भवति। अन्यथा परमाणूनां निरूपद्रव्यतया प्रत्यक्षत्वानापत्या तद्गत संयोगादीनां ज्ञानमनुमानेनापि धर्तुं न शक्यते। **''सामग्रीविरहात् कथमेवं महत्त्वस्यापि प्रत्यक्षं प्रतिकारणत्वात् न च परमाणवो महान्तः, रूपवत्त्वस्यापि चाक्षुषप्रत्यक्षकारणत्वात्।''**[2]

यदि च संयोगादिरूप व्यापारवत्तया इन्द्रियस्य करणत्वमुपपद्यते तद्वदेव संयोगाश्रयतया विषयस्यापि व्यापारत्वमुपपद्येत। अतः व्यापारवत्कारणमित्यस्य व्यापारसंबन्धावच्छिन्नकारण-ताश्रयस्य विवक्षितत्वेन घटादेरतादृशत्वेन करणत्वापत्यभावात्।

**परेतु** प्रत्यक्षत्वावच्छिन्नकार्यतानिरूपितकारणत्वरूपप्रत्यक्षकरणत्वस्य सन्निकर्षेपि सत्वात् तत्रातिव्याप्तिवारणाय व्यापारवत्वे सतीति घटादेर्व्यापारवत्त्वेऽपि सकलविषयवृत्त्यनुगतविषय-वाप्रसिद्धया विषयत्वेन प्रत्यक्षत्वेन कार्यकारणभावे मानाभावात् तत्रातिव्याप्त्यप्रसक्त्या व्यापारवत्वे सति कारणत्वमित्यस्य यथाश्रुतार्थ एव निर्दुष्ट इत्याहुः।

**अन्येषु** प्रत्यक्षकारणत्वं प्रत्यक्षप्रमितिभाजकोपाध्यवच्छिन्नकार्यतानिरूपितकारणत्वं न तु प्रत्यक्षत्वावच्छिन्ननिरूपितकारणत्वमिन्द्रियत्वस्यानुगतत्वाभावेन प्रत्यक्षत्वेनेन्द्रियत्वेन कार्यकारण-भावाप्रसिद्धया तादृशकारणताघटितकरणत्वस्याप्यप्रसिद्धेः। एवं च चाक्षुषत्वाद्यवच्छिन्ननिरूपित-कारणत्वस्य चक्षुस्संयोगादावपि सत्त्वेनातिव्याप्तिवारणाय व्यापारवत्वे सतीति विशेषणं घटादेः तादृशकारणत्वाभावात्तत्रातिव्याप्त्यप्रसक्त्या व्यापारवत्त्वे सतीत्यस्य यथाश्रुतार्थ एव निर्दुष्टः।

---

1 वैशेषिकसू०उ०- सूत्र-2, प्रत्यक्षविभागः
2 वै०सू०उ०, प्रत्यक्षविभागः- सू०-2

**वैशेषिकाः** असर्वज्ञीयं प्रत्यक्षमपिद्विविधं स्वीकुर्वन्ति। एकं सविकल्पकं, अन्यच्च निर्विकल्पकम्। वैशेषिकमतानुसारेणैव प्रत्यक्षज्ञानस्य सविकल्पक निर्विकल्पकभेदेन भेदः कृतः। तत्र निर्विकल्पकं ज्ञानमतीन्द्रियमभिमतम्। तत्रेन्द्रियाणां करणताऽस्वीकारात्।

**"घटघटत्वयोर्वैशिष्ट्यानवगाह्येवज्ञानं जायते तदेव निर्विकल्पकं तच्च न प्रत्यक्षम्।"**[1] निर्विकल्पस्य सांसर्गिकविषयतानिरासेनैव घटघटत्वनिरूपितविशेष्यित्वप्रकारित्व-शून्यत्वं लब्धं तयोस्सांसर्गिकविषयतानियतत्वात्। न च तर्हि तस्य निर्विषयत्वापत्तिरिति वाच्यम्। चतुर्थविषयताया घटघटत्वादिनिष्ठाया एव निर्विकल्पीयत्वेन तत्र तादृशविषयत्व-स्वीकारात्। वैशिष्ट्यानवगाह्येवेत्येवकारेण कल्पनीयविशेषणज्ञानस्यापि वैशिष्ट्यावगाहित्वे तस्यापि विशिष्टबुद्धितया विशेषणज्ञानान्तरापेक्षा स्यादेवं तस्यापि वैशिष्ट्यावगाहित्व इत्यनवस्थाभियैव प्राथमिकविशेषणज्ञानं वैशिष्ट्यानवगाह्येव स्वीकार्यमिति सूचितम्।

**वैशेषिक** नये गुणकर्मादीनां समवायसम्बन्धेन द्रव्येषु वृत्तीनां प्रत्यक्षत्वे द्रव्यस्यापि करणताऽभिमता।

**"गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम्"**[2]

समवायसम्बन्धेन द्रव्यवृत्तीनां गुणादीनां द्रव्यघटितः एव सन्निकर्षः स्वीक्रियते। अतः द्रव्यस्यापीन्द्रियसंयुक्तत्वेन स्ववृत्ति गुणादीनां प्रति कारणता विद्यते।

संयुक्तसमवाय, संयुक्तसमवेतसमवायादि परम्परा सम्बन्धेषु आचार्याणां मतैक्यं नास्ति। केचित् एतेषां सन्निकर्षरूपतां स्वीकुर्वन्ति। केचन न स्वीकुर्वन्ति। तत्रोक्तं न्याय-सिद्धान्तमुक्तावल्यां-

**"पृथिवीपरमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथिवीत्वं च चक्षुषा कथं न गृह्यते तत्र परम्परयोद्भूतरूपसम्बन्धस्य महत्वसम्बन्धस्य च सत्वात्।"**[3]

---

1 न्या०सि०मु० प्र०ख०
2 वै०सू०उ०, सू०- 8/1/4
3 न्या०सि०मु०, प्र०ख०, पृ० 440

चक्षुः संयुक्तसमवेतसमवायस्यैव सन्निकर्षत्वे नीलो घट इत्यत्र घटचाक्षुषानुरोधेन चक्षुषा कापालिकासंयोगस्य नील चाक्षुषानुरोधेन कपालसंयोगस्य नीलत्वचाक्षुषानुरोधेन घटचक्षुसंयोगस्य च सन्निकर्षघटकतया हेतुत्वमावश्यकम्। एवञ्च स्वप्रत्यक्षे एकचक्षुस्संयोगस्य स्वसमवेतचाक्षुषे अन्यचक्षुस्संयोगस्य स्वसमवेतसमवेतचाक्षुषे अपरचक्षुस्संयोगस्य घटचाक्षुषं प्रति कापालिककपालयोश्च सन्निकर्षघटकतया हेतुत्वकल्पनायां गौरवं नीलोघट इति चाक्षुषपूर्वं तादृशसंयोगत्रयस्य नियमेन वृत्तौ प्रमाणाभावः घटचाक्षुषकाले कपालसमवेतकपालत्वरूपादीनामपि नियमेन चाक्षुषापत्तिश्च। न च तदानीं कपालत्वादिर्विकल्पकाभावादेव न तदापत्तिरिति वाच्यं घटविषयकनिर्विकल्पकचाक्षुषकाले कपालत्वादिविषयकतादृशचाक्षुषस्य घटविषयकसविकल्पकचाक्षुषकाले कपालत्वादि विषयकतादृशचाक्षुषस्य च नियमेनापत्तेर्दुवारत्वात्। चक्षुस्संयोगस्य प्रत्यासत्तित्वे तु घटस्य तत्समवेतरूपादेः तत्समवेतरूपत्वादेश्च चाक्षुषं प्रत्येकस्यैव चक्षुस्संयोगस्य हेतुत्वसंभवेन लाघवं घटचक्षुस्संयोगकाले कापालिका चक्षुस्संयोगकपालचक्षुस्संयोगयोरनियतत्वेन तदानीं नियमेन कपालत्वादिचाक्षुषापत्त्यभावश्च।

तस्मात्संयोगस्य प्रत्यासत्तित्वावश्यकत्वे यत्र संयोगोबाधितः तत्रैकसंयुक्तसमवायस्य प्रत्यासत्तित्वं यत्रोभयं बाधितं तत्रैव संयुक्तसमवेतसमवायस्य प्रत्यासत्तित्वमिति लाघवबाधकोभयविशिष्टयुक्तेरेव संयोगस्य संयुक्तसमवायस्य च प्रत्यासत्तित्वलाभे परंत्वित्यादि ग्रन्थस्य संयोगादेस्सन्निकर्षत्वव्यवस्थापनपरत्ववर्णनमनुचितम्। तस्य तत्परत्वे चक्षुस्संयोगे उद्भूतरूपावच्छिन्नत्वालोकसंयोगावच्छिन्नत्वविशेषणस्य त्वक्संयोगे उद्भूतस्पर्शाद्यवच्छिन्नविशेषणस्य घ्राणसंयोगे रसनासंयोगे च महत्त्वावच्छिन्नत्वविशेषणस्य च प्रकृतानुपयुक्तत्वेन तद्व्यवस्थापनप्रयासस्य स्वारस्याभावादिति हृदयम्।

**समीक्षा-** संयोगसमावयविशेषणतानामेव सन्निकर्षत्वमात्मप्रत्यक्षानुरोधेन संयोगस्य शब्दप्रत्यक्षानुरोधेन समवायस्याभावप्रत्यक्षानुरोधेन विशेषणतायाश्च सन्निकर्षत्वावश्यकतया लाघवात् न च रूपादिप्रत्यक्षानुरोधेन संयुक्तसमवायोदरपि सन्निकर्षत्वमावश्यकमिति वाच्यमिन्द्रियसंयोगस्य स्वाश्रयसमवायादिसम्बन्धेन हेतुत्वस्वीकारेणैव रूपादिप्रत्यक्षोपपत्तेः न तेषामपि पृथक्सन्निकर्षत्वं गौरवात् अन्यथा महत्वोद्भूतरूपालोकसंयोगादीनां द्रव्यप्रत्यक्षे

कारणत्ववत् द्रव्यसमवेतादिप्रत्यक्षे इन्द्रियसंयुक्तसमवायादेः पृथक्सन्निकर्षत्वे यदाकदाच्चिक्षुस्संयोगाश्रयघटादि समवायं तादृश घटादिसमवेतसमवायं चादाय चक्षुस्संयोगशून्यकालेऽपि रूपरूपत्वादिचाक्षुषापत्तिवारणाय चक्षुस्संयोगविशिष्टसमवायादेरेव सन्निकर्षत्वस्य वाच्यतया समवायनिष्ठविशिष्टानुयोगिकत्वस्य विशेषणावच्छिन्नानुयोगिकत्वरूपस्य संयोगसमकालीनत्वविशिष्टसंयोगाश्रयानुयोगिकत्वपर्यवसितस्य निवेशनीयतया गौरवं संयुक्तसमवायादिघटकसंयुक्तस्य संयुक्तसमवेतस्य च कारणत्वकल्पनेन महागौरवम्।

संयुक्तसमवायादीनां येनकेनचित्सम्बन्धेन हेतुत्वे रूपादिनिष्ठस्य चक्षुस्संयुक्तसमवायादेर्ज्ञानादावपि सत्त्वेन ज्ञानादिचाक्षुषापत्त्या विशिष्टसमवायप्रतियोगित्वादिसम्बन्धेनैव संयुक्तसमवायादीनां हेतुत्वस्य वाच्यतया तादृशरूपेण सम्बन्धत्वकल्पनेन विशिष्टसमवायत्वादेः कारणतावच्छेदककल्पनेन चातिगौरवम्। संयोगमात्रस्य सन्निकर्षत्वे तु ज्ञानादेः तादृशचक्षुस्संयुक्तसमवेतत्वाभावेन ज्ञानत्वादेस्तादृशचक्षुस्संयुक्तसमवेतसमवेतत्वाभावेन च ज्ञानादौ स्वसमवायिसमवायसम्बन्धेन ज्ञानत्वादौ स्वसमवायिसमवेतसमवेतत्वसम्बन्धेन चक्षुस्संयोगस्य चावर्तमानतया न ज्ञानादेश्चाक्षुषापत्तिः।

न चैवं सन्निकर्षस्य षड्विधत्वप्रवादो व्याहन्येतेति वाच्यं तादृश प्रवादस्य निर्युक्तिकत्वेनाश्रद्धेयत्वात्। अथवा द्रव्यचाक्षुषे महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नचक्षुस्संयोगस्य समवायसम्बन्धेन द्रव्यसमवेत चाक्षुषे तादृशसंयोगस्य स्वसमवायिसमवायसम्बन्धेन द्रव्यसमवेतसमवेतचाक्षुषे तादृशसंयोगस्य स्वसमवायिसमवेतसमवेतत्वसंबन्धेन हेतुतया शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायस्य प्रतियोगितासंबन्धेन शब्दसमवेतप्रत्यक्षे, तादृश समवायस्य स्वप्रतियोगिसमवेतत्वसम्बन्धेन हेतुतया, अभावप्रत्यक्षे विशेषणतासन्निकर्षस्य स्वरूपसम्बन्धेन हेतुतया च सन्निकर्षत्रयान्यतमनिष्ठकारणतावच्छेदकसंबन्धानां मिलितत्वात् तादृशप्रवादः समर्थनीयः। तस्मात्संयुक्तसमवेतसमवायस्य पृथक्सन्निकर्षत्वे प्रमाणाभावेन तादृशसन्निकर्षेण संयोगस्यान्यथासिद्धिपरतया परंत्वित्वादिग्रन्थवर्णनं बन्ध्यापुत्रेण स्वपुत्रनिराकरणमिति।

## ( घ ) लौकिकसन्निकर्षस्वीकारेयुक्तयः

यतः सन्निकर्षमन्तरा ज्ञानं न सम्भवति, अतः प्रत्यक्षज्ञाने इन्द्रियार्थसन्निकर्ष-स्योपयोगिता युक्तितः सिद्धाः। न्यायवार्तिककृतापि अस्य सन्निकर्षस्यैव प्रत्यक्षप्रमां प्रति करणत्वमुक्तम्।[1]

**न्यायमञ्जरीकृताऽपि** कमनीययुक्तिभिरुक्तार्थस्य साधनं कृतम्। तथा हि- यदि असन्निकृष्टमपि चक्षुरादीन्द्रियं गृह्णीयात्, तर्हि व्यवहितोऽप्यर्थः स्वत उपलभ्यते, न चोपलभ्यते, तस्मादिन्द्रियस्यार्थेन सह सम्बन्धोऽवश्यमभ्युपगन्तव्यः।

नन्वव्यवधानमेवास्तु, किं सम्बन्धकल्पनया? मैवं वोचः, रसनस्पर्शनयोः स्पष्टं प्राप्यकारित्वम्, तद्वदिन्द्रियान्तरेष्वपि अवश्यं कल्पनीयमिति समेषां ज्ञानेन्द्रियाणां प्राप्यकारित्वेन कारकत्वं स्फुटमायाति। संसृष्टमेव च कारकं फलाय कल्पते इति अर्थेन सह संसर्गोऽवश्यं कल्पनीय इति।[2]

**न्यायकुसुमाञ्जलिकृताऽपि** अयं विशयोऽनुमोद्यते स्म प्रकारान्तरेण। तथा हि- इन्द्रियेणासन्निकृष्टो घटादिर्न हि प्रत्यक्षो भवति। एवं सति सर्वस्य पुरुषस्य सर्वत्रार्थे प्रत्यक्षं स्यात्। अतः सन्निकर्ष एवार्थोपलब्धौ साधकतम इति प्रत्यक्षप्रमां प्रति स एव करणम्। यो हि साधकतमः स एव प्रमाणम्, न पुनर्ज्ञानमज्ञानं वा यद्यत् तत्सर्वं प्रमाणमिति नियमः, संशयादावपि प्रमाणत्वप्रसङ्गादिति तादृशसन्निकर्षस्य प्रमाणत्वं निराबाधमिति।[3]

### उक्तविषये विसंवादि जैनादिदर्शनम्

इन्द्रियार्थयोः सन्निकर्षः प्रत्यक्षं प्रति न करणमित्यत्र न्यायकुमुदकृद् ब्रूते- सन्निकर्षस्य प्रत्यक्षेण सहाऽन्वयव्यतिरेकसहचारौ न स्तः घटे यथा चक्षुषः संयोगः, तथैवाकाशेऽपि

---

[1] "उपलब्धिहेतुः प्रमाणं.......साधकतमत्वाद्वा न प्रसङ्गः"। न्या0वार्ति0, पृ0 5-6

[2] न्या0म0, प्र0भा0, प्रमाणप्रक0, पृ0 69, न्या0म0, द्वि0भा0, पृ0 50

[3] न्यायकुसु0, टी0, पृ0 28

संयोगोऽस्त्येव, कुतो न तत्प्रत्यक्षमिति सन्निकर्षे सत्यपि प्रत्यक्षानुत्पत्तेर्न सन्निकर्षस्य तत्र साधकभाव इति[1]।

**प्रमेयकमलमार्तण्डकृता श्रीप्रभाचन्द्राचार्येणोच्यते-** चक्षुषो घटे इवाकाशेऽपि विद्यमानः संयोगो न तत्प्रत्यक्षोत्पादकः। रूपादिवच्छब्दरसादावपि विद्यमानः संयुक्तसमवायो न तत्प्रत्यक्षं जनयितुं प्रभवति। एवमेव रूपत्ववत् शब्दत्वादौ च प्रवर्तमानः संयुक्तसमवेतसमवायोऽपि न शब्दत्वादिप्रत्यक्षमुत्पादयितुं समर्थः। सन्निकर्षाभावेऽपि च दण्डादिविशेषणज्ञानेन दण्डी इति विशिष्टप्रमितेरुत्पत्तेर्व्यतिरेकव्यभिचारोऽपि। यदि तु सन्निकर्षे ईदृशः शक्त्यतिशयो येनेत्थम्भवति, हन्त! तर्हि स एव हेतुरस्तु, किमनेनान्तर्गडुना सन्निकर्षेणेति।[2] इदन्तु शक्त्यतिशयानङ्गीकारपरास्तम्।

**न्यायदीपिकाकृता** तु चेतनस्यैव प्रमाकरणत्वनियमेन अचेतनरूपस्य संयोगादिसन्निकर्षस्य प्रमाकरणत्वं नैव सम्भवतीति निर्दिष्टम्।[3]

**प्रमाणप्रमेयकलिकाकृताचार्यनरेन्द्रसेनेन** प्रोच्यते- अर्थप्रमितौ साक्षाज्ज्ञानमेव प्रमाणं भवति, न तु सन्निकर्षः। स हि नार्थप्रमितौ साधकतमः, स्वप्रमितौ असाधकत्वात्। न ह्यचेतनोऽर्थः स्वप्रमितौ कारणम्, तत्र प्रमाणत्वव्यवहारस्त्वौपचारिकः प्रदीपादिवत्। किञ्च, सन्निकर्षस्य तद्घटितस्य वा प्रत्यक्षप्रमाणलक्षणत्वेऽव्याप्त्यतिव्याप्तिदोषावपि सम्भवतः। तथाहि यथा घटे चक्षुषा संयुक्ते सति संयोगाद् घटस्य चाक्षुषम्, संयुक्तसमवायात् तदीयरूपस्य, संयुक्तसमवेतसमवायात् रूपत्वस्य; तथैव घटस्य तत्रत्यरसगन्धादेः, तदीयरसत्वगन्धत्वादेश्च तैरेव सन्निकर्षैश्चाक्षुषं जायताम् न च जायते इत्यव्याप्तिरिदानीं (त्वन्मते) तेषामपि लक्ष्यत्वेन, अस्य च लक्षणस्य तेषु असम्मतत्वात्। अज्ञानरूपस्याप्यस्य प्रमाणत्वे घटादिप्रमेयस्यापि प्रमाणत्वं प्रसज्येतेत्यतिव्याप्तिः।[4]

---

[1] न्यायकुमुद0, पृ0 28
[2] प्रमेयक0, प्र0परि0सू0 1-1, पृ0 14
[3] न्यायदीपि0, पृ0 29
[4] प्रमा0प्र0क0, पृ0 15-16

अथ साक्षादर्थप्रमितौ साधकतमस्य ज्ञानस्योत्पादकत्वेन सन्निकर्षस्य प्रामाण्यम्, तर्हि उपचारादेव तस्या प्रामाण्यं वचनीयम्, मुख्यतस्तु ज्ञानस्यैव। तच्च भवता नाऽभ्युपगन्तुं शक्यते, परमताभ्युपगमप्रसङ्गादिति।

**शब्दब्रह्मवादिनामत्रोत्तरः पक्षः**

उक्तेषु विसंवादिमतेषु शब्दशास्त्राचार्या इत्थं निष्कर्षमुपस्थापयन्ति- (1) प्रथमं तावद् यदिदमुच्यते **'अन्वयव्यतिरेकसहचारौ न स्तः।** घटे इवाकाशेऽपि चक्षुषा संयोगसत्त्वेऽपि तत्रप्रत्यक्षाभावेनान्वयव्यभिचारादिति, तन्न युक्तिसिद्धम्-विषयनिष्ठस्योद्भूतरूपस्य विषयप्रत्यक्षे सहकारित्वोपगमात्।[1] एवं चाकाशे चक्षुःसंयोगसत्त्वेऽपि उद्भूतरूपस्य विरहेण न तस्य प्रत्यक्षमिति नान्वयव्यभिचारशङ्कोन्मेषः। यत्तु **प्रमेयकमलमार्तण्ड**कृता घटीयरसरसत्वगन्ध-गन्धत्वादीनामपि चाक्षुषमापादितम्, तदपि न रोचते। तत्तदिन्द्रियजन्यप्रत्यक्षे विषयस्य योग्यतापि सहकारित्वेनापेक्ष्यते इति चाक्षुषप्रत्यक्षे रसगन्धादीनां योग्यत्वाभावान्न तेषां चाक्षुष-मापादयितुं शक्यते। स्पष्टं चैतद् **वाक्यपदीये "घटस्य दृशिकर्मत्वे महत्त्वादीनि साधनम्"** इत्यत्र[2]। अत्र हि 'महत्त्वादीनि' इत्यत्रादिपदेन योग्यत्वस्यापि ग्रहणमुचितम्, दर्शनान्तरसंवादात्,[3] अनुमानाच्च।[4]

**सामान्यलक्षणाग्रन्थे श्रीजगदीशतर्कालङ्कारेण** तादात्म्येन गन्धादेः प्रतिबन्धकत्वं स्वीकृत्य गन्धादेश्चाक्षुषं प्रत्यक्षं निराकृतम्[5], **'यादृग्दृश्यते तादृक्कल्प्यते'** इति सिद्धान्तात्।

यदपि तेन पुनरुच्यते- दण्ड इति विशेषणज्ञानमात्रेण दण्डी इति विशिष्टप्रमितेरुदयान्न सन्निकर्षो हेतुरिति। तदपि न विद्वन्मनोग्राहि, यतो हि दण्डी इति विशिष्टप्रमितिर्यदि विशिष्ट-

---

[1] वा0प0, तृ0का0, कारि0 24। स्फुटीभविष्यति चेदमनुपदमेव।
[2] वा0प0, तृ0का0, साधनसमुद्देशः, हेला0 कारि0 9
[3] न्या0सि0मु0, प्र0ख0, का0 55
[4] शब्दशास्त्रे वाक्यपदीयादिमते उद्भूतरूपालोकमहत्त्वादीनां सहकारित्वस्य शब्दत उक्ततया तेषां सर्वेषां रसादिभिरपि सामानाधिकरण्येन रसादीनामपि प्रत्यक्षं स्यात्।
[5] सा0ल0, जा0टी0 काशि0, पृ0 76-77

प्रत्यक्षात्मिका, तदा दण्ड इति विशेषणेनापि सह चक्षुःसंयोग आवश्यकः। नहि घटवद् भूतलमिति प्रत्यक्षं घटेन सह चक्षुःसंयोगाभावेऽप्युदेतुमर्हतीति न व्यतिरेकव्यभिचारशङ्कावतारः।

यच्च **न्यायदीपिकायामुक्तम्-** सन्निकर्षस्याचेतनत्वान्न प्रमाकरणत्वमिति तदपि न मनोरमम्; अत्र हि अचेतनत्वं प्रमाकरणत्वाभावेन व्याप्तमिति अन्वयत आयाति। प्रमितौ करणत्वं चेतनत्वेन व्याप्तमिति च व्यतिरेकमुद्रयाऽऽयाति। एवं च चेतनस्य (चैतन्याश्रयस्य) कारणत्वे सम्पन्ने को नाम कर्ता तदन्यः स्यात? कर्तारमन्तरेण च करणं न प्रसिध्यति, करणं हि सकर्तृकमिति नियमात्[1]।

अग्रे उक्तमप्राप्यकारित्वमपि न शोभनम्, असन्निकृष्टस्यापि पर्वतवृक्षादेः प्रत्यक्षत्वापत्तेः।

**आचार्यनरेन्द्रोक्तिरपि** न विद्वन्मनोहारिणी, तथाहि स्वप्रमितौ असाधकतमत्वेन सन्निकर्षोऽर्थप्रमितावपि असाधकतम एवेति यदुच्यते, तत्र स्वप्रमितावित्यस्य कोऽर्थः? स्वस्य प्रमितिरिति चेत् तर्हि ज्ञानात्मकप्रमाणस्य ज्ञानान्तरं भवता नूनं स्वीकृतम्, न तु तस्य स्वप्रकाशत्वम्। एवं च स्वसिद्धान्तव्याकोपः।[2] यदि तु स्वं चासौ प्रमितिरिति, हन्त! तर्हि स्वं प्रति स्वस्य साधकत्वमेव न कुत्रचिद् दृष्टम्, कुतः साधकतमत्वम्? तदभावे च कथं स्वप्रमितौ असाधकतमत्वादिति हेतुः सन्निति वक्तुं शक्यते? साधकतमात्मकप्रतियोगिनोऽभावेनासाधकतमस्याप्यभावात्, अलीकप्रतियोगिनोऽभावस्यानङ्गीकारात्।

किञ्च सन्निकर्षस्याज्ञानरूपस्य प्रामाण्ये घटादिप्रमेयस्यापि प्रामाण्यापत्तिरित्यपि न युज्यते वक्तुम्। व्यापारवदसाधारणं कारणं हि करणम्, तच्चात्र सन्निकर्षात्मकव्यापारवत्वादिन्द्रियमेव। घटादिरूपे प्रमेये तु तल्लक्षणमभावान्न प्रामाण्यं प्रसजति।

---

[1] न्या०सि०मु०, प्र०ख०, कारिका 47
[2] प्र०मी०, पृ० 3, अ० 1, आ०, 1, सू० 2 "प्रमाणं स्वपराऽवभासि" न्यायाब० 1

यच्चोक्तम्- साक्षादर्थप्रमितौ साधकतमस्य ज्ञानस्योत्पादकत्वेन सन्निकर्षस्यौपचारिकं प्रामाण्यमित्यादि, तत्रोच्यते- किमिदं ज्ञानं घटादिज्ञानमेव? अर्थप्रमितौ यस्य साधकतमत्व-मुच्यते भवता। तत्रापीदं ज्ञानं किं प्रमारूपम्, अहोस्विदप्रमारूपम्, आद्ये तस्य करणं किम्? अन्त्ये व्यभिचारितया प्रामाण्यं कुतस्तस्येति विभाव्यतां मनीषिभिः। अन्यत्सर्वं समाहितमेव।

**प्रमाणमन्यत्तज्जन्यज्ञानमन्यदित्यत्र मञ्जरीकारः**

चक्षुरादीन्द्रियजनितं कपित्थादिदर्शनं विषयप्रकाशेन व्याप्रियमाणमिवाभातीति करण-मुच्यताम्, विषयानुभवस्वभावात् तदेव फलमपि (प्रमाऽपि), इति प्रमाणादभिन्नमेव फलमस्तु इति यदि ब्रूषे, तदापि प्रमाणस्य स्वरूपहानिप्रसङ्गः स्यात्, करणं हि प्रमाणमुच्यते प्रमीयतेऽनेनेति। नहि क्रियैव क्वचित् करणं भवति, क्रियायां साध्यायां कारकं किमपि करणमुच्यते। तत्र यथा दात्रेण चैत्रः शालिस्तम्बं लुनातीत्यादौ कर्तृकमकरणानि क्रियातो भिन्नानि उपलभ्यन्ते, तथैव चक्षुषा घटं पश्यतीत्यादावपि दर्शनक्रियातः पृथग्भाव एव तेषां युक्तः, इति न ज्ञानं करणमिति आगतम्।[1]

**ज्ञानस्यैव प्रत्यक्षात्मकस्य प्रमाणत्वम्, इन्द्रियस्य त्वौपचारिकम्**

यत्तु कैश्चिदाक्षिप्यते- चक्षुरादिषु इन्द्रियेषु सत्स्वपि घटादिप्रत्यक्षं यदा तैर्न जन्यते, तदा तेषु न करणत्वव्यवहारः, यदा च ज्ञानं समुत्पद्यते तदा भवति करणत्वव्यवहार इति मन्ये करणस्य ज्ञानस्योत्पादकत्वादेव तेषां तत्त्वेन व्यपदेशः, न साक्षात्करणत्वादिति।

**उक्तमतनिरासः**

तदपि अतीवासमञ्जसम्, तथाहि इन्द्रियेणोपजनितं ज्ञानं कस्यां क्रियायां करणम्? परीक्ष्यतामेतत्, नहि आत्मन्येव किञ्चित् करणं भवति। ज्ञानमजनयत्सु इन्द्रियेषु करणत्वं नास्तीति तु इष्यते एव, न हि क्रियोत्पत्तावव्याप्रियमाणं कारकं करणं भवति, ततश्च

---

[1] न्या०म०, प्रमाणप्र०, पृ० 66

ज्ञानक्रियामुपजनयतश्चक्षुरादेरेव करणत्वम्, ज्ञानस्य तु फलत्वमित्येव सिद्धान्तः।[1] किञ्च, यदि ज्ञानस्य प्रमाणत्वमभ्युपगन्तव्यमेव, तदा हानोपादानोपेक्षाबुद्धीनां फलत्वमङ्गीकरणीयमित्यपि उक्तं बहुत्र दर्शनेषु।[2]

अत्र विषये द्वितीयपुष्पस्योपक्रमे एवेन्द्रियविशिष्टान्तःकरणस्य विषयाकारपरिणामरूपा वृत्तिर्भवति, तस्याः प्रमात्वं प्रमाकरणत्वं च **''वृत्तिस्वरूपनिरूपणम्''**, प्रत्यक्षप्रमायां मुख्यपक्षः इत्यनयोर्विषययोर्निरूपणे पर्याप्तं निरूपितमिति पुनर्नोच्यते।

**प्रमाणरूपाया अस्या वृत्तेर्विषये दर्शनान्तरीयो विसंवादः**

बहुशोऽपि कृते विमर्शेऽस्याः वृत्तेः स्वरूपमेव नाऽवतिष्ठते इति कुतोऽस्याः प्रामाण्यमित्यत्र न्यायकुमुदकृतो जैनाचार्याः प्राहुः। तथाहि- नन्वियं वृत्तिरिन्द्रियादिभ्यो भिद्यते, न वा? यदि न भिद्यते तदा श्रोत्रादिरूपैव सा, सुषुप्त्यवस्थायामपि श्रोत्रादिरूपायास्तस्याः सत्त्वेन सुषुप्तप्रबुद्धयोरविशेषः प्रसज्येत। यदि भिन्नैव सा तर्हि किं सम्बद्धा सती सा प्रमाणमुताऽसम्बद्धा सती। यद्यसम्बद्धैव, तदा कथं श्रोत्रादिवृत्तिरियमिति व्यवहर्तुं शक्येत? यद् येनासम्बद्धं न तत् तस्येति व्यवहारो भवति, यथा सह्ये विन्ध्ये इति। अथ सम्बद्धा, किं समवायेन संयोगेन, विशेषणभावेन वा?

अथ समवायस्तदास्य नित्यतया एकतया व्यापितया च श्रोत्रादीनामपि व्यापित्वसद्भावे च प्रतिनियतदेशा वृत्तिर्भवद्भिः कथमङ्गीक्रियते? अथ संयोगस्तदा द्रव्यान्तरत्वप्रसक्तेर्नासौ तद्धर्मः स्यात्। न चेष्टापत्तिः, इन्द्रियाणां वृत्तिरिति कथंकारमिदानीं युज्यते वक्तुम्? वृत्तेः पदार्थान्तरत्वात्। या यस्य वृत्तिर्न सा ततोऽन्यः पदार्थ इति नियमात्। अथ विशेषणभावः, तस्यापि स्वरूपसम्बन्धविशेषत्वे पुनरपि इन्द्रियानतिरिक्तत्वप्रसङ्गः पूर्वोक्त एव स्यात्। तस्मादिन्द्रियवृत्तेर्विचार्यमाणायाः सत्त्वासम्भवात् कथं विषयाकारपरिणतेन्द्रियवृत्त्यालम्बनाः

[1] न्या०म०, प्रमाणप्र०, पृ० 67
[2] जै०द०-प्र०मी०, अ० 1, आ० 1, सू० 40

मनोवृत्तिरिति सुघटं स्यात्, इन्द्रियवृत्तेर्विषयाकारपरिणतत्वानुपपत्तौ मनोवृत्तेस्तदाऽऽलम्बन-त्वानुपपत्तेः।[1]

**स्याद्वादरत्नाकरकृता**[2] **प्रमेयकमलमार्तण्ड**कृताऽऽपि[3] चेयं सरणिरापनीयतां नीता।

**प्रमाणप्रमेयकलिकायां** तु कश्चिद् विशेषोऽप्युक्तः, तथाहि- नाऽपीन्द्रियवृत्तिः प्रमाणम्, अर्थप्रमितौ साधकतमत्वायोगात्। न ह्यचेतनोऽर्थः करणम्, पटवत्। अचेतनत्व-मिन्द्रियवृत्तेरिन्द्रियाणामचेतनत्वात्। तेषामचेतनत्वं तु प्रकृतिपरिणामात्। तथा चोक्तं प्रकृतेर्महान् (सा0का0 22) इति। किञ्च, स्वप्रमितावसाधकतमत्वेनापि चास्या वृत्तेर्नार्थप्रमितौ साधकतमत्वम्, किञ्च, ज्ञानेन व्यवहितत्वादपि नास्याः प्रामाण्यम्, यद् येन व्यवहितं न तत् तत्र प्रमाणम्, कुठारादिव्यवहितलौहकारादिवदित्यादि।[4]

**अत्रोत्तरपक्षः शब्दशास्त्राचार्याणाम्**

पूर्वोक्तं तदेतत्सर्वं न रोचते, तथाहि- अचेतनस्यापि कुठारादेः करणत्वं दृष्टम्। स्वच्छिदायामसाधकतमस्यापि कुठारस्य वृक्षच्छिदायां करणत्वं दृष्टम्। वृत्तेर्ज्ञानेन व्यवहितत्वं नाभ्युपेयते। आवरणाभिभवः, चित्संबन्धः, आवरणभङ्गो वा वृत्तेर्व्यापार इति न व्यवधायकः। व्यापारस्य व्यवधायकत्वे सर्वत्राऽकरणत्वप्रसङ्गात्।

किञ्च, **जैनाचार्यैर्यदुक्तम्-** इन्द्रियवृत्तिर्न प्रमाणम्, अचेतनत्वात् पटवदिति। अत्रोच्यते- चेतनश्चैतन्याश्रयो ज्ञाता इत्युच्यते, ततश्चेतनत्वादित्यस्य चेतनत्वाभावादित्यर्थः। ततश्च व्यतिरेकव्याप्तौ यत्र यत्र प्रमाकरणत्वं तत्र ज्ञातृत्वरूपं चेतनत्वमिति पर्यवस्यति, एवं च कर्तृत्वकरणत्वयोर्विरुद्धयोः सामानाधिकरण्यमापतति, वैयधिकरण्ये च न व्यतिरेकव्याप्ति-सिद्धिरप्यपेक्षिता भवति।

---

1 न्यायकुमुद0, पृ0 41
2 स्याद्वादरत्ना0, पृ0 73
3 प्रमेयकमलमा0, पृ0 19-20
4 प्रमाणप्रमेयक0, पृ0 7-9

किञ्च, नहि अचेतनोऽर्थः करणम्, पटवदित्यपि न रोचते, अचेतनस्यैव दण्डादेर्घटादिकार्ये करणतया दृष्टत्वेन त्वदुक्तनियमे व्यभिचारात्। अर्थप्रमितौ न करणमिति चेत्, तदपि न शोभनम्, दीपादेरचेतनस्य घटाद्यर्थप्रकाशे करणत्वेन दृष्टत्वात्। न चौपचारिकं करणत्वम्, वास्तविकत्वे सम्भवति औपचारिकत्वे मानाभावात्। उक्तं च **जयन्तभट्टैः**-[1] बोधाबोधस्वभावा सामग्री प्रमाणमिति, समुदायस्य च प्रत्येकानतिरिक्तत्वात्।

किञ्चेन्द्रियवृत्तिरिन्द्रियेभ्यो भिन्नाऽभिन्ना वा इति विकल्पोऽपि न युज्यते। इन्द्रियस्यैव परिणामविशेषो वृत्तिरिन्द्रियेण सह तादात्म्येन सम्बन्धेन सम्बद्धा, वृत्तिरूपकार्यस्याविर्भाव-दशायां भेदः, तिरोभावदशायामभेद इति न तयोर्विरोध उद्भावनीयः। तदुक्तम्-

**कार्यात्मना तु नानात्वमभेदः कारणात्मना।**
**हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा॥** इति।

नीलो घट इत्यादौ सामानाधिकरण्यमपि भेदाभेदरूपमेव, नाप्यत्यन्तं भेदः, तथा सति गवाश्वयोरपि तत्त्वं प्रसज्येत, नाप्यत्यन्ताभेदः, तथात्वे घटकलशयोरपि तत्त्वमापद्येतेति स्पष्टमद्वैतसिद्धौ टीकायाम्।[2]

अतश्चेयं वृत्तिः श्रोत्रादिभ्यो भिन्नापि, अभिन्नापीति तदुक्तो विकल्पो विलयं गतः। अन्येऽपि तन्मूलाः सर्वे विकल्पा विलयं प्राप्ताः। ज्ञानेन व्यवहिता वृत्तिरित्यत्र तु समाधानं पूर्वमेव कृतम्।

किञ्च, सन्निकर्षस्य वृत्तेर्वाऽर्थप्रमितौ प्रामाण्यमभिदधतां योगानां सांख्यानां च निकाये इदं न प्रमाणमज्ञानरूपत्वादिति व्याप्तिरुद्भावयितुं न शक्यते, इदं प्रमाणम्, प्रमां प्रति अन्वयव्यतिरेकवत्त्वादित्येवं सत्प्रतिपक्षितत्वात्।

---

[1] न्या0म0, प्र0 प्रक0, पृ0 12-14
[2] अद्वैत0सि0, गौड0, टीका0, पृ0 59

प्रत्यक्षत इन्द्रियस्य तद्वृत्तेर्वाऽनुपलम्भेऽपि ज्ञानाख्यकार्यहेतुकानुमानेन तत्सत्त्वे सिद्धे 'बहुशो विचार्यमाणाया अपि इन्द्रियवृत्तेः स त्त्वं नोपलभ्यते' इति कथनमपि साहसमात्रमेव परेषाम्। किञ्चान्तःकरणवृत्त्यवच्छिन्नचैतन्यरूपे ज्ञाने घटादिविषयकत्वरूपा घटाकारता नानुभूयेत यदि घटाद्याकारा वृत्तिर्न स्यात्, अत एव बौद्धैर्विज्ञानस्यैव विषयाकारः परिणामः स्वीकृतः।

**चाक्षुषादिप्रत्यक्षे सहकारिविमर्शः**

अथ प्रत्यक्षलक्षणं तदन्तर्गतात्ममनइन्द्रियसन्निकर्षवृत्तीनां स्वरूपलक्षणभेदादिकं च निरूप्य, कस्मिन् प्रत्यक्षे किं सहकारीति निरूप्यते शाब्दिकमते तत्संवादिमते च।

तत्र चाक्षुषे प्रत्यक्षे आलोकस्येव मनःसमाधेरपि सहकारिता प्रदर्शिता चतुर्थाध्याये महाभाष्योद्द्योते[1] नागोजिभट्टेन। वाक्यपदीये ब्रह्मकाण्डे टीकायां (श्रीभर्तृहरिणा) वृषभ देवेन चक्षुःप्रणिधानस्यापि तत्र सहकारिता प्रोक्ता।[2] किञ्च, तत्रैव द्वितीयकाण्डे टीकायां श्रीपुण्यराजेन **'द्रष्टुः प्रणिधानं चाक्षुषे सहकारि'** इत्युक्तम्।[3]

तृतीयकाण्डे तु दृष्टान्तप्रदर्शनपुरस्सरं सहकारि कारणं निरूपितम्। तथाहि- दात्रस्य तीक्ष्णताधानसंस्कारः, उद्यमननिपतने विनियोगः। चक्षुषोऽञ्जनादिः संस्कारः, प्रणिधानं विनियोग इति।[4]

पुनरपि तृतीय एव काण्डे सम्बन्धसमुद्देशे **''घटस्य दृशिकर्मत्वे महत्त्वादीनि साधनम्, रूपस्य दृशिकर्मत्वे रूपत्वादीनि साधनम्''** इत्युक्त्या श्रीहेलाराजेन महत्त्वस्य महत्वपरिमाणस्याऽदिपदेनाऽलोकादेश्च सहकारिता निरूपिता।[5]

---

1 म०भा०, उ० 4 अ०, 1 पा०, 1 आ०, 3 सू०, पृ० 23
2 वा०प०, ब्र०का०, कारि० 90, वृषभदेवीये।
3 वा०प०, द्वितीयका०, कारि० 407
4 वा०प०, तृ०कां०, साधनसमु०, हेलाराजीये, कारि० 91
5 वा०प०, तृ०कां०, सम्बन्धमुद्देशे, हेलाराजीये, कारि० 9

किञ्च, तृतीये काण्डे "**चक्षूरूपालोकमिश्रितं मन इन्द्रियार्थान्यपरम्पराहित-विशेषः संघटिता विज्ञानहेतवोऽन्वयव्यतिरेकाभ्यां दृष्टाः**"[1] इत्युक्त्या विषयगतोद्भूत-रूपस्यऽऽलोकस्य द्रष्टुर्मनसश्चक्षुषः प्रणिधानस्य महत्परिमाणस्य च सर्वस्यापि सहकारित्वं प्रादर्शि श्रीहेलाराजेन। तत्र हि रूपपदेनोद्भूतरूपमेव विषयगतम्, न तत्र चक्षुर्गतमनुद्भूतरूपम्, तस्य सर्वदा तत्र सत्त्वेन, किं वा तद्विशिष्टस्यैव चक्षुष्ट्वेन तद्ग्रहणे फलाभावात्, आलोकसाहचर्येणापि तादृशरूपग्रहणस्यौचित्याच्च। यद्यपि व्याघ्रविडालो-लूकादीनां चक्षुष्येवास्ति आलोकः, येन ते रात्रावपि अन्धकारावृत्तमपि विषयं पश्यन्ति, तत्र सिंहव्याघ्रविडालानां नेत्रालोकः सौरालोकेनाभिभूतो न भवतीति दिवापि ते पश्यन्ति, उलूकस्य तु नयनालोको दिवा सौरप्रभयाभिभूयते इति दिवा स न पश्यतीति यथादृष्टं क्वचिन्नयनस्यालोकः क्वचिच्च बाह्यालोको रूपचाक्षुषे रूपवाच्चाक्षुषे च सहकारीति ध्येयम्।

इन्द्रियार्थयोरन्ये परम्पराहितविशेषा इत्यनेनेन्द्रियप्रणिधानं तत्संस्कारो महत्वपरिमाणं रूपादिकं च ग्राह्यमिति विवेकः। अत्र हेलाराजीये इन्द्रियार्थान्धपरम्पराहितेत्यादिः पाठो न समीचीनः प्रतीयते, अर्थाऽसङ्गतेः।

## उक्तविषये संवादिन्यायादिदर्शनम्

अत्र यद्यपि **न्यायादिदर्शने** षड्विधेऽपि प्रत्यक्षे महत्त्वस्य चाक्षुषे तु आलोकस्योद्भूतरूपस्य च सहकारित्वं मन्यते,[2] न तु मनइन्द्रिययोः प्रणिधानस्य नापि तत्संकारस्य च; तथापि **व्याकरणदर्शनमर्म**विद्भिरन्येषामपि यत्सहकारित्वं दर्शितम्, तस्यायमभिप्रायः- मनः-प्रणिधाने सत्येव इन्द्रियसंयोगे सति विषयप्रत्यक्षं नान्यथेति अन्वय-व्यतिरेकाभ्यां तस्यापि कारणत्वमायाति। यद्यपि प्रणिधानविशिष्टं मनःकारणमिति वक्तुं शक्यते, तावतापि विशेषणविशेष्यभावव्यत्यासे विनिगमनाविरहेण लाघवाद् द्वयोरपि हेतुत्वं सिध्यत्येव।

---

[1] वा०प०, तृ०कां०, संबन्धस०, कारि० 24

[2] (क) "उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये" न्या०सि०मु०, प्र०ख०, कारि० 54
(ख) "महत्त्वं षड्विधे हेतुरिन्द्रियं कारणं मतम्, न्या०सि०मु०, प्र०खं०, कारि० 58
(ग) न्या०सि०मु०, प्र०खं०, कारि०, सं०-55

एवमेव विशिष्टाञ्जनसम्पर्केण नयनयोरतिसूक्ष्मेऽपि यत् सामर्थ्यमनुभूयते, तदपि संस्कारद्वारकमेवेति तादृशविशिष्टचाक्षुषेऽञ्जनलेपजनितसंस्कारस्यापि व्यापारविधया कारणतया बोध्या।

**अञ्जनव्यञ्जनाभ्यामिन्द्रियसंस्कारविषये महाभाष्यादिसम्मतिः**

अस्य संस्कारस्य बहुश उल्लेखः कृतो **महाभाष्यादौ**। तथाहि- **''संस्कारकद्रव्येणेन्द्रियस्य संस्कारो भवति। तेनेन्द्रियगतदोषापनयनम्, तत्र शक्त्यतिशयाधानं वा। ततश्च विषयस्य प्रत्यक्षं तेन तेनेन्द्रियेण क्रियते विषयाकारवृत्तिद्वारा।''** एतद्विषये **'अञ्जोऽनपादाने'** इति सूत्रे उच्यते **श्रीपतञ्जलिना ''अनेकार्था अपि धातवो भवन्तीति, अस्ति पुनः क्वचिदन्यत्राऽपि अञ्जिरञ्जेत्यर्थे वर्तते?''** अस्तीत्याह अञ्जेरञ्जनम्, अञ्जनञ्च प्रकाशनम्। अङ्क्ते अक्षिणी इत्युच्यते यत्तत्सितं चासितं चैतत् प्रकाशयति। तथाञ्जर्व्यञ्जनम्, व्यञ्जनञ्च प्रकाशनम्। यत्तत्स्नेहेन मधुरेण च जडीकृतानामिन्द्रियाणां स्वस्मिन्नात्मपि व्यवस्थापनम्, स रागस्तद् व्यञ्जनम्। अन्वर्थं खल्वपि निर्वचनं व्यज्यतेऽनेनेति व्यञ्जेनमिति। अत्र प्रदीपः- अञ्जनमिति-अज्येते येनाक्षिणी तदञ्जनम्। तत्रैतत् स्याद्रूढिशब्दोऽयम्, रूढिषु च व्युत्पत्तिनिमित्तमेव क्रिया, न तु शब्दप्रवृत्तिनिमित्तमित्याशङ्क्य रूढिशब्दमुदाहरति- अङ्क्ते इति। व्यत्ययेन छन्दस्यात्मनेपदम्। यत्तत्सितं चेति-सितासिते सुतरां विभागेन प्रकाशयतीत्यर्थः। तथेति- व्यज्यतेऽनेन रस इति व्यञ्जनम्। राग इति रज्यतेऽनेनेति रागो व्यञ्जनमेव। अन्वर्थमिति-यौगिको व्यञ्जनशब्द इत्यर्थः। अत्रोद्द्योतः-अज्येते प्रकाश्येते इत्यर्थः-व्यज्यतेऽनेनेति जिह्वाया जडीभावनिराकारणेन रसो व्यज्यते इत्यर्थः। **भाष्येऽपि** इन्द्रियशब्देन जिह्वैव, व्यक्तिबहुत्वाद् बहुवचनमिति। एतद्ग्रन्थत्रितयालोचनेन अञ्जनव्यञ्जनाभ्यां नयनरसनयोः संस्कारः स्फुटमुपलभ्यते। जिह्वाया जडीभावनिराकरणेन रसो व्यज्यते इत्युद्द्योतेन व्यञ्जनस्य करणत्वं प्रतीयते एव।[1] जडीभावनिराकरणमुपलक्षणमिन्द्रियदोषापनयनस्य शक्त्यतिशयाधानस्य च।[2]

---

[1] म०भा०, प्र०, उ०, 8 अ०, 2 पा०, 2 आ०, 49 सू०, पृ० 123
[2] वा०प० 1/78 अम्बाकर्त्रीटीका च, पृ० 151

## वाक्यपदीयमतेऽपि संस्कारस्य व्यापारत्वम्

**चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि।**
**विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः॥**[1]

अनया कारिकया **श्रीहरिणापि** इन्द्रियस्य तेजआदिना संस्कारो भवतीति स्वीक्रियते। एतद्विषये मतत्रयं प्रदर्शितं तेन। इन्द्रियस्यैव संस्कार इत्येकं मतम्, विषयस्यैव संस्कार इति द्वितीयम्, उभयोरिति तृतीयम्। यथा तेजसा चक्षुष एव संस्कारः, घटादेर्विषयस्यैव वा, उभयोरपि वा। एवमेव ध्वनिना श्रोत्रेन्द्रियस्यैव, घटादिशब्दस्यैव वा, उभयोरपि वा। उक्तं च-

**इन्द्रियस्यैव संस्कारः शब्दस्यैवोभयस्य वा।**
**क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम्॥** इति[2]।

तत्र इन्द्रियस्यैव संस्कार इति पक्षे दृष्टान्तः प्रदर्शितः, अञ्जनेन यथा चक्षुष एव संस्कार इति।[3]

स चायं संस्कारो द्विविधः- इन्द्रियदोषापनयनरूपः, इन्द्रिये शक्त्यतिशयाधानात्मकश्च।[4] तत्र प्रथमस्तु प्रतिबन्धाभावसम्पादकतयाऽन्यथासिद्ध एव। द्वितीयस्तु व्यापारविधया हेतुरेव इन्द्रियजन्ये प्रत्यक्षे। इन्द्रियार्थान्यपरम्पराहितविशेषेषु[5] अस्यापि परिगणनमुचितम्। अन्य विधोऽपि संस्कारो वाक्यपदीयेऽम्बाकर्त्र्यां समुल्लिखितः।[6] यथा रात्रौ क्रोशादिव्यवहितानामपि दीपप्रकाशानां सुदूरस्थितानामपि नक्षत्रादीनां चक्षुषा ग्रहणं भवति, मध्ये स्थितानां तत्तत्पदार्थानां तमसावृतानां ग्रहणं न भवति। तेन ज्ञायते चक्षूरश्मीनामालोकसंस्कारतद्भावावेव तत्तत्पदार्थानां तत्र ग्रहणाग्रहणहेतू इति।[7]

---

1 वा0प0 1/80
2 वा0प0 1/78
3 "विषयस्य तु संस्कारस्तद्गन्धप्रतिपत्तये" (वा0प्र0, ब्र0का0, कारि 79), वा0प0, अ0 क0, 1/80, पृ0 152
4 वा0प0, ब्र0का0 कारि0 78। अम्बाकर्त्रीटीका0; पृ0 151
5 वा0प0, तृ0का0 सम्बन्धसमु0- कारि0- 24
6 वा0प0, ब्र0का0, कारि0 78
7 वा0प0, ब्र0का0, कारि0 80, अ0क0, पृ0 153

## ( ङ ) वैशेषिकमते समवायप्रत्यक्षविचारः

वैशेषिकाः समवायस्य प्रत्यक्षत्वं न स्वीकुर्वन्ति। उक्तञ्च न्यायसिद्धान्तमुक्तावल्यां- **"वैशेषिकमते तु समवायो न प्रत्यक्षः।"**

सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वादितिभावः। न च तादृशकार्यकारणभावे मानाभाव इति वाच्यं तथा सति घटपटसंयोगवद्घटाकाशसंयोगस्यापि प्रत्यक्षापत्तेः। न च संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वाङ्गीकारेणैवोक्तदोषवारणे तादृश कार्यकारणभावे मानाभाव एवेति वाच्यं तथासति भूतले आकाशाऽऽत्यन्ताभावविशेषणताप्रत्यक्षापत्तेः भूतलस्य प्रत्यक्षविषयत्वात्।

न चाऽऽकाशाऽऽत्यन्ताभावविशेषणताया आकाशाऽभावत्वेनातीन्द्रियतया न तदापत्तिरिति वाच्यं विशेषणताया अभावरूपत्वे घटात्यन्ताभावस्य विशेषणतायाः अभावरूपायाः योग्यतया आकाशादौ तस्याः प्रत्यक्षापत्तेर्दुवारत्वात्तस्मात्संबन्धप्रत्यक्षे यावदाऽऽश्रयप्रत्यक्षमेव हेतुरिति नियमः स्वीकार्य इति **वैशेषिकनव्योभयात्मक**-नवीनाभिप्रायः।

**प्राञ्चस्तु** संबन्धप्रत्यक्ष इत्यादिनियमे मानाभावः यावदाश्रयप्रत्यक्षं विनापि प्रमेयत्वादिना संबन्धप्रत्यक्षजननात् न च सम्बन्धत्वेन प्रत्यक्षे तद्धेतुरिति वाच्यं सर्वसंबन्धसाधारणसंबन्धत्व-स्याभावात् संयोगसमवायाद्यन्यतमत्वरूपसंबन्धत्वस्यानुगतत्वेऽपि तेन रूपेण संयोगादिप्रत्यक्षे यावदाश्रयप्रत्यक्षं विना तदात्तेर्दुवारत्वाच्च।

न च संसर्गतावच्छेदकरूपेण संसर्गप्रत्यक्षे तद्धेतुरिति वाच्यं संसर्गतावच्छेदकानां संयोगत्वसमवायत्वादीनां भिन्नतया तन्निष्ठावच्छेदकतानामपि समवायस्वरूपादिरूपनानासंबन्धा-वच्छिन्नत्वेन भिन्नतया संसर्गतावच्छेदकधर्मावच्छिन्नविषयताशालिप्रत्यक्षत्वस्याप्यननुगतत्वात् किन्तु संसर्गतावच्छेदकसंयोगत्वादिकं विशिष्योपादाय तत्तद्धर्मावच्छिन्नलौकिकविषयताशालि-प्रत्यक्षत्वमनुगतं कार्यतावच्छेदकं वाच्यं तत्रापि संयोगत्वावच्छिलौकिकविषयताशालिप्रत्यक्षं प्रति

तद्धर्मावच्छिन्नाश्रययावत्प्रत्यक्षस्य हेतुत्वं न संभवति संयोगत्वावच्छिन्नाश्रययावद्द्रव्याणां प्रत्यक्षाप्रसिद्धया कस्यापि संयोगस्य लौकिकप्रत्यक्षानुपपत्तेः।

परन्तु संयोगत्वावच्छिन्नतत्तत्संयोगनिष्ठलौकिकविषयताशालिप्रत्यक्षं प्रति तदाश्रययावद्-व्यक्तिप्रत्यक्षस्य हेतुत्वमिति रीत्या व्यक्तिविशेषमन्तर्भाव्यैव कार्यकारणभावो वाच्यः। एवं च समवायत्वावच्छिन्नसमवायनिष्ठलौकिकविषयताशालिप्रत्यक्षं प्रति समवायाश्रययावद्व्यक्ति-प्रत्यक्षस्य हेतुत्वानङ्गीकारेऽपि बाधकाभावात् तादृशकार्यकारणभावस्याप्रामाणिकतया समवायस्य लौकिकप्रत्यक्षस्वीकारे न किमपि बाधकमिति वदन्ति।

**वेदान्तिनांमते सन्निकर्षस्वरूपविचारः**

**वेदान्तिनः** प्रत्यक्षप्रमायाः आत्मरूपतां स्वीकुर्वन्ति। **''प्रत्यक्षप्रमा त्वत्र चैतन्यमेव''**[1] आत्मनः प्रत्यक्षप्रमात्व **''यत्साक्षादपरोक्षात्''**[2] अपरोक्षादित्यस्यऽर्थः अपरोक्षम्। ज्ञानत्वमेव ज्ञानस्य प्रत्यक्षलक्षणं ज्ञानञ्च ब्रह्मैव **''सत्यं ज्ञानम्''**[3] इत्यादिश्रुतेः। इदं च लक्षणं ज्ञानस्य प्रत्यक्षत्वव्यवहारप्रयोजकं तत्तद्विषयांशे ज्ञानस्य प्रत्यक्षत्वव्यवहारप्रयोजकं च। चैतन्यरूपमेव ज्ञानमबाधितघटादिवृत्त्यवच्छिन्नं घटादिप्रमेत्युच्यते। अत एव विशिष्टं चैतन्यं प्रति चक्षुरादेः करणत्वाच्चक्षुरादि भवति प्रत्यक्षप्रमाणमिति।

अत्राशंकते- भवतां मते चैतन्यं अनादिः। तस्य अजायमानत्वे चक्षुरादीन्द्रियाणां तज्जनकत्वेन करणत्वं कथं स्यात्? इति शंकां निवर्तयन्तो वेदान्तिनः प्रतिपादयन्ति भवतुनाम प्रत्यक्षप्रमास्वरूपं चैतन्यमनादिः परन्तु चैतन्याभिव्यञ्जक अन्तःकरणस्य परिणामात्मिकावृत्तिः इन्द्रियसन्निकर्षादिनोत्पद्यते। तज्जनकत्वे इन्द्रियाणां करणत्वं संसिद्धम्। चैतन्यरूपज्ञानस्य स्वस्वरूपेणलौकिकव्यवहारोपपादकत्वं नास्ति। अपितु वृत्तिप्रतिबिंबितचैतन्यस्यैव व्यवहारोप-पादकत्वमस्ति। **''चैतन्यास्यानादित्वेपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षा-**

---

[1] वेदान्तपरिभाषा, प्र0 परिच्छेद
[2] बृहदारण्यकोपनिषदि- 3-4-1
[3] तैत्तिरीयोपनिषदि- 2-1-1

दिना जायत इति वृत्ति विशिष्टं चैतन्यमादिमदित्युच्यते ज्ञानावच्छेदकत्वाच्च वृत्तौ ज्ञानत्वोपचारः।''[1]

**न्यायाभिदर्शनेषु** इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमुच्यते। **वेदान्तनये** इन्द्रियार्थ-सन्निकर्षेण विषयाकार अन्तःकरणस्य परिणामात्मिका वृत्तिर्जायते। तस्याः वृत्ते जड़भूतान्तः-करणस्य परिणामत्वेन जड़रूपत्वमेवास्ति। अतः वृत्तिरूपं ज्ञानं न कस्यापि विषयस्य प्रकाशकम्। स्वतःजड़रूपत्वेन परप्रकाशे अक्षमत्वात्। सैव वृत्तिः साक्षिभूत चैतन्येन प्रकाशिता सती घटपटादीं विषयान् प्रकाशयति। अतः न केवलं चैतन्यं घटादि विषय प्रकाशकं न वा केवल वृत्तिः घटादिविषयप्रकाशिका। अपितु वृत्यवच्छिन्नं चैतन्यं विषय-प्रकाशकम्।

तस्याः वृत्तेः जनकत्वेन संयोगादिसन्निकर्षणामुपयोगः। उक्तञ्च **वेदान्त-परिभाषायाम्।**[2]

**''संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यञ्जकवृत्तिजनने विनियोगः।''**

तेषां सन्निकर्षणां द्रव्यरूपेन्द्रियजन्यत्वेसतीन्द्रियजन्यवृत्तिजनकत्वेन व्यापारस्य लक्षणमपि संगच्छते। तत्रायं विशेषः **वेदान्तदर्शने** समवायस्यास्वीकारात्समवाय-घटितसन्निकर्षा न स्वीक्रियन्ते। अतः घटप्रत्यक्षे संयोगः सन्निकर्षः। घटेन सः इन्द्रियस्य संयोगः, तेन सम्बन्धेन इन्द्रियं घटविषयमन्वेति। इन्द्रियस्य घटादिविषयेन सः संबन्धे जाते इन्द्रियद्वारेण अन्तःकरणं निस्सृत्य घटदेशं प्राप्य घटाकारेण परिणमते। स च घटाकारः परिणामः वृत्तिरित्युच्यते। तस्यां वृतौ प्रतिबिम्बितं चैतन्यं घटविषयं प्रकाशयति।

---

1 वे0परि0, प्रत्यक्षपरिच्छेदः
2 वे0परि0, प्रत्यक्षपरिच्छेदः

एवमेव घटगतरूपप्रत्यक्षे संयुक्ततादात्म्यसन्निकर्षः। चक्षुरादीन्द्रियेण संयोगसम्बन्धेन सम्बद्धे घटे तादात्म्यसम्बन्धेनरूपं वृत्ति वर्तते। अतः संयुक्ततादात्म्यसंबन्धेन चक्षुरीन्द्रियं घटगतरूपेण सः संबध्यते। इन्द्रियस्यरूपेण सः सम्बद्धे जाते। तदिन्द्रियद्वारा अन्तःकरणं रूपं प्राप्य रूपाकारेणपरिणमते। अन्तःकरणस्य रूपाकारपरिणामः वृत्तिरित्युच्यते। तत्रप्रतिबिंबितं चैतन्यं रूपात्मकं विषयं प्रकाशयति।

एवमेव रूपत्वादि जातिप्रत्यक्षे संयुक्ताभिन्न तादात्म्यसन्निकर्षः। चक्षुस्संयुक्ते घटेरूपं तादात्म्येन वर्तते। तत्र च रूपत्वं जातिः तादात्म्येनैव वर्तते। तादात्म्यस्याभेदात् संयुक्ताभिन्नं तादात्म्यरूपसन्निकर्षः। रूपत्वादिजातिप्रत्यक्षे व्यापारो भवति। तेन संबन्धेन चक्षुरादीन्द्रियाणां गुणगत सामान्येन सः सम्बन्धो भवति। उक्तसन्निकर्षेणेन्द्रियस्य गुणगत सामान्येन सः सम्बन्धे जाते इन्द्रियमाध्यमेन अन्तःकरणस्य रूपत्वाद्याकारेण परिणामो भवति। स च परिणामः रूपत्वादि विषयकवृत्तिरित्युच्यते। तस्यां वृत्तौ प्रतिफलितं चैतन्यं रूपत्वादि विषयान् प्रकाशयति।

एवमेव शब्दप्रत्यक्षे तादात्म्यसन्निकर्षः। शब्दस्य आकाशरूप श्रोत्रेन्द्रिये तादात्म्येन वृत्तित्वात् स एव तादात्म्यसम्बन्धः शब्दप्रत्यक्षे सन्निकर्षरूपः व्यापारः उच्यते। तेन संबन्धेन श्रोत्रेन्द्रियं शब्दमन्वेति। शब्दान्वित श्रोत्रेन्द्रियद्वारा तैजस् अन्तःकरणस्य शब्ददेशे शब्दकार परिणामात्मिका वृत्तिर्जायते। तस्यां प्रतिबिंबितं चैतन्यं शब्दरूप विषयं प्रकाशयति।

एवञ्च शब्दत्वप्रत्यक्षे अभिन्न तादात्म्यसन्निकर्षः। शब्दस्य आकाशे तादात्म्येन वृत्तिता, तत्र च शब्दत्वधर्मस्य तादात्म्येन वृत्तिता वर्तते। तयोः तादात्म्ययोः अभिन्नतया अभिन्न तादात्म्यं शब्दत्व प्रत्यक्षे व्यापारः उच्यते। तेन संबन्धेन श्रोत्रेन्द्रियं शब्दत्व धर्ममन्वेति। श्रोत्रेन्द्रियस्य शब्दत्वरूपविषयेण सः अन्वये जाते। श्रोत्रेन्द्रियद्वारा अन्तःकरणस्य शब्दत्वदेशे शब्दत्वाकारः परिणामो जायते। स च परिणामः वृत्तिरुच्यते। तस्यां वृत्तौ प्रतिबिंबिकं चैतन्यं शब्दत्वरूपविषयं प्रकाशयति।

**वेदान्तदर्शने** जातेरस्वीकारात् रूपादिगत रूपत्वादि धर्माणां प्रत्यक्षत्वं न तु जातेः। रूपत्वादि जातिस्वीकारे किमपि प्रमाणं नास्ति। लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिर्भवति। जातेः किमपिलक्षणं न सम्भवति नित्यत्वेसति अनेकसमवेतत्व लक्षणस्य नित्यत्व घटितत्वेन आत्मातिरिक्तस्य नित्यत्वास्वीकारात् प्रथमदलस्य विक्षप्तिः। अथ च समवेतत्वं नाम समवायसम्बन्धेन वृत्तित्वम्। समवायस्य नित्यत्वरूपत्वेनास्वीकारात् तद्सम्बन्धेन वृत्तित्वमपि व्याहतम्। अतः जातेः किमपि स्वरूपबोधकं लक्षणमपि नास्ति।

एवञ्च प्रमाणमपि न संगच्छते। घटत्वादीनां घटत्व सत्तायां मानत्वं, न तु जातित्वे। घटत्वादीनां पटत्वादिधर्मव्यवच्छेदकतया घटादि द्रव्येषु अवच्छेदकरूपेण प्रकारत्वमेवास्ति। न तु घटत्वादि काचिज्जाति अभ्युपेया।

अथ च समवायस्वीकारे किमपि मानं नास्ति। नित्यसम्बन्धरूपेण समवायं स्वीकुर्वन्ति **नैयायिकाः**। तन्न युज्यते। संयोगादिसम्बन्धानां समवायसम्बन्धेनोभयद्रव्यवृत्तिता स्वीकुर्वन्ति **नैयायिकाः**। यदि समवायोपि सम्बन्धः तदा तस्यापि उभयसम्बन्धिनोः वृत्तिता केनापि सम्बन्धेन स्वीकर्तव्या। येन संबन्धेन समवायरूपसंबन्धस्य वृत्तिता संबन्धिनोः स्वीक्रियते। तस्यापि संबन्धत्वात् संबन्धान्तरेण वृत्तिता स्वीकर्तव्या इत्यनवस्था दोषः सम्पद्यते।

यदि च स्वरूपसम्बन्धेन वृत्तिता समवायस्य स्वीक्रियते तदा स्वरूपसंबन्धोनाम प्रतियोग्यनुयोगि रूपम्। तस्य प्रतियोग्यनुयोगिरूपयोः सम्बन्धिनोः अनतिरिक्तत्वात् सम्बन्धत्वमेव न सम्भवति। यतश्च संबन्धः उभयसम्बन्धिवृत्तिर्भवति। अथ च सम्बन्धिभ्यां भिन्नो भवति। आश्रयतया विशिष्टबुद्धिनियामकश्च भवति। स्वरूपभूतसंबन्धस्यानुयोगिप्रतियोगि-रूपत्वेन संबन्धि भिन्नता नास्ति। अतः स्वरूपसम्बन्धस्य सम्बन्धरूपता एव नास्ति।

**समवायस्वरूप निरासविचारः**

वेदान्तिनः मीमांसकाश्च समवायस्वरूपमेव न स्वीकुर्वन्ति। समवायस्वीकारे मानाभावात्। योहि समवायरूपः सम्बन्धः वृत्ति नियामकत्वेन नैयायिकैः अभिमतः, स च

सम्बन्धः नित्यः जन्यो वा। तत्र सम्बन्धत्वात्समवायस्य नित्यत्वं न सम्भवति। तथा चानुमानं **"समवायोऽनित्यः सम्बन्धत्वात् संयोगादिसम्बन्धवत्"**, संयोगादिसम्बन्धे सम्बन्धत्वरूप हेतुर्विद्यते, अनित्यत्वरूपं साध्यश्चविद्यते। अतः सम्बन्धत्वरूपे हेतौ अनित्यत्वरूप साध्यस्य व्याप्तिग्रहो जातः। तद्व्याप्तिविशिष्टस्य सम्बन्धत्वस्य समवायेऽपि सत्वात् अनित्यत्वं सिद्धत्येव। अतः नित्य समवायरूपः सम्बन्धविशेषः न सिद्ध्यति। सम्बन्धो हि सम्बन्धिपरतन्त्रः, तदधीननिरूपणश्च। यथा संयोगः। घटरूपसमवायश्च शब्दसमवायादभिन्नो भिन्नो वा? उभयथापि च सम्बन्धिनाशेऽपि नित्यत्वात्तिष्ठन्तौ विना प्रतीयमानश्च कथं सम्बन्धस्स्यात्? भवन्वा वायुनिष्ठसमवायस्य रूपसमवायाभेदे कथं न तत्र रूपधियमापादयेत्?

यदि च विशिष्टज्ञानमात्रेविशेषणसम्बन्धज्ञानं हेतुर्भवति अतः 'समवायि घटः' इति ज्ञाने समवायरूपसम्बन्धज्ञानं विशेषणविधयाऽपेक्षितं भवति। अतः समवायस्य पार्थक्येन ज्ञानमपेक्षितं भवति। तदुच्यते यथा संयोगरूपसम्बन्धस्य सम्बन्धिनोः समवायसम्बन्धेन वृत्तिता स्वीक्रियते। तद्वदेव समवायरूपसम्बन्धस्यापि किञ्चित्सम्बन्धेन वृत्तिताऽभ्युपेया। तत्र यदि स्वरूपसम्बन्धेन वृत्तिता समवायस्य सम्बन्धिनि स्वीक्रियेत तदपि न सम्भवति। स्वरूपसम्बन्धस्य प्रतियोग्यनुयोगि अन्यतर रूपत्वात्प्रतियोग्यनुयोगि सम्बन्धिभ्यां स्वरूप-सम्बन्धस्य भेदः न स्यात्। सम्बन्धिस्वरूपः सम्बन्धः न कल्पनीयः। तथाचोक्तम्- **"प्रसिद्धसम्बन्धविलक्षणस्यापि सम्बन्धत्वे व्योमादेरेव सम्बन्धत्वं कल्प्यताम्"**।[1]

वेदान्तिभिरपि समवायसम्बन्धस्य स्वरूपं नाभिमतम्। तेषां नये ब्रह्मातिरिक्तः कश्चिद् नित्यपदार्थः न स्वीकृतः। **"समवायासिद्ध्या ब्रह्माभिन्नसकलप्रपञ्चस्यानित्यतया"**।[2] इह तन्तुषु पटसमवाय इति प्रत्यक्षं तन्तुषु पटसम्बन्धे प्रमाणम्, न तु नित्यसम्बन्धत्व-लक्षणसमवायेऽपि ब्रह्मभिन्ननिखिलप्रपञ्चस्यानित्यत्वावगमेन तादृशनित्यसम्बन्धासिद्धेरिति। ननु संयोगभिन्नसाक्षात्सम्बन्धत्वं समवायत्वम्, तत्र नित्यत्वाप्रवेशेन तन्तुषु पटसमवायाभ्युपगमेऽपि

---

1 मीमांसाशास्त्रकुतूहलम्, पदार्थनिर्देशः, पृ० 4
2 वे०परि०, अनु०परि०, पृ० 70

न प्रपञ्चानित्यत्वश्रुतिविरोधः। ततश्चानेकसमवेतत्वघटितसाध्यप्रसिद्धिरपि सुसम्पादेति यदि ब्रूयात्तदाभ्युपेत्यान्यत्र समवायं प्रकृते तदभावेन तद्घटितसाध्यस्य बाधितत्वान्नानुमानावकाशः।

**वेदान्तिनये अभावप्रत्यक्षविचारः**

**वेदान्तिनः** अभावपदार्थमधिकरणातिरिक्तत्वेन ना स्वीकुर्वन्ति। अतः यदि अभाव-पदार्थ एव नास्ति तदा तस्य प्रत्यक्षज्ञानाय विशेषविशेषताख्य संसर्गस्यापि स्वीकारे किमपि मानं नास्ति। यदि अभावपदार्थः द्रव्यादि भाव पदार्थेभ्यः भिन्नः स्यात् तदा तस्य प्रत्यक्षज्ञानाय विशेषणताख्य संसर्गस्य स्वीकृतिः स्यात्। यत्तु **नैयायिकाः** प्रतिपादयन्ति घटाभाव-वद्भूतलमित्यत्र भूतलानुयोगिक घटप्रतियोगिकाभावस्य भूतलवृत्तितया साक्षात्प्रतीतिर्भवति। तदा अभावपदार्थः नास्तीति वेदान्तिनां कपोलकल्पनामात्रम्। तदुच्यते प्रतीति म्हिना कस्यापि पदार्थस्य सत्ता न स्वीक्रियते। शुक्तौ रजतस्य भानं भवति। परन्तु तत्र रजतस्य सत्ता न स्वीक्रियते। अतः घटाभाववद्भूतलमिति प्रतीत्याऽभावस्य सत्वं धर्तुं न शक्यते।

तत्र प्रतिपादयन्ति **नैयायिकाः** अभावपदार्थः शुक्ति रजतादिवत् मिथ्याभूतो नास्ति। न वा बन्ध्यापुत्रादिवदलीकपदार्थः अस्ति। शुक्तिकादौ यत्रजतं प्रतीयते तस्य रजतस्य आपणे सत्ता वर्तते। तस्यैव घटकस्य रजतस्य पुरोवर्तित्वेन प्रतीतिर्भवति। तत्र पुरोवर्ति शुक्तिका द्रव्यं शुक्तित्वेन न प्रकाशते, अपितु चाकचिक्य संदर्शन समुद्भूत रजतसंस्कारेण रजतत्वं भासते। तच्च रजतत्वं रजतधर्मि भिन्ने शुक्ति द्रव्ये भासते, अतः तस्य रजतत्वस्यान्यथात्वम्। अथ च शुक्तिः शुक्तित्वधर्मभिन्न रजतत्वेन भासते। अतः तस्यापि अन्यथात्वमिति अन्यथाख्याति वशात् हाटकस्थ रजतस्य प्रतीतिर्भवति। यस्य बन्ध्यासुतादि पदार्थस्य क्वचिदपि सत्ता नास्ति, तस्य कुत्रापि प्रतीतिरपि न भवति। अतः सत्तावतः पदार्थस्यैव प्रतीतिर्जायते। भवति च अभावपदार्थस्य प्रतीतिः अतः द्रव्यादि षट्पदार्थेभ्यः भिन्नः अभावपदार्थः स्वीकरणीयः। तस्य स्वीकारे च प्रत्यक्षज्ञानाय कश्चिद् संसर्गः स्वीकरणीयः। स च संसर्गः विशेषणताख्य संसर्गः सिद्धान्तसम्मतः।

अत्र **वेदान्तिनः** प्रतिपादयन्ति भवतु नाम द्रव्यादि षट्पदार्थेभ्यः भिन्नः अभावपदार्थः। परन्तु तस्य प्रत्यक्षज्ञानं न सम्भवति। प्रत्यक्षज्ञाने हि इन्द्रियार्थसन्निकर्षः न्यायमते अभिमतः। स चास्माकं नये अन्तःकरणस्य परिणामात्मिका वृत्तिजनने उपयुज्यते। अभावपदार्थेन सः साक्षादिन्द्रियसन्निकर्षः न सम्भवति। इन्द्रियसन्निकर्षाभावादभावाकारा अन्तःकरणस्य परिणामोपि न सम्भवति। अतः अभावज्ञाने अनुपलब्धिः प्रमाणम्।

**अनुपलब्धिस्वरूपविचारः**

अभावरूपविषयस्येन्द्रियसन्निकर्षयोग्यत्वाभावात्प्रत्यक्षत्वं न सम्भवति। अथ च केनापि पदार्थेन सः अव्यभिचरित सामानाधिकरण्याभावादनुमानमपि न सम्भवति। अथ च अभावपदार्थेन सः कस्यापि पदार्थस्य सादृश्याभावादुपमानमपि न सम्भवति। अत्यन्ताभावस्य तादात्म्याभावस्य च नित्यत्वादुत्पादोत्पादकसम्बन्धाभावादर्थापत्तिप्रमाणमपि न सम्भवति। अतः अभावज्ञाने अनुपलब्धिप्रमाणं स्वीक्रियते। तच्च प्रमाणं **''ज्ञानकरणाजन्याभावानुभवा-साधारणकारणमनुपलब्धिरूपं प्रमाणम्।''**[1] ज्ञानरूपाणि यानि करणानि व्याप्तिज्ञान-सादृश्यज्ञानतात्पर्यवच्छब्दज्ञानोपपाद्यज्ञानानि तेभ्योऽजन्यो योऽभावानुभवः तस्यासाधारणं कारणमनुपलब्धिरूपं प्रमाणम्। ननु येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनैव सह तद्गता जातिस्तदभावश्च गृह्य इति चक्षुरादिकमेवाभावज्ञानासाधारणं कारणं वक्तव्यं किमनुपलब्ध्येति चेत्, न, घटतदभावयोर्वैजात्यानुभवाद् वैजात्यानुभवे च प्रमाणवैजात्यमप्यवश्यं वक्तव्यम्। न च घटत्वादिजातिवद् घटाभावस्यापि चक्षुर्गम्यत्वमेवास्त्विति वाच्यम्। रूपरसगन्ध-स्पर्शशब्दरहितस्याभावस्यैन्द्रियकत्वायोगात्। तस्मादनुपलब्धिः प्रमाणान्तरमेव।

अत्र लक्षणे यदि ज्ञानकरणाजन्यत्वं न निविश्यते तदाऽनुमानादिजन्य अतीन्द्रियाभावा-नुमानादिजनतीन्द्रियाभावानुभवहेतौ अनुमानादौ अतिव्याप्ति स्यात्। तद्वारणाय ज्ञानकरणा-जन्यत्वं लक्षणे निविष्टम्। यदि चासाधारणकारणपदं लक्षणे न निविश्यते तदाऽदृष्टादि

[1] वे०परि०, अनुपलब्धिपरिच्छेदः, पृ०सं० 344

साधारणकारणे अतिव्याप्तिस्यात्। तेषां कार्यसामान्यं प्रति कारणत्वात्। अथ चानुपलब्धि-प्रमाणलक्षणे अनुभवपदस्य यदि निवेशः न स्यात् तदाऽभावस्मृत्यसाधारणहेतुसंस्कारेऽतिप्याप्तिस्यात्, तद्वारणाय अनुभवपदं निविष्टम्।

अत्र पूर्वपक्षिणः आक्षिपन्ति अभावानुमिति स्थलेऽपि अनुपलब्धिप्रमाणेनैवाभावस्य ज्ञानं स्यात्। तदर्थमनुमानस्यावश्यकतैव नास्ति। तदुच्यते योग्यानुपलब्धिरेवाभावग्रहणे हेतुरस्ति। योग्यता च कार्यकारणभावरूपा यदिन्द्रियजन्ययत्संसर्गकयत्प्रकारकानाहार्य घटाद्युप-लब्धिविरोध्यज्ञानजन्ययोग्यघटादिप्रतियोगिकाभावप्रत्यक्षं प्रति तदिन्द्रियजन्यतत्संसर्गकतत्प्रकार-कानाहार्यघटाद्युपलब्धिविरोध्यज्ञानं करणमिति भावः। संयोगेन घटवति भूतले संयोगसंसर्ग-घटत्वप्रकारकानाहार्य चाक्षुषघटोपलब्धिसत्वेपि त्वगिन्द्रियजन्यघटत्वप्रकारकानाहार्य्यघटोप-लब्धिविरोध्यज्ञानसत्वेन घटाभावस्यानुपलब्ध्या प्रत्यक्षत्वापत्तिवारणाय यदिन्द्रियजन्येति। संयोगेन घटवति भूतले तादात्म्येन घटाभाव सत्वेन संयोगेनघटाभावस्य प्रत्यक्षत्वापत्तिवारणाय यत्संसर्गकेति। संयोगेन घटवति भूतले द्रव्यप्रकारकोपलम्भविरोध्यज्ञानेन घटाभाव-प्रत्यक्षत्वापत्तिवारणाय यत्प्रकारकेति। आहार्य्यघटाभावप्रत्यक्षानुदयापत्तिवारणायानाहार्य्येति।

योग्यानुपलब्धिविषये आशंकते। केयं योग्यानुपलब्धिः? योग्यस्य प्रतियोगिनः अनुपलब्धिः योग्यानुपलब्धिः। अथवा प्रत्यक्षयोग्ये अधिकरणे प्रतियोग्यनुपलब्धिः योग्यानुप-लब्धिः। यदि च प्रत्यक्षयोग्यस्य प्रतियोगिनः अनुपलब्धिः योग्यानुपलब्धिरित्युच्येत तदा स्तंभे पिशाचादि भेदस्य प्रत्यक्षत्वं न स्यात्। यदि च प्रत्यक्षयोग्येऽधिकरणे अभावस्यानुपलब्धिः योग्यानुपलब्धि पदेनोच्येत तदा प्रत्यक्षयोग्ये आत्मनि धर्मादि प्रतियोगिकाभावस्य प्रत्यक्षत्वापत्तिः स्यात्। अतः तद्वारणाय योग्याचासावनुपलब्धिः योग्यानुपलब्धिः इति कर्मधारय समासस्वीकारे दोषाभावात्। तत्रानुपलब्धेर्योग्यतानाम **'तर्कितप्रतियोगि-सत्त्वप्रसञ्जितप्रतियोगिकत्वम्'।**

यत्प्रतियोगिकाभावः गृह्यते तस्य प्रतियोगिनः सत्त्वेनाधिकरणे तर्कितेन प्रसञ्जितमापादं योग्यम्। यत्प्रतियोग्यिनुपलब्धिस्वरूपं यस्यानुपलम्भस्य सोऽनुपलम्भः अनुपलब्धि योग्यानुपलम्भः। यद्यत्र घटः स्यादिति तर्कितेन प्रतियोगिसत्त्वेन तर्ह्युपलभ्येतेत्येवं रूपेण प्रसञ्जित आपादितः घटोपलम्भः प्रतियोगी यस्यानुपलम्भस्य तस्य भावस्तत्वमित्यर्थः। अत्र प्रतियोगी घटः। द्वितीयप्रतियोगिशब्देन घटज्ञानं गृह्यते।

अथ च यस्याभावो गृह्यते, तस्य य प्रतियोगी तस्य सत्वेनाधिकरणे तर्कितेन प्रसञ्जितमापादनयोग्य यत्प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलम्भस्य तत्त्वं तदनुपलब्धियोग्यत्वम्। तथा हि- स्फीतालोकवति भूतले घटः स्यातदोपलभ्येतेत्यापादनसम्भवात्तादृशभूतले घटाभावो-ऽनुपलब्धिगम्यः।

## अनुपलब्धिविषये पूर्वमीमांसा मतम्

पूर्वमीमांसादर्शनेऽपि योग्यानुपम्भः स्वतन्त्रं प्रमाणं स्वीक्रियते। तत्र च योग्यत्वं ज्ञायमानं सदेव तत्र प्रविष्टम्, न तु सत्तामात्रेण, योग्यानुपलम्भश्च स्वरूपसन्नेवाभावप्रमितौ हेतुरिति नानवस्थाऽऽपत्तिः। नहीदं प्रमाणं प्रत्यक्षरूपं भवितुमर्हति। योऽहनि प्रातःकाले गृहेऽवस्थतो मध्याह्नसमये पृच्छयते, किमस्मिन् गृहे प्रातःकाले माथुरः कश्चित् पुरुषः शुक्ल-वासादीर्घतमो लोहितवर्णः समागतः? इति, स तदानीमेव योग्यस्मरणानुदयात् तस्याभावं प्रातःकालिकमवधारयति, इन्द्रियव्यापारमन्तरैव। न च प्रातरवगतोऽभावस्तदानीं स्मर्यत इति वाच्यम्, प्रतियोगिनो माथुरस्य तदानीं कथमपि बुद्धावनारोहात्। अबुद्धिस्थे च प्रतियोगिनि भावे तदभावज्ञानासम्भवात्। एवं च यत्रापीदानीमेवानुपरतेन्द्रियव्यापारेणैव सन्निहितदेशकाल-वर्त्यभावः प्रतीयते, तत्रापि योग्यज्ञानानुदयस्य क्लृप्तसामर्थ्यस्य कारणत्वसम्भवान्नेन्द्रियस्य कारणत्वं कल्पयितुं शक्यमिति न प्रत्यक्षेऽन्तर्भावः नाप्यनुमाने, अज्ञातेन तेनाभावेन सह कस्यचिल्लिङ्गस्य सम्बन्धग्रहणासम्भवात्।[1]

---

[1] शा०दी०, 1 पा०, सू०अ०-5, पृ० 338

## अनुपलब्धिप्रामाण्यप्रत्याख्याने बौद्धमतम्

अनुपलब्धेः स्वतन्त्रं प्रामाण्यं निराकुर्वन् सौगताचार्यो ब्रवीति **'दृश्यं सद्यद्यत्र नोपलभ्यते, तत्तत्र नास्ति, यथा बुद्धिसत्त्वे पुरुषः।'** अतोऽनुपलब्धिसमाख्या प्रत्यक्षाद्यनुत्पत्तिरभावस्य लिङ्गम्। यद्वा वीतहेतुरयम्। दृश्यस्य सत्ता दर्शनव्याप्ता, तद्व्यापकं दर्शनं निवर्तमानं व्याप्यां दृश्यसत्तां निवर्तयति- इत्यनुमानरूपैवानुपलब्धिर्न स्वतन्त्रं मानम्।[1]

## अस्य प्रत्याख्यानस्य मीमांसापद्धत्या प्रत्याख्यानम्

सपक्षे व्याप्तिग्रहे जाते यदा पक्षे लिङ्गज्ञानं भवति, तदानुमितिर्जायते। प्रकृतेऽपि ज्ञान-निवृत्तिदृश्यनिवृत्तिर्व्यापकयोः सपक्षेष्वगयोर्व्याप्तिं निश्चित्य पक्षे च लिङ्गभूतां दर्शननिवृत्ति केनचिदनुमानभिन्नेन प्रमाणेनावगत्य दृश्यनिवृत्तिरनुमेया। अन्यथा तयोर्ज्ञानस्यानुमानाधीनत्वे-ऽनवस्था प्रसज्येत। तत्परिहारायानुमानभिन्नयानुपलब्ध्यैव लिङ्गभूतदर्शननिवृत्तिमवगम्य विषय-निवृत्तिरनुमातव्येत्यनुपलब्धिः स्वतन्त्रं प्रमाणमस्त्येवेति हृदयं मीमांसाचार्याणाम्।[2]

## पूर्वोक्तमीमांसकमतनिरासे श्रीजयन्तभट्टः

अनुपलब्धेः प्रामाण्यसमर्थनेऽनुपदमेव मीमांसकैर्या युक्तिदर्शिता, तस्या निरासे श्रीजयन्तभट्टेनोक्तम्- **''वस्त्वन्तरविविक्तगौरमूलकस्वरूपग्रहणसमये एव तत्रासन्निहितसकलपदार्थाभावस्य ग्रहणं मेचकबुद्ध्या। इदानीं तद्गतगर्गाभावस्य स्मरणम्, न तस्य परोक्षस्यानुभवः। तथा हि- तदानीं गर्गस्तत्र नासीदित्येवमसौ स्मृत्वा सत्यवादी स्मरति, इदानीं त्वस्तित्वनास्तित्वे प्रति संशेते एवासौ, गर्गस्य कुतश्चिदागतस्य तत्रास्तित्वसम्भवात्''** इत्यादि द्रष्टव्यम्।[3]

---

[1] शा०दी०, 1 पा०, सू०अ०-5, पृ० 341
[2] शा०दी०, प्र०टी०च०, 1 पा०, सू०अ०-5, पृ० 341-342
[3] न्या०म०, प्रमाणप्र०, पृ० 50

## अनुपलब्धिप्रमाणनिरासे श्रीजयन्तभट्टः

न्यायदर्शनरहस्यज्ञ श्रीजयन्तभट्टमतेऽनुपलब्धिः पृथक् प्रमाणं नास्त्येव। तथाहि- **''इह कुण्डे दधि इति ज्ञानवद् 'इह भूतले घटो नास्ति' इत्यपि ज्ञानमेकमेव। अन्यथा भूतलांशे प्रत्यक्षं घटो नास्तीत्यंशेऽनुपलब्धिप्रमाणमिति ज्ञानद्वयस्य प्रसङ्गः, स चानुभवविरूद्धः। पर्वतेऽग्निरिति युक्तं परोक्षज्ञानम्। धूमज्ञानोत्तरं व्याप्तिस्मृत्वादि-बुद्ध्यन्तरव्यवधानसम्भवात्। इह तु भूप्रदेशवद् घटनास्तितावगतिरविच्छेदेनैवानु-भूयते। तत्र हि व्यापृताक्षोऽपि पर्वतवर्तिनमग्निमवलोकयितुं नोत्सहते, इह तु अपरिम्लाननयनव्यापार एव घटाभावं पश्यति- इति अभावज्ञानमैन्द्रियकमेव, तद्भावभावित्वविधानात्''** इत्यादि बहूक्तं नयायमञ्जर्य्याम्।[1]

## अभावेन सहेन्द्रियस्य सम्बन्धविचारः

ननु भूतलेन सह चक्षुषः संयोगःसम्बन्धः, न तथाभावेन सह कश्चन सम्बन्ध इत्य-सम्बद्धस्य ज्ञाने सर्वस्याप्यभावस्य प्रत्यक्षं स्यादिति चेत्, उच्यते- **''अभावज्ञानं ह्यभावाश्रयग्रहणसापेक्षं भवतीति नियमः। आश्रयस्य च सन्निहितस्यैव प्रत्यक्ष-विषयत्वान्नातिप्रसङ्गः। अथवा संयुक्तविशेषणभावाख्यसन्निकर्षोपकृतं चक्षुरभावं ग्रहीष्यति। यथा समवायप्रत्यक्षत्ववादिनां पक्षे समवायम्''** इति।[2]

## उक्त सन्निकर्षस्य चक्षुषा रसाद्यभावज्ञानेऽतिप्रसङ्गनिरासः

ननूक्तसन्निकर्षोपकृतं चक्षू रसाद्यभावमपि गृहणीयादिति चेत्, उच्यते- षट्प्रकारा सन्निकर्षानुगामिणी योग्यता चक्षुरादिष्वभ्युपगम्यते। तत्रापि न योग्यतामात्रे विश्रम्य स्थातव्यम्। यत्र योग्यता तत्र सन्निकर्षोऽप्यस्ति, न तु यत्र सन्निकर्षस्तत्रावश्यं योग्यतेति रसाद्यभावे सत्यपि

---
[1] न्या0म0, प्रमाणप्र0, पृ0 48
[2] न्या0म0, प्रमाणप्र0, पृ0 49

सन्निकर्षे योग्यताया अभावाद् न तस्य चक्षुषा ग्रहणम्। चक्षुषा रसग्रहणवारणेऽपीयमेव योग्यता हेतुरिति दिक्।[1]

**अनुपलब्धेः स्वतन्त्रं प्रामाण्यं नास्तीत्यत्र शाब्दिकसिद्धान्तः**

यद्यपि **''तस्य भावस्त्वतलौ''**[2] इति सूत्रीयभाष्योद्द्योतपर्यालोचनयानुपलब्धेः कथञ्चित् स्वतन्त्रं प्रमाणत्वमायाति, पूर्वोत्तरमीमांसाभ्यामनुमोदितं च तत् प्रचुरयुक्त्यादि-प्रदर्शनेन, तथापि **''स्त्रियाम्''**[3] इत्यादिसूत्रीयभाष्यादिपर्यालोचनेनप्रत्यक्षगतार्थतैवास्या लभ्यते। न पृथक् प्रामाण्यम्। सा च गतार्थता न्यायदर्शनसरण्या किञ्चिद् दर्शिता। अथ तादृशं भाष्यादि प्रदर्श्यते। तथा हि- **''अन्योऽन्यसंश्रयं त्वेतत्, भवति। स्त्रीत्वकृतः शब्दः शब्दकृतं च स्त्रीत्वम्। तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते। 'प्रत्यक्षेण विरूध्यते' प्रत्यक्षेण खल्वपि स विरुध्यते, य आह खट्वावृक्षयोः खल्विङ्गं नोपलभ्यते इति। तत्र स्वेन्द्रियविरोधः कृतो भवति। न च नाम स्वेन्द्रियविरोधिना भवितव्यम्''** इति भाष्यम्। अत्र प्रदीपः- आदित्यगल्वित् सन्नेति। तद्दूषयति- प्रत्यक्षेणेति। लिङ्गस्वरूपविविक्तखट्वादिवस्तुविषयेण प्रत्यक्षेण लिङ्गभावनिश्चय-कारिणा विरूध्यत एतदित्यर्थः। इन्द्रियदौर्बल्यमनुपलब्धिकारणं प्रमाणान्तरावसितवस्तुविषय-मेवाभिधातुं शक्यते इति। अत्रोद्द्योतः- **''भाष्ये स्वेन्द्रियविरोधः- स्वेन्द्रियजन्यप्रत्यक्ष-विरोधः। अनुमानेन च स्वेन्द्रियजप्रत्यक्षविरोधिना न भवितव्यमित्यर्थः।''** इति।[4]

अयमाशयः खट्वावृक्षयोः सदपि लिङ्गं प्रत्यक्षेण नोपलभ्यते। यथा आदित्यगतिः सती अपि प्रत्यक्षेण नोपलभ्यते अपि त्वनुमानेन तद्वत्। एवं च प्रत्यक्षेण लिङ्गाभाव एवोपलभ्यते, न चानुमानेन लिङ्गोपलब्धिभवत्विति वाच्यम्, अनुमानस्यानन्यथासिद्धस्वरूपबलवत्त्वाभावेन प्रत्यक्षप्रमाणतो बाधितत्वात्। एवं च स्पष्टमेवानुपलब्धैः पृथक् प्रामाण्यं निरस्तम्।

---

[1] पूर्ववत्
[2] पा०सू०- 5/1/119
[3] पा०सू०- 4/1/3
[4] म०भा०, प्र०उ०- 4/1/3

## उक्तभाष्यद्वयी विरोधपरिहारः

ननु तस्य भाव इति सूत्रीयभाष्येदानीं का गतिरिति चेदुच्यतेतत्सूत्रे नहि भाष्यकृता स्फुटमस्याः प्रामाण्यं समर्थितमपितूद्द्योतकृता अस्याः प्रमाणतया स्मरणं कृतम्। अत्र तु प्रत्यक्षेण सल्लिङ्गं नोपलभ्यते इत्युक्त्याऽभावस्य प्रत्यक्षग्राह्यत्वं सुस्पष्टमुक्तम्। प्रत्यक्षापेक्षया अनुमान दौर्बल्यं चात्र ध्वनितम्। अस्यां स्थितौ तस्य भाव इति सूत्रभाष्ये- **"प्रत्यक्षसहकारितयैवास्याः प्रमाणत्वव्यवहारो गौणः"** इति नीत्या उद्द्योतग्रन्थो योजनीयः। क्लृप्तेन प्रत्यक्षप्रमाणेन निर्वाहऽक्लृप्तस्यानुपलब्धिप्रमाणस्य कल्पनाया अन्याय्यत्वात्। तत्पक्षे भाष्यान्तरसंवादाभावाच्च।

## प्रत्यक्षसकारिण्या अस्या योग्यताविषये कश्चन विशेषः

सा चेयमनुपलब्धिनः सामान्येन सहकारिणी, अपि तु दृश्यस्य दर्शनयोग्यस्य याऽनुपलब्धिः सा। इदमेव प्राप्तसत्वनिश्चययोग्यस्येत्युक्त्याबोधितमुद्द्योतकृता।[1] एवं च शशशृङ्गं गुरुत्वादिकं धर्मादिकं च यदयोग्यं तदभावो न प्रत्यक्षगम्यः। एवमेव प्रतियोगिनो योग्यतावदधिकरणस्यापि योग्यताग्राह्या। अत एवान्योन्याभावप्रत्यक्षे स्तम्भे पिशाचादिभेदस्य चक्षुषा प्रत्यक्षं भवत्येव। एवं चात्यन्ताभावप्रत्यक्षे प्रतियोगिनो योग्यता भेदप्रत्यक्षेऽधिकरणस्य योग्यतापेक्ष्यते- इति न्यायसरणिः[2] शाब्दिकैरपि समादर्तव्या।

## अभावस्यानुमेयत्वादिकम्

क्वचिदभावोऽनुमेयोऽपि भवति। यथा सन्तमसे सलिलधारा विसरसिक्तसस्य-मूलमभिवर्षति देवे घनपवनसंयोगाभावोऽनुमीयते। यथा वार्थापत्तौ जीवतः चैत्रस्य गृहसत्वेन

[1] म0भा0, प्र0उ0- 5/1/119
[2] न्या0सि0मु0, प्र0ख0, का0सं0-62

बहिरसत्वकल्पनम्। एवं क्वचिदागमेनाप्यभावज्ञानं यथा अध्वगानां चौरादि नास्तिताज्ञानमाप्त-वाक्यतो भवति।[1]

**अनुपलब्धिविषये यथा यक्षस्तथा बलिरिति दृष्टान्तनिरासः**

यच्चोच्यते- अनुरूपेण प्रमाणेन प्रमेयं प्रमीयते, प्रमेयत्वाद् भावात्मकप्रमेयवदिति। तदपि न शोभनम्, अभावस्यापि क्वचिद् भावात्मकप्रमेयसाधनत्वेन दृष्टत्वात्। यथा वृष्ट्यभावज्ञानेन वाय्वभ्रमसंयोगस्य भावस्यानुमितिः, यथा वा प्रागभावप्रतिबन्धकभावाभ्यां कार्यजातमिति।[2]

एवं चानुपलब्धिर्न प्रमाणम्, अपितु प्रमाणसहकारिण्येवेत्येव **नैयायिकानां** सिद्धान्त इति दिक्।



1 न्या0म0, प्रमाण प्र0, पृ0 511
2 पूर्ववत्

# चतुर्थोऽध्याय

## ( क ) अलौकिसन्निकर्षविचारः

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा॥[1] इति।**

उपरिवर्णितमेवास्माभिरिन्द्रियार्थसन्निकर्षजन्यं लौकिकप्रत्यक्षमिति। तद्धेतुः षड्विध-सन्निकर्षोऽपि निरूपितः। एतल्लौकिकप्रत्यक्षातिरिक्तं च न्यायशास्त्रे त्रिविधमलौकिकं प्रत्यक्षमपि स्वीक्रियते-

सामान्यलक्षण-ज्ञानलक्षण-योगजाख्यम्। एतदलौकिकप्रत्यक्षकारणानि चालौकिक-सन्निकर्षाऽपि त्रिविधा भवन्ति।

यद्यपि रघुनाथशिरोमण्यादयो नवीनाः नैयायिकाः सामान्यलक्षणं सन्निकर्षं न स्वीकुर्वन्ति। तथापि न्यायवैशेषिकसम्प्रदायसम्मतसिद्धान्तानुसारेणाऽलौकिकसन्निकर्षः त्रिविधः एव।

**सामान्यलक्षणसन्निकर्षः-**

अस्माकं प्रत्यक्षज्ञानप्रक्रियायां प्रत्यक्षकारणसामग्र्य। समाधेयानि सन्ति कानिचिद् काठिन्यानि। यथा- धूमलिङ्गकेन वह्न्यनुमितिलोकप्रसिद्धम्। परं साऽनुमितिर्धूमवह्नयो सर्वत्र देशे काले च साहचर्यनिश्चये सत्येव सम्भवति। तन्निश्चयाद् न लौकिकप्रत्यक्षेण सम्भवति। महानसादौ धूमवह्नयोः प्रत्यक्षे सति धूमत्वसामान्यवतः सकलधूमस्य वह्नित्ववतो वह्निमात्रस्य च सामान्यलक्षणप्रत्यासत्या ज्ञानं सति सकलधूमवह्निव्यक्तीनां साहचर्यनियमरूपा व्याप्तिर्ग्रहीतुं शक्यते, अत एव नैयायिकैः सामान्यलक्षणप्रत्यासत्यातिरिक्तत्वं कल्पितम्।

---

[1] न्या०सि०मु०- प्र०खं०, का०सं० 63

"**समानानाम्भावोऽनागन्तुको नित्यो धर्मः सामान्यम्**"[1] पूर्वोक्त द्रव्यगुणकर्मेति-त्रितयवृत्तिः। उक्तञ्च वात्स्यायनेन "**या समानाम्बुद्धिम्प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरो व्यावर्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम्**"[2] इति। एवञ्च समानानां भावः सामान्यं तल्लक्षणं यस्य तत्सामान्यलक्षणम्। सामान्यशब्दोऽयं साधारणधर्मपरः, लक्षणशब्दश्च स्वरूपपरो विषयपरो वा। तथा च लक्षणशब्दस्य स्वरूपार्थकत्वे सामान्यलक्षणशब्दस्य सामान्यस्वरूपसन्निकर्षः इत्यर्थः स्यात्। स चेन्द्रियसम्बद्धविशेष्यज्ञानप्रकारीभूतो धर्मो अवगन्तव्यः। पुरोवर्तिना घटादिविषयेण सह चक्षुषो योगे सति "**घटघटत्वे**" इत्याकारकं निर्विकल्पकज्ञानमुत्पद्येते, तदनन्तरं "**अयं घटः**" इति सविकल्पकं ज्ञानमुत्पद्यते। इदं न ज्ञानं विशेष्यविधया घटं विशेषणविधया च घटत्वं विषयो करोति। अतश्चात्र चक्षुः संयुक्त घट विशेष्यकं यज्ज्ञानम् "**अयं घटः**" तत्र प्रकारीभूतं सामान्यं घटत्वम्, तेन घटत्वरूपसामान्यलक्षणसन्निकर्षेण सकलघट विषयमलौकिकं प्रत्यक्षं भवति।

अत्रेन्द्रियसम्बद्धरूपस्यैव सामान्यत्वे अभिमते धूलिपटले धूमत्वमवधार्य यत्सकल-धूमविषयकं ज्ञानं जायते तत्र जायते सामान्यस्येन्द्रिय सम्बद्धमात्र वृत्तित्वात्, धूमत्वेन चेन्द्रियसंयोगाभावात्, धूलीपटले नैव तत्सम्बन्धात्। सामान्यस्येन्द्रियसम्बद्धविशेष्यक ज्ञानप्रकारी न भूत धर्मत्वे तु इन्द्रियसम्बन्धो धूलिपटलः तद्विशेष्यकज्ञाने, प्रकारीभूत धर्मो धूमत्वमप्यमस्ति, अतश्चोक्तभ्रमोत्पत्तिः किञ्च बहिरिन्द्रियजन्यप्रत्यक्षस्थले एवेन्द्रियसम्बद्ध विशेष्य तु ज्ञानप्रकारीभूतस्य सामान्यलक्षणसन्निकर्षत्वमभिप्रेतव्यम्, मानसप्रत्यक्षस्थले तु ज्ञानप्रकारीभूतं सामान्यस्यैव तत्वमिति प्राचीन नैयायिकानां मतम्।[3]

---
1 न्या0सि0मु0- प्रभा0, का0सं0 198
2 न्यायदर्शनम्, वात्स्यायनभाष्यसहितम्
3 न्या0सि0मु0, प्र0खं0, 198

ननु चक्षुः संयोगादिकं विनापि सामान्यज्ञानेन घटादीनां प्रत्यक्षमस्ति चेत् सामान्यज्ञाने सत्वे सर्वेषामेव घटादीनां सर्वदेव चाक्षुषप्रत्यक्षं स्यादिति चेन्न, यदा बहिरिन्द्रियेण सामान्य-लक्षणसन्निकर्ष द्वारा ज्ञानं जननीयं तदायत्किन्चिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्य ज्ञानमपेक्षते इति अलौकिकप्रत्यक्षेऽपि लौकिकप्रत्यक्षज्ञानसामग्री अपेक्षिता।[1] तथा चोक्तं विश्वनाथेन कारिकावल्याम्-

**तदिन्द्रियजन्यतद्धर्मबोधसामग्र्यपेक्षते।**[2] इति।

अत्र ज्ञानप्रकारीभूतस्य सामान्यस्य सन्निकर्षत्वे स्वीकृते प्रथमस्तावदयं दोषो भवेत्यत्सधर्मो नित्यानित्योभयात्मको भवितुमर्हति। संयोगसम्बन्धेन भूतले घटस्य चाक्षुषप्रत्यक्षे जाते पश्चात् तस्मिन् विषये विनष्टे सत्यपि यदा पूर्वानुभवजन्यसंस्कारबलेन **'भूतलं घटवत्'** इत्याकारकमलौकिकं स्मरणं भवति। परं ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे तथा भाने नोपपद्यते, रूपसामान्यादीनां विद्यमानत्वात्।

द्वितीय च दोषोऽयं यद्येन्द्रियसम्बद्धविशेष्यकज्ञाने जाते परेषुः विषयेन्द्रिययोः सम्बन्धिमन्तरेणापि भवितव्यम्। सकलघटविषयकज्ञानेन घटसामान्यस्य नित्यत्वात् परं न भवति।

अतश्च सामान्यविषयकं ज्ञानमेव सामान्यलक्षणसन्निकर्षो न ज्ञायमानं सामान्यं प्रत्यासत्तिरिति नव्यनैयायिकानां मतम्। एवं च विषये नष्टेऽपि तज्ज्ञानमादायालौकिकं प्रत्यक्षं सम्भवेत् तथा घटत्वसामान्यस्य नित्यत्वेपि इन्द्रियसम्बद्धमन्तरेण तस्य ज्ञानाभावान्नापि व्यभिचारः।

अत्र च पक्षे लक्षणशब्दो विषयपरः तथा च सामान्यविषयकं ज्ञानं प्रत्यासत्तिरिति फलितार्थः।[3] तदुक्तम्-

---

1 न्या०सि०मु०, प्र०खं०, पृ०सं० 203
2 न्या०सि०मु०, प्र०खं०, का०सं०-64
3 न्या०सि०मु०, प्र०खं०, पृ०सं० 201

"आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते"[1] इति।

अत्र पुनः प्रश्न उपस्थाप्यते यत् सामान्यविषयकज्ञानस्यापिसन्निकर्षत्वस्वीकारे अस्त्येव दोषप्रसङ्गः।

तथाहि- चक्षुः संयोगमन्तरेणापि यत्र घटत्वरूपसामान्यस्य शाब्दिकं स्मरणात्मकं वा ज्ञानं भवति, तत्र तेन सकलघटविषयकेण लौकिकप्रत्यक्षेण भक्तिव्यम्। अत्र नव्यनैयायिका उत्तरयन्ति यत् न केवलं सामान्यविषयकज्ञानस्यैवालौकिकप्रत्यक्षे कारणत्वम्, किन्तु इन्द्रियसंयोगालोकादेरपि तत्र कारणत्वम्।[2] एवञ्च प्रमेयत्वेन सकलप्रमेयविषयक ज्ञानवत्स्वपि अस्मासु विशेषतस्तेषां प्रमेयाणां ज्ञानाभावान्न सार्वज्ञयापत्तिरप्यस्माकम्।

**ज्ञानलक्षणसन्निकर्षः-**

ज्ञानमेव लक्षणं स्वरूपं यस्य सन्निकर्षस्य स ज्ञानलक्षणसन्निकर्षः। ज्ञानलक्षणा-प्रत्यासत्तिः द्वितीयः अलौकिकः सन्निकर्षः। वस्तुतस्तु इन्द्रियसंयुक्तमनसंयुक्तात्मसमवेतज्ञानरूपो ज्ञानलक्षणः। इदं तु बाह्येन्द्रियज्ञाने एव। मानसज्ञाने तु मनः संयुक्तात्मसमवेतो ज्ञानरूपो ज्ञानलक्षणः इति। ज्ञानं वेदं स्मरणात्मकम्। स्मृतिरूपं ज्ञानं यदि पूर्वज्ञातं पदार्थविशेषं वर्तमानकालीनज्ञानविषयीभूतस्य पदार्थान्तरस्य विशेषणरूपेणेन्द्रियसम्बद्धं करोति, तर्हि तत् स्मृतिरूपं ज्ञानमेव ज्ञानलक्षणरूपालौकिकसन्निकर्षः। यथा सुरभित्व ज्ञानम्। अतः सन्निकर्षबलाद्ग्रहणायोग्यविषयेणापि सह इन्द्रियसन्निकर्षो भवति।[3] पदार्थज्ञानविशेषस्य ज्ञाने उत्पन्ने सति तज्ज्ञानमात्मनि संस्कारविशेषमुत्पादयति। तस्मिन् संस्कारे उद्बुद्धे सति स्मृतिरूत्पद्यते। तच्च स्मृतिज्ञानं सन्निकर्षरूपेण पूर्वज्ञातपदार्थज्ञायमान पदार्थेन सह विशेषणरूपेण सम्बन्धयति। दूरस्थिते अनाघ्रातगन्धे चन्दनखण्डे दृष्टे सति यदा 'सुरभिचन्दनं पश्यामि' इति ज्ञानं जायते, ततः चक्षुः संयुक्तमनः संयुक्तात्मसमवेतं स्मृति रूपं सौरभज्ञानमेव ज्ञानलक्षणसन्निकर्षः।

---

[1] न्या०सि०मु०, प्र०खं०, का०सं०-64
[2] न्या०सि०मु०, प्र०खं०, पृ० 203
[3] न्या०कोष, पृ० 303

अत्रायमाशयः यत्र पूर्वस्मिन् दिवसे कश्चित् पुरुषः किन्चिच्चन्दनखण्डनं घ्रात्वा **''सुरभि चन्दनम्''** इति निश्चितवान्, स एव परिदने गतः, केनचित् क्रेता चन्दनखण्डमिदं सुरभि न वा? इति पृष्टोऽघ्रात्मैव **''सुरभिचन्दनम्''** इति यद्वदति तदा तस्य प्रतिपत्तु दर्शिताकारन्ज्ञानं सौरभचन्दनन्चदनत्वन्चैतात्त्रितयमेव विषयीकरोति। तत्र यथाक्रमं संयोग-सन्निकर्षेण चन्दनज्ञानम्, चक्षुसंयुक्तसमवायसम्बन्धेन चन्दनत्वज्ञानं यदस्ति तल्लौकिक-प्रत्यक्षमेव लौकिकसन्निकर्षजन्मत्वात्। यत्तु घ्राणेन्द्रियसम्बन्धमन्तरापि चन्दनखण्डे तस्य सौरभात्रजातं तत्तु **''चक्षुः संयुक्तमनः संयुक्तात्मसमवेतज्ञानरूपेण'' ''चक्षुः संयुक्तमानः संयुक्तात्मसमवेतसंस्काररूपेण''** वा ज्ञानलक्षणाख्येन सन्निकर्षेण जनितमलौकिकमेव। एवं रूपा या सौरभसाक्षात्कारहेतुः प्रत्यासत्तिः सा 'ज्ञानलक्षणा' प्रत्यासत्तिरित्युच्यते।

अयम्भावः- **'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्'** इति नियमात् यदि कश्चन पुरुषो घ्राणेन्द्रियेण संयुक्तसमवाय रूपलौकिकसन्निकर्ष द्वारा घ्राणसंयुक्तचन्दनसमवायसम्बन्धेन वा चन्दनस्य सौरभं गृह्णाति। तत्सौरभं ज्ञानजन्य संस्कारश्चात्मनि वर्तते। कालान्तरे यदि स एव पुरुषो दूरवर्तिनमनाघ्रियमाणसौरभं चन्दनखण्डान्तरं पश्यति, तदा **''चन्दनं सुरभि''** इति यदि ज्ञानं भवति, तर्हि तत्र ज्ञानलक्षणसन्निकर्षः स्वीकरणीयः। चन्दनस्य सौरभे घ्राणेन्द्रियेन गृह्यमाणे तु नेदं ज्ञानलक्षणसन्निकर्षस्योदाहरणं भविष्यति। चन्दनसौरभविषयसंस्कारवतः पुरुषस्य दूरवर्तिना अनाघ्रियमाणेन चन्दनेन सह चक्षुः संयोगे सति **''सुरभिचन्दनमि''**ति चाक्षुषप्रत्यक्षं भवति। एतच्च एकमेव ज्ञानमिति सौरभांशे स्मृतिः चन्दनांशे च प्रत्यक्षम्, इति ज्ञानद्वयं न स्वीकरणीयम्। ज्ञानद्वये स्वीकृते तु चन्दनार्थिनः प्रवृत्तिर्नोपपद्येत।

**''सुरभिचन्दनम्''** इति चाक्षुषज्ञाने चन्दनविशेषणरूपेण सौरभस्य भानं भवति। चक्षुः संयुक्तस्य चन्दनस्य सौरभं तु चक्षुरिन्द्रियेण न गृह्यते, चक्षुरिन्द्रियेण तस्य

ग्रहणायोगात्। यद्यपि चन्दनं चक्षुषा प्रत्यक्षीक्रियते, तथापि सौरभं तु घ्राणेन्द्रियेणैव न तु चक्षुरिन्द्रियेण। तथा च चाक्षुषप्रत्यक्षविषयीमते चन्दने सौरभं विशेषणरूपेण कथं भासते? तत्र नैयायिकानामाशयः- यद्यपि चक्षुरिन्द्रियेण सह सौरभस्य संयोगादि सन्निकर्षो न सम्भवतीति सौरभं चक्षुरिन्द्रियेण ग्रहीतं न शक्यते, तथापि प्रकृतेज्ञाने सौरभं चक्षुरिन्द्रियेणैव गृह्यते इति स्वीकरणीयम्। तथाहि चन्दनस्य चाक्षुषप्रत्यक्षं भवतीत्यत्र न कोऽपि सन्देहः। चाक्षुषप्रत्यक्षविषयीभूते तस्मिन् चन्दने च सौरभं विशेषरूपेण भासते। चक्षुः संयुक्ते चन्दने सौरभस्यागृहीतत्वात् यत् सौरभं चन्दनेविशेषणरूपेण भासते। चक्षुः संयुक्ते चन्दने सौरभस्यागृहीतत्वात् यत् सौरभं चन्दने विशेषणरूपेण भासते तत् पूर्वज्ञातं सौरभमेव। न च तत् चक्षुः संयुक्ते चन्दनेऽस्ति। तथा च प्रकृतचन्दनदर्शनात् प्राक्चन्दनान्तरे यत् सौरभमनुभूतं तत्सौरभविषयानुभवजन्यस्य संस्कारस्योद्बुद्धत्वात् सौरभविषयकस्मृतिरुत्पद्यते। स्मृतिरूपं तज्ज्ञानं स्वविषयीभूतं पूर्वतनसौरभं दृश्यमानचन्दनस्य विशेषणत्वेन चक्षुषा सह सम्बन्धयति। तेन चाक्षुषप्रत्यक्षेऽपि सौरभज्ञानं भवति। प्रत्यक्षे च इन्द्रियसन्निकृष्टस्य पदार्थस्येव भानं भवतीति अस्मिन् प्रत्यक्षे प्राक्तनसौरभं चक्षुरिन्द्रियसन्निकृष्टमिति स्वीकरणीयम्। तच्च स्मृतिज्ञानस्य सन्निकर्षत्वे स्वीकृते एव सम्भवति।[1] एवं ज्ञानलक्षणसन्निकर्षः स्वीकरणीयः एव। एवं प्रत्यभिज्ञायाम्, अनुव्यवसाये, अभावप्रत्यक्षे, भ्रमज्ञाने च ज्ञानलक्षणसन्निकर्षः स्वीकरणीयः।

तथाहि **''सोऽयं देवदत्तः''** इति प्रत्यभिज्ञायां देवदत्ते विशेषद्वयं भासते। **'स'** इति पदेन तत्ता बुध्यते, **'अयम्'** इति पदेन च इदन्ता। तत्र इदन्ता देवदत्तस्य वर्तमानकालीनत्वं पुरोवर्तित्वं च ज्ञापयति। तथा च, देवदत्तः चक्षुरिन्द्रियसन्निकृष्टः, तथा तस्य इदन्ताऽपि षष्ठः सन्निकृष्ट। अत एव इदन्ताविशिष्ट देवदत्तस्य प्रत्यक्षं लौकिक सन्निकर्षेणैवोपपद्यते। तत्तारूपं विशेषणन्तु देवदत्तस्य देशान्तरस्यत्वं कालान्तरस्थत्वं च ज्ञापयति। तद् देशान्तरस्थत्वं कालान्तरस्थत्वं च **लौकिक सन्निकर्षेण** चक्षुषा सहन सम्बध्यते। तदर्थमेव

---
[1] न्या0कोष- पृ0 303

ज्ञानलक्षणसन्निकर्षः स्वीक्रियते। देवदत्तः पूर्वं मया स्थानान्तरे दृष्ट आसीत्। तद्दर्शनजन्यसंस्कारश्च मम आत्मनि वर्तते। अनन्तरं तस्मिन् देवदत्ते अधुना मया अत्र दृष्टे **'सोऽयं देवदत्तः'** इति प्रत्यभिज्ञा जायते। अत्र देवदत्तस्य विशेषणभूतेन देशान्तरेण कालान्तरेण च सह चक्षुरिन्द्रियस्य लौकिकसन्निकर्षो न सम्भवति। तथापि देवदत्तस्य पुनर्दर्शनकाले पूर्वदर्शनजन्य संस्कारो यदा उद्बुद्धो भवति, तदा तज्जन्या स्मृतिः स्वविषयभूतं देशान्तरं कालान्तरं च वर्तमानकालीनस्य पुरोवर्तिना देवदत्तस्य विशेषणत्वेन चक्षुषा सह सम्बन्ध्यति। तस्य देशान्तरस्थत्वरूपायाः कालान्तरस्थत्वरूपायाश्च तत्तायाः देवदत्तस्य विशेषणरूपेण चक्षुषा सह सन्निकर्षं साधयितुं स्मृतिरूपो ज्ञानलक्षणसन्निकर्षः स्वीकरणीयः। **अनुव्यवसायस्योपपत्त्यर्थं च ज्ञानलक्षणसन्निकर्षः स्वीकरणीयः।**[1] तथाहि घटेन सह चक्षुषः संयोगे सति घट-घटत्वयोः घटघटत्वानां वा परस्पर-निरपेक्षं वैशिष्ट्यावगाहि वा यज्ज्ञानं जायते, तत् निर्विकल्पकं प्रत्यक्षम्। तदनन्तरम् **'अयं घटः'** इति समवेतयोः घटघटत्वयोः वैशिष्ट्यावगाहि यज्ज्ञानं जायते, तत् सविकल्पकं व्यवसायात्मकं ज्ञानम्। एतस्य व्यवसायात्मकस्य सविकल्पकज्ञानस्य प्रत्यक्षमेवानुव्यवसायः। स च **'अयं घटज्ञानवान्'** इति **'घटमहं जानामि'** इति वा वाक्येन ज्ञायते। अस्मिन् अनुव्यवसायज्ञानेन पूर्ववर्ति व्यवसायज्ञानमेव विषयो भवति। व्यवसायज्ञानविषयकमिदं मानस प्रत्यक्षमेवानुव्यवसायः। अत्र मनः संयुक्ते आत्मनि ज्ञानं समवायसम्बन्धेन वर्तते इति संयुक्तसमवाय रूपलौकिकसन्निकर्षद्वारा व्यवसायज्ञानं मनसा प्रत्यक्षीक्रियते एवं व्यवसायज्ञानस्य मनोग्राह्यत्वेऽपि व्यवसायज्ञानविषयी भूतानां घटादीनां मनोग्राह्यत्वं न संभवति, बहिरिन्द्रियाणां साहाय्यव्यतिरेकेण मनसो बाह्यवस्तुग्रहेणासामर्थ्यात्। घटादि विषयकं वर्जयित्वा च व्यवसायज्ञानमनुव्यवसायस्य विषयो भवितुं न शक्नोति। तथा च, ज्ञानं स्वविषयं न वर्जयति, मनश्च बाह्यपदार्थं न गृह्णाति। तथापि **'घटमहं जानामि'** इति **'घटज्ञानवानहम्'** इति वाऽनुव्यवसाये यथा पूर्ववर्तिव्यवसायज्ञानं विषयो भवति, तथा

[1] ज्ञानलक्षणविचाररहस्यम्- पृ0 10

व्यवसायज्ञानविषयिभूतं घटादिकमपि। घटादिविषयेण सह तु मनसो लौकिकसन्निकर्षो न सम्भवतीति, अलौकिकसन्निकर्ष एवात्र स्वीकरणीयः। तेन च अलौकिकसन्निकर्षेण मनः बहिरिन्द्रियनिरपेक्षं सत् घटादिबाह्यपदार्थेन सन्निकृष्यते। अयमेव ज्ञानलक्षणसन्निकर्षः। घटादि बाह्यपदार्थेन सम्बद्धं व्यवसायात्मकं ज्ञानमेवाऽलौकिकसन्निकर्षरूपेण बाह्यपदार्थान् मनसा सह सम्बन्धयति। तेन घटादि बाह्यविषयाऽपि व्यवसायज्ञानस्य विशेषणरूपेणानुव्यवसायस्य विषया भवन्तीति घटादीनां मानसप्रत्यक्षं सम्भवति।

**"अभाव प्रत्यक्षेऽपि ज्ञानलक्षणसन्निकर्षः स्वीकरणीयः।"**[1] 'भूतले घटो नास्ति' इत्यत्र भूतल वर्तिनो घटाभावस्य चाक्षुषं प्रत्यक्षं भवति। तत्र भूतलवर्तिनो घटाभावस्य चाक्षुष सहसंयुक्तविशेषणतारूपो लौकिकसन्निकर्षो भवति। भूतलेन सह चक्षुषः संयोगः चक्षुसंयुक्ते भूतले च घटाभावो विशेषणमिति घटाभावेन सह चक्षुषः संयुक्तविशेषतारूपो लौकिकसन्निकर्ष इत्यर्थः। वस्तुतस्तु अत्र भूतले अभावो विशेषणम्, अभावे च घटो विशेषणम्। अभावेन च सह घटस्य प्रतियोगिसम्बन्ध इति अभावाधिकरणे भूतले घटः स्थातुं न शक्नोति। अत एव घटेन सह चक्षुषो लौकिकसन्निकर्षो न सम्भवति। इन्द्रियासन्निकृष्टः पदार्थश्च प्रत्यक्षस्य विषयो भवितुं नार्हति। प्रकृते तु अभावप्रत्यक्षे प्रतियोगिनो भानं भवतीति चक्षुषा सह घटस्य सन्निकर्षः स्वीकरणीयः। अत एवात्र प्रतियोगिनः स्मरणात्मकं ज्ञानमेव चक्षुषा सह घटं सम्बन्धयतीति अत्र ज्ञानलक्षणसन्निकर्षः स्वीकरणीयः।

**"भ्रमज्ञानेऽपि ज्ञानलक्षणसन्निकर्षः स्वीकरणीयः।"**[2] ज्ञानलक्षणसन्निकर्षे अस्वीकृते सति रज्ज्वौ सर्पज्ञानरूपस्य, शुक्तौ रजतज्ञानरूपस्य चानुपपत्तिर्भवेत्। तथाहि रज्ज्वौ **'अयं सर्पः'** इति, शुक्तौ **'इदं रजतम्'** इति च यद् भ्रमज्ञानं तत्र सर्पत्व रजतत्वे प्रकाररूपेण भासेते। परन्तु रज्जुना शुक्त्या च सह चक्षुषः संयोगकाले प्रकाररूपयोः सर्पत्वरजतत्वयोः चक्षुषा सह लौकिकसन्निकर्षो न सम्भवतीति सर्पत्वरजतत्वयो र्भानं भवितुं

---

[1] ज्ञानलक्षणविचाररहस्यम्- पृ0 7
[2] न्या0कोष- पृ0 304

नार्हति। अत इदं स्वीकार्यम्- पूर्व यदा प्रत्यक्षेण सर्पस्य रजतस्य च प्रत्यक्षज्ञानं जातं, तदा आत्मनि कश्चन संस्कार उत्पन्नाऽसीत्। स च प्रत्यक्ष जनितः संस्कारः रज्जुना शुक्त्या च सह चक्षुषः सन्निकर्षकाले उद्‌बुद्धः सन् स्मृतिमुत्पादयति। तच्च स्मृतिज्ञानं सन्निकर्षरूपेण सर्वत्वं रजतत्वं च रज्जुसन्निकृष्टेन शुक्तिसन्निकृष्टेन च चक्षुषा सह सम्बन्ध्यति। इदमेव स्मृतिज्ञानं ज्ञानलक्षणसन्निकर्षः।

ननु सामान्यज्ञानमेव सामान्यलक्षणसन्निकर्षः इति मते सामान्यलक्षणसन्निकर्षो नाम ज्ञानरूपः। ज्ञानलक्षणसन्निकर्षोऽपि ज्ञान रूप एव। तथा च तात्विकदृष्ट्या उभयोर्न कश्चन भेदोऽस्ति, उभयोरपि ज्ञानरूपत्वात्। एवञ्च सन्निकर्षद्वयस्वीकारे न प्रयोजनमिति चेत्। मैवम्, एकतरे अपरस्य गतार्थत्वाभावात्। तथा च सामान्यलक्षणसन्निकर्षे सामान्यज्ञानविषयीभूतस्य सा सामान्यस्याऽऽश्रयभूतो यः पदार्थः, स एव अनुयोगी भवति। ज्ञानलक्षणसन्निकर्षे तु ज्ञानस्य विषयीभूतः पदार्थ एव अनुयोगी भवति। तदुक्तम्- **''विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः।''**[1] इति सुरभिचन्दनमित्यत्र यस्य सौरभादेः विषयीज्ञानम् तस्यैव सौरभादेः व्यापारः सन्निकर्षः ज्ञानलक्षणो बोधव्य इत्यर्थः। सामान्यलक्षणाप्रत्यासत्तिः तदाश्रयाणां = सामान्या-श्रयाणां धर्मिणां देशान्तरीयकालान्तरीयाणामपि ज्ञानं जनयति। तथा च घटज्ञानस्य सामान्यलक्षणसन्निकर्षत्वे घटरूप सामान्याश्रयाणां घटवद्‌भूतलादीनामलौकिक प्रत्यक्षं जायते। घटत्वज्ञानस्य सामान्यलक्षणसन्निकर्षत्वे घटत्वरूपसामान्यास्याऽऽश्रयाणां घटानामलौकिक प्रत्यक्षं जायते। ज्ञानलक्षणप्रत्यासत्तिस्तु यद्‌विषयकं ज्ञानमलौकिकप्रत्यक्षं जायते तस्य धर्मात्मकस्य पदार्थस्यैव ज्ञानं जनयति, न तु तदाश्रयस्य धर्मिणः। तथा च यस्य सौरभादेः अलौकिकं ज्ञानं जातम्, तस्य धर्मात्मक सौरभज्ञानस्यैव जनकः ज्ञानलक्षणसन्निकर्षः। न तु धर्मिणः चन्दनस्यापि। एवं यस्य सौरभादेर्ज्ञानं तस्यैव सौरभादेः सन्निकर्ष एव ज्ञानलक्षणः।

ननु सुरभिचन्दनमित्यादौ सौरभत्वादिना तज्ज्ञानादिना वा सामान्यलक्षणया प्रत्यासत्या सौरभांशे अलौकिकप्रत्यक्षं सम्भवति। तथाहि यथा किल निखिलगुणत्वेन अणुत्वेन तज्ज्ञानेन

---

[1] न्या०सि०मु०, प्र०खं०, का०सं०-65

वा सामान्यलक्षणया प्रत्यासत्या निखिलाणुगोचरा लौकिकमानसबोधः स्वीक्रियते भवति, तथा **'सुरभि चन्दनम्'** इत्यत्रापि मानसोपनीतेन सौरभत्वरूपेण तज्ज्ञानेन वा सामान्यलक्षणाया-प्रत्यासत्यैव सौरभस्यालौकिकं प्रत्यक्षं सम्भवति। तस्मात् ज्ञानलक्षणाप्रत्यासत्तिर्न स्वीकार्या इति चेत्। उच्यते- यद्यपि सामान्यलक्षणसन्निकर्षेणापि सौरभस्य भानं सम्भवति, तथा सौरभत्वस्य भानं ज्ञानलक्षणयैव, सौरभत्वांशे धर्मान्तरस्यागृहीततया सामान्यलक्षणसन्निकर्षेण सौरभत्व-प्रत्यक्षायोगात्। तथा च **'सुरभि चन्दमि'**त्यत्र सौरभांशे सौरभत्वस्य मानार्थमवश्यमेव ज्ञानलक्षणसन्निकर्षः स्वीकार्यः।

**योगज सन्निकर्षः-**

अलौकिक सन्निकर्षस्य तृतीयोभेदो योगज सन्निकर्षः। **"योगाज्जातो योगजः"** योगस्तु **'चित्तवृत्ति निरोधः'**। तथा च सूत्रम्- **'योगश्चित्तवृत्तिनिरोधः'**[1] इति। अनेन योगिनो भूतभाविदूरविप्रकृष्टसकलवस्तूनां प्रत्यक्षं कुर्वन्ति। न केवलं वैदिक दार्शनिका एव अपितु बौद्धादयोऽवैदिकसाम्प्रदायिकाः अपि यौगिकं सत्यं स्वीकुर्वन्ति। योगिनो हि यौगिकसामर्थ्य-बलेनेन्द्रियसन्निकर्षमन्तरेणापि साक्षात्कारिज्ञानं लभन्ते। योगिसिद्धेन जननेस्तत एव अविनाशिनी यौगिकीः शक्तिः प्राप्यते। एवं विधा योगिनोऽपि द्विविधाः-युक्तयुन्जानभेदात्। तथा चोक्तं-

> **योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः।**[2]
> **युक्तस्य सर्वदाभानं चिन्तासहकृतोपरः।।**[3]

योगाभ्यासजन्यः धर्मविशेषः वेदशास्त्रपुराणादि प्रतिपद्यमानः योगज इत्युच्यते। तत्र पूर्णयौगिक शक्तिसम्पन्नः पुरुषः येन सदा सर्वप्रकारकज्ञानं स्वत एव प्राप्यमानं भवति सः **युक्त** इत्युच्यते। आंशिकयौगिकसिद्धि सम्पन्नश्च **'युञ्जान'** इत्युच्यते। युञ्जानेन न सदा स्वत

---

[1] यो0सू0- 1/1/1
[2] न्या0सि0मु0, प्र0खं0, का0सं0-65
[3] न्या0सि0मु0, प्र0खं0, का0सं0-66

एव यौगिकं सामर्थ्यं लभ्यते, किन्तु तस्य कृते तेन चिन्तनादिकमपेक्ष्यते। अतश्च युक्तयुञ्जानभेदतो योगिनो द्वैविध्यात् योगजधर्मोपिद्विविधः। युक्तस्य-ईश्वरानुग्रह विशिष्टज्ञानप्रसादवतो योगिनः योगजधर्मः, ईश्वरप्रणिधानजन्यानुग्रह विशिष्टज्ञान-प्रसादात्मकधर्मः, तत्सहायेन मनसाऽन्तरकेन, आकाशपरमाण्वादयो ये निखिला पदार्थास्तेषां ज्ञानमलौकिकप्रत्यक्षात्मकं सर्वदेव मध्ये तिरोभावरहितमेव भवति। द्वितीयस्ययुञ्जानयोगिनस्तु ध्यानधारणाद्यात्मक संयमरूपश्चिन्ताविशेषः सहकारी-संयुक्तसहकृत पुण्यान्वितमनसा यद्विषयकसंयमस्ति विषयकमलौकिकसाक्षात्कारात्मकं ज्ञानं भवतीति भावः।[1]

अत्रार्थे श्रुतयः **'युञ्जते'** न उत **युञ्जते**[2] इति। **''न चक्षुषा गृह्यते नापि वाचा नान्यैदेवै-स्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः''**[3] इति। **''ते सर्वगं सर्वतः प्राप्यधीरा युक्तात्मनः सर्वमवाविशन्ति''**[4] इति। तथा च स्मृतयोऽपि-

**यत्समत्वं द्वयोरत्रजीवात्मपरमात्मनोः।**
**स नष्टसर्वसङ्कल्पः समाधिरभिधीयते॥ इति**

योगजप्रत्यमिदं वेदेष्वपि वर्णितम्। अत एव न्यायाभिमतज्ञानलक्षणसामान्ययो वेदान्तिभिरालोचितयोरपि योगजसन्निकर्षोऽनिर्विवादमभ्युपगतः। न केवलं वेदान्तादीनि वैदिक-दर्शनान्येव, परं जैन बौद्धादीनि नास्तिक दर्शनान्यपि एतमभ्युपगच्छन्ति।

एवं चेते त्रयः सन्निकर्षाः इन्द्रियार्थसन्निकर्षोऽपेक्ष्यते, इन्द्रियार्थसन्निकर्षजन्यत्वं प्रत्यक्षज्ञानस्य लौकिकत्वमलौकिक प्रत्यक्षे तु तदपेक्षयाभावादेतत्प्रत्यक्षत्रयस्यतत्कारणीभूत सन्निकर्षत्रयस्य चालौकिकत्वम्। तदित्थं षट् लौकिकाः त्रयश्चालौकिकः, नव सन्निकर्ष कविता न्यायनये।

---

[1] न्या0सि0मु0- किरणावली, पृ0 217
[2] श्वेता0- 2/4
[3] मुण्डकोपनिषद्, खण्ड-1, मन्त्र-8
[4] मु0- ख0-2, मं0-5

## ( ख ) सामान्यलक्षणायाः स्वरूपविवेचनम्

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं भवति। तच्च प्रत्यक्षं लौकिकाऽलौकिक भेदेन द्विविधम्। उभयविधस्यापि प्रत्यक्षस्य जनकता इन्द्रियविषयसन्निकर्षे एव भवति। तस्यसन्निकर्षस्य लौकिकाऽलौकिकभेदेन द्विविधत्वात्, तज्जन्यस्य प्रत्यक्षस्यापि लौकिका-लौकिकभेदेन द्वैविध्यं भवति। तत्र लौकिकसन्निकर्षाणां विवेचनं पूर्वमेव अत्र शोधप्रबन्धे कृतमस्ति। इदानीमलौकिकप्रत्यक्षजनकीभूतसन्निकर्षाणां विवेचनमत्र प्रस्तूयते।

स चालौकिकसन्निकर्षः सामान्यलक्षण, ज्ञानलक्षण, योगजभेदात् त्रिविधः। तत्र प्रथमं सामान्यलक्षणायाः स्वरूपमिदानीं परीक्ष्यते।

सामान्यं लक्षणं यस्याः प्रत्यासत्तेः स्वरूपं सा सामान्यलक्षणप्रत्यासत्ति। महानसे वह्निधूमयोः साह्यचर्यं ज्ञात्वा पूर्वं महानसीय वह्निना सः महानसीय धूमस्य साहचर्य बोधो भवति। तदनन्तरं धूमत्वेन सकल धूमेषु वह्नित्वेन सकल वह्निना साहचर्य ज्ञानं जायते। तत्र ज्ञाने सामान्यलक्षणप्रत्यासत्तिरेव कारणं भवति।

सामान्यलक्षणा नाम सन्निकर्षविशेषश्चक्षुरादिभिर्घटादीनां प्रत्यक्षजनने संयोगादिरिव व्यापारतया कारणीभूतः। नयनादिकं हि कलशादिभिः सह संयोगादिरूपसन्निकर्षमवाप्नु-वत्सम्मुखगतकलशादिकमध्यक्षयति, सामान्यलक्षणाभिधं सन्निकर्षमुपेत्य तु असम्मुखीनं कालान्तरीयदेशान्तरीयमपि कलशादिकमितिविशेषः। अत्र च प्राचीनास्तार्किकाश्चक्षुरादिसम्बद्ध चाक्षुषप्रकारतापन्नकलशत्वादिकं सन्निकर्षः, स च समवायादिना सकलकलशादिषु वर्त्तमानः सकलकलशभासक इति, नव्याश्च स्वप्रकारीभूतकलशत्वाद्याश्रयविषयतासंसर्गेण चक्षुरादि-सम्बद्धविशेष्यककलशत्वादिप्रकारक चाक्षुषादिकं, स्वविषयीभूतकलशत्वाद्याश्रयविषयता-सम्बन्धेन कलशत्वादिज्ञानमेव वा सन्निकर्षः, सोऽपि तथा सकलकलशगतस्तदीयभासक इति।

प्रत्यासत्तिर्नाम सन्निकर्षः- अलौकिकज्ञान व्यापारः। सामान्यं नाम जातिः- समानाकार-प्रतीतिविषयतावच्छेदकधर्म विशेषः घटत्व-पटत्वादिरूपः। तथा सामान्यमेव लक्षणं स्वरूपं

यस्याः प्रत्यासत्तेरलौकिकज्ञानव्यापारस्य स सामान्यलक्षणनामकोऽलौकिकः सन्निकर्षविशेषः। येन अतीतानागत वर्तमानानां सामान्यात्मकैकधर्मावच्छिन्नानां पदार्थानां बोधः सकृदेव जायते। यथा-

घटत्वेन एकघटविषयकज्ञाने प्रतिपन्ने तादृश घटत्वावच्छिन्नसकलधविषकोऽलौकिको बोधो समुत्पद्यते। स च घटत्वरूप सामान्यधर्मज्ञानपुरस्कारेण जायते। इयन्तावत् प्रक्रिया-चक्षुर्घटसंयोगानन्तरं घटस्य निर्विकल्पकज्ञानं, ततः घटत्वे गृहीते घटघटत्वसमवायग्रहणानन्तर घटत्वप्रकरकघटविशेष्यको **"घटत्वविशिष्टो घटः"**- इत्याकारक एकघटविषयक सविकल्पकमुत्पद्यते। तादृशसविकल्पकबोधानन्तरं घटत्वसामान्यं पुरस्कृत्यानुभूयमानेना-लौकिकसन्निकर्षे **"घटत्वावच्छिन्ना घटाः"** इत्यकारको सकलघटविषयको बोधविशेषो जायते। तत्र खलु वर्तमानातीतानागतसकलघटाः विषयतया संगृह्यन्ते। असौ बोधस्तावत्सामान्यलक्षणात्मकालौकिकसन्निकर्षेण सम्पद्यते। सा च सामान्यलक्षणप्रत्यासत्तिः- **"इन्द्रियसम्बन्धविशेषणतारूपा"**[1] चिन्तामणिकारेण प्रतिपादिता। विशेषणमेव विशेषणता स्वार्थे तल्प्रत्ययः। तथा चेन्द्रियसम्बद्धघटाविशेषणघटत्वसामान्यात्मिका। घटत्वसामान्य-ज्ञानात्मिका। तंत्र द्विविधः कार्यकारणभाव एवं जायते-

(1) **विषयनिष्ठप्रत्यासत्या कार्यकारणभावः-** अलोकिकमुख्यविशेष्यतासम्बन्धेन घटत्वा-वच्छिन्न चाक्षुषं प्रति चक्षुसम्बद्ध घटविशेष्यज्ञानप्रकारतापन्न घटत्वसामान्यं समवायेन कारणम्। अलौकिकमुख्यविशेष्यतासम्बन्धेन **'घटाः'** इत्याकारकोऽलौकिक बोधो घटे समुत्पद्यते। तत्रैव तादृश घटत्वसामान्यं समवायसम्बन्धेन प्रत्याय्यते, अतः कार्यकारणयोः सामानाधिकरण्यम्। एवमेव विशेषकार्यकारणभावः सर्वत्र विज्ञेयः।

सामान्यकार्यकारणभावस्तु- अलौकिकमुख्यविशेष्यतासम्बन्धेन तत्सामान्यधर्मावच्छिन्न तद्ग्रहं प्रति इन्द्रियसम्बद्धविशेष्यज्ञानप्रकारतापन्नसामान्यधर्मः समवायादिसम्बन्धेन कारणम्।

---

[1] जागदीश्यां सामान्यलक्षणा प्रकरणे

यज्ज्ञानमखण्डेन जात्यात्मकधर्मेण जायते तस्मिन् तादृशाऽखण्डधर्मस्य प्रत्यासत्तित्वम्। यथा- 'घटाः' इति बोधो घटत्वरूपाखण्डधर्मेण जायतेऽतस्तत्र स एव सामान्य धर्मः समवायेन कारणमुच्यते। सखण्डेऽपि अखण्डमेव प्रत्यासत्तिरिति गङ्गेश निर्देशाद्यत्र पुनः तद्घटादिरूप सखण्डधर्मः प्रत्यासत्तित्वेन प्रत्याय्यते तत्र तादृशसखण्डसामान्यस्यधर्मस्यघटत्वानन्तरं सकलघटवतां बोधस्यानुपपत्या हेतुना तत्रापि अखण्डघटत्वादिधर्मस्यैव प्रत्यासत्तित्वमवज्ञेयम्। कार्यकारणभावे कारणतावच्छेदकसम्बन्धः **''स्वाश्रयाश्रयत्वादिरूपो विज्ञेयः''**

**(2) आत्मनिष्ठप्रत्यासत्या-कार्यकारणभावः-** ''समवायसम्बन्धेन अलौकिकमुख्य-विशेष्यकघटत्वावच्छिन्नचाक्षुषं प्रतिसमवायसम्बन्धेन इन्द्रियसम्बद्धघटविशेष्यकज्ञानप्रकारतापन्न सामान्यघटत्व ज्ञानं कारणम्।'' तादृशसामान्यविषयं ज्ञानं समवायेनात्मनि जायते, तत्रैव सकलघटविषयकोऽलौकिको बोधोपि समुत्पद्यत इति कार्यकारणयोः सामानाधिकरण्यम्।

इत्थं सविकल्पकज्ञानानन्तरं सामान्यधर्मात्मकेन, सामान्यधर्मज्ञानात्मकेनालौकिकव्या-पारेण सामान्यलक्षणेन सकलघटविषयको बोधो सम्पद्यते। अनया सामान्यलक्षणयैव व्याप्तेः अनुमानाङ्गस्य सर्वोपसंहारत्वं प्रतिपद्यते। तत्तद्धर्मपुरस्कारेण एकत्र बह्निधूमयोः साहचर्ये गृहीते, सामान्यधर्मपुरस्कारेण सकलवह्निधूमयोः तेषां परस्परं व्याप्यव्यापकभावरूपं साहचर्यं गृह्यते, तेन चातीतानागतवर्त्तमानसकलविषयमनुमानं सम्पद्यते, इति सामान्यलक्षणप्रत्यासत्तेरस्ति।

बौद्धादिभि सामान्यं नाङ्गीक्रियतेऽपितु तद्भिन्नभिन्नत्वरूपापोहपुरस्कारेणैव ते सर्वस्य वस्तुनः प्रतीति विषयत्वं व्याचक्षते। सामान्यलक्षणा नाम सन्निकर्षविशेषः चक्षुरादिभिर्घटादीनां प्रत्यक्षोत्पत्तौ संयोगादिरिव व्यापारत्वेन कारणीभूतः। चक्षुरादयः पटादिभिः सः संयोगाद्यात्मकसन्निकर्षमवाप्यसम्मुखगत पटादि प्रत्यक्षं जनयति। तथैव सामान्यलक्षणा संज्ञकं सन्निकर्षं पटादिकं सम्मुखे अविद्यमानं कालान्तरीय देशान्तरीयमपि पटादि प्रत्यक्षं जनयति।

लौकिकसन्निकर्षेण वर्तमानकालीनघटादयः एव प्रत्यक्षविषयीभूताः भवन्ति। सामान्य-लक्षणात्मकालौकिकसन्निकर्षेणतु भूतकालीनाः भविष्यत्कालीनाः सर्वेपि घटादयः प्रत्यक्ष-

विषयीभूताः भवन्ति। इत्येतदेव लौकिकसन्निकर्षापेक्षयाऽलौकिकसामान्यलक्षणा-प्रत्यासत्तेः वैलक्षण्यम्।

## सामान्यलक्षणाभ्युपगमेयुक्तिप्रदर्शनम्-

यदि सामान्यलक्षणायाः सन्निकर्षत्वं न स्वीक्रियते तर्हि धूमोवह्निव्यभिचारि न वा इत्याकारक धूमधर्मिक व्यभिचार संशयः न स्यात्। यतोहीन्द्रियार्थसन्निकृष्टे प्रत्यक्षविषयीभूत व्यभिचाराभावस्य निश्चिततया तेन धूमे व्यभिचारस्यासत्वेन धूमः वह्न्यभाववदवृत्तिः इत्याकारक व्यभिचाराभावस्य निश्चयान्नहि व्यभिचार तदभावोभयप्रकारकः धूमविशेष्यकः संशयः कथमपि भवितुमर्हति। अन्येषाञ्च धर्मिभूतानां भाविभूतधूमानामनुपस्थितत्वात् प्रत्यक्षधूमे च व्यभिचाराभावस्य निश्चितत्वादनुकूलतर्कादिकं विना व्यभिचार संशयस्योपपत्तिः न स्यात्। अतः धूमोवह्निव्यभिचारि नवा इत्याकारक संशये सकलधूम भानार्थं सामान्यलक्षणयाः स्वीकारः आवश्यकः। तत्स्वीकारे च धूमत्वप्रकारकधूमत्वाश्रय सकलधूमप्रत्यक्षं प्रति चक्षुस्सन्निकृष्टधूमधर्मिक चाक्षुषप्रकारतापन्न धूमत्वरूपसामान्यलक्षणायाः सन्निकर्षात्मिकायाः सर्वेषु दृष्टेषु धूमेषु विद्यमानतया तथाविध धूमत्वरूपसामान्यलक्षणप्रत्यासत्या सकलधूमस्य-प्रत्यक्षसम्भवात्, धूमात्मक धर्मिपदेन सकलधूमस्य गृहीतत्वेन यत्किञ्चित्चक्षुस्सन्निकृष्टे धूमे व्यभिचाराभावनिश्चयेऽपि चक्षुरादि असन्निकृष्टे धूमे व्यभिचाराभावस्यानिश्चितत्वेन भवति समस्त धूमानां सामान्यलक्षणप्रत्यासत्या धूमपदेनोपस्थितिर्जायते। तत्र च व्यभिचाराभावस्यनिर्णीततया धूमोवह्निव्यभिचारि न वा इत्याकारक व्यभिचारसंशयः सम्भवत्येव। अतः धूमोवह्निव्यभिचारि न वा इति संशयोपपत्तये सामान्यलक्षणाऽवश्यमेवाभ्युपेयम्।

एवमेव धूमोवह्निव्याप्यः इत्याकारक व्याप्तिनिश्चयस्य सम्पत्तयेऽपि सामान्यलक्षण स्वीकर्तव्या। यदा सामान्यलक्षणप्रत्यासत्या सर्वेषां धूमानामलौकिकप्रत्यक्षं स्यात् एवं वह्नित्वेन सकलवह्निनां प्रत्यक्षं स्यात् तदैव धूमत्वावच्छिन्ने धूमे वह्निव्याप्यत्व निश्चयः कर्तुम् शक्यते।

एवं धूमत्वादिना धूमादिशाब्दविरहवतोऽपि वह्निव्याप्तिज्ञान धूमधर्मिक व्यभिचार संशयादेः अनुभूयमानतयाऽपूर्व धूमादिभानार्थं सामान्यलक्षणावश्यमभ्युपेया। इति। इत्थं क्रमेण लक्षणायास्वीकारे अनेकविधं बीजं बहुभिः तार्किकः प्रतिपादितमस्ति। तत्र केचन तार्किकाः महानीसीय धूम धूमध्वजयोरवलोकानानन्तरं सामान्यतः समस्त धूमाग्न्योव्याप्य-व्यापकभावनिश्चयोजायते, तादृश निश्चयानुरोधेन सामान्यलक्षणाऽवश्यमेव स्वीकरणीया।

अतएव सर्वतोपरि धूममवलोकमान मानवः वह्निं पर्वतेऽनुमिनोति। अन्यथा ग्रावगत धूमपावकयोः पूर्वमननुभूतत्वात्। तयोः व्याप्यव्यापकभावानवगाहनेन, तदनुमितिः दुरूपपादा-स्यात्। सामान्यलक्षणास्वीकारे च महानसीयधूमानलयोः अवलोकन समये एव निखिलधूमान-लावगमा पर्वतगत धूमानलयोः व्यापकभावोऽपि सहजत एव सुलभः इति धूमानलयोः नहि व्याप्यव्यापकभावश्चानुपपत्तिः भवितुमर्हति।

मणिकारास्तु महानसीय धूमावलोकनानन्तरं क्वचन जायमान अनलानैकान्तिकभाव-कोटिक धूमधर्मिक विचिकित्सालोकानां सिद्धा नहि सामान्यलक्षणां बिना उपपत्तिमुपेति-मर्हति। ज्ञानविषयीभूतधूमे दहनसम्बन्धस्यावगमाददृश्यमानधूमस्य च ज्ञानाभावादुभयत्रापि संशयस्य असंभावितत्वात् तादृश संशय सम्पत्तये सामान्यलक्षणायाः स्वीकारः आवश्यकः इति।

केचन तार्किकाः घटादि सामान्याभाव मानार्थं सामान्यलक्षणायाः स्वीकारः आवश्यकः। तेषामयमाशयः प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं सामान्याभावप्रत्यक्षे कारणम्। तत्र यदि सामान्यलक्षणा न स्वीक्रियते तदा घटोनास्तीत्याकारक घटसामान्याभाव प्रत्यक्षे कारणम्। प्रतियोगितावच्छेदकविशिष्टस्य यत्किञ्चिद् घटस्यलौकिकसन्निकर्षेण भानसम्भवेपि सामान्याभावप्रत्यक्ष कारणीभूतस्य प्रतियोगितावच्छेदकविशिष्टः **''प्रतियो-गितावच्छेदकविशिष्ट यावत् प्रतियोगि ज्ञानस्य कारणतया।''** यावत् प्रतियोगिज्ञाना-सम्भवात्सामान्यलक्षणायाः सामान्याभाव भानार्थस्वीकाराऽऽवश्यकः। तत्स्वीकारे च

घटत्वात्मकसामान्यलक्षणप्रत्यासत्या सकलानां भूतकालिकानागतकालिकवर्तमानकालिकानां घटानां प्रत्यक्षं जायते। अतः घटसामान्याभाव प्रत्यक्षकारणीभूत घटाभावीय प्रतियोगिता-वच्छेदकविशिष्ट सकलघटज्ञानस्य घटसामान्याभावप्रत्यक्ष कारणस्य विद्यमानतया नहि घटसा-मान्याभाव प्रत्यक्षानुपपत्तिः इति।

इदमत्रावधेयं भूतले घटोनास्तीत्यादिप्रत्यक्षं सकलघटानां प्रतियोगित्वमवगाहते। यदि यत्किञ्चिद् घटमात्रप्रतियोगित्वमेव घटोनास्तीति प्रत्ययेनावगाह्यते तदा घटवत्यपि यत्किञ्चिद् घटान्तरस्यविद्यमानतया घटवत्यपि देशे घटोनास्तीत्याकारक प्रत्ययापत्ति स्यात्। अतः घटादि सामान्याभावस्य घटत्वावच्छिन्न यावत् घटप्रतियोगिकतया घटाभावभानार्थं प्रतियोगिता-वच्छेदकविशिष्टस्य यावद्घटस्य ज्ञानमावश्यकम्। घटत्वविशिष्टस्य त्रितयकाले विद्यमानस्य यावत् घटस्यभानं सामान्यलक्षणामन्तरं न सम्भवति। अतः सामान्यलक्षणावश्यमेव स्वीकर्तव्याः।

केचन तार्किकाः तमसः साक्षात्कारार्थ सामान्यलक्षणाऽवश्यमभ्युपेया। तेषामयमाशयः यावत्तेजोऽभावरूपं यत्तमः तस्य साक्षात्कारे यावत्तेजोज्ञानं कारणम्। यतः तेजस्सामान्या-भावप्रत्यक्षे तेजस्वत्वरूपप्रतियोगितावच्छेदकविशिष्टस्य यावत् तेजसः ज्ञानं कारणं भवति। यत्किञ्चित्तेजसः चक्षुरादिना ज्ञानसम्भवेपि सामान्यलक्षणामन्तरा प्रतियोगितावच्छेदक-विशिष्टस्य यावत् तेजसः ज्ञानस्य ज्ञायमानत्वेन तेजोभाव समदुायात्मकस्य तिमिरस्य नहि प्रत्यक्षत्वानुपपत्तिः। अतः अलौकिकसन्निकर्षभूतायाः सामान्यलक्षणायाः प्रत्यासत्तित्वमवश्य-मेवाभ्युपेयम्। एवं घटोभविष्यतीत्याकारकः प्रागभावस्यज्ञानं भाविघटज्ञानमन्तरा न हि भवितुमर्हति। भाविघटेन साकं संयोगादिरूपस्य कस्यापि लौकिकसन्निकर्षस्यासम्भवेन प्रागभावभानार्थमलौकिकसन्निकर्षात्मिका सामान्यलक्षणप्रत्यासत्तिः अवश्यमभ्युपेया।

## ( ग ) दीधितिकारमते सामान्यलक्षणानिरासविचारः

अलौकिकसन्निकर्षश्च सामान्य-ज्ञान-योगजसन्निकर्षभेदात्त्रिविधः। तत्र सामान्यसन्निकर्षः सामान्यलक्षणाशब्देन व्यपदिश्यते। ज्ञानलक्षणसन्निकर्षो ज्ञानलक्षणाशब्देन, योगजसन्निकर्षो योगजप्रत्यासत्तिशब्देन व्यपदिश्यते। तेषु आद्यः सन्निकर्षो निखिलवह्निधूमोपसंहारेण व्याप्तिग्रहणार्थं निखिलगवाद्युपसंहारेण गवादिपदशक्तिग्रहार्थं चाभ्युपेयते।

एवं द्वितीयः सन्निकर्षः शुक्त्यादौ रजतत्वादिभ्रमोपपादनार्थमङ्गीक्रियते। तृतीयः सन्निकर्षश्च देशकालविप्रकृष्टानां सर्वपदार्थानां योगिनां प्रत्यक्षोपपादनार्थमभ्युपेयते।

दीधितिकारोऽलौकिकसन्निकर्षविषये[1] विप्रतिपन्नस्तन्मते सामान्यलक्षणाप्रत्यसत्तिर्निष्प्रयोजना। न च तदनभ्युपगमे महानसादौ वह्निधूमयोः सहचारदर्शने चक्षुःसन्निकृष्टधूमे एव वह्नेर्व्याप्तेरनुभवसम्भवेन वह्निव्याप्तिमत्तया पूर्वमननुभूतस्य पर्वतीयधूमस्य दर्शनेऽपि पर्वतो वह्निव्याप्यधूमवानिति परामर्शानुपपत्त्या पर्वते वह्नेरनुमितिर्न स्यात्।

सामान्यलक्षणायाः प्रत्यासत्तेरभ्युपगमे च नैष दोषो महानसादौ वह्नित्वधूमत्वाभ्यां यत्किंचिद्वह्निधूमयोः प्रत्यक्षानन्तरं वह्नित्वधूमत्वरूपसामान्यलक्षणसन्निकर्षमहिम्ना सर्वेषां वह्नीनां धूमानां चालौकिकप्रत्यक्षसम्भवेन धूमविशेषे वह्निविशेषस्य व्याप्तिग्रहणवेलायां धूमसामान्ये वह्निसामान्यव्याप्तेरपि ग्रहीतुं शक्यतया पर्वतीये धूमे दृष्टे पूर्वमनुभूतायास्तन्निष्ठव्याप्तेः स्मरणसम्भवेन पर्वतो वह्निव्याप्यधूमवानितिपरामर्शस्य सूपपन्नतया पर्वते धूमेन वह्न्यनुमितेरुत्पत्तौ बाधकाभावात्।

एवं सामान्यलक्षणसन्निकर्षानभ्युपगमे व्यवहाराद् गवादिपदस्यानयनादिलक्षणव्यवहाराङ्गभूतायामेव गवादिव्यक्तौ गवादिपदस्य शक्तिग्रहणेन व्यवहाराङ्गतयानुपलब्धासु गवादिव्यक्तिषु गवादिपदस्य शक्तेरग्रहणेन गवादिव्यक्तिविशेषमात्रे गृहीतगोपदशक्तिकस्य पुंसो गवादिव्यक्त्य-

---

[1] जागदीश्यां सामान्यलक्षणाप्रकरणे, पृ०सं० 146-148

न्तरतात्पर्येण प्रयुक्ताद् गवादिपदाद् गवादिव्यक्त्यन्तरस्य बोधो न स्यात् तत्प्रकारकशाब्दबोधे वृत्तिज्ञानाधीनतद्विषयकोपस्थितेः कारणत्वात्।

उक्तसन्निकर्षाभ्युपगमे च व्यवहाराङ्गभूतायां प्रत्यक्षगवादिव्यक्तौ गवादिपदस्य संकेतग्रहे जाते गोत्वादिसामान्यलक्षणप्रत्यासत्त्या निखिलगवादिव्यक्तीनां गृहीतत्वेन सर्वगोसाधारण्येन गोपदशक्तेर्ग्रहणस्य सुघटतया नोक्तानुपपत्तिरिति वाच्यमुक्तसन्निकर्षानभ्युपगमेऽपि साध्यव्याप्तितया पूर्वाननुभूतहेतुव्यक्त्या साध्यानुमितेः, एवं गवादिपदशक्तिमत्तया पूर्वाननुभूतगवादिव्यक्तेः शाब्दबोधस्य च प्रकारान्तरेणोपपत्तिसम्भवात्। तथा हि- धूमत्वेन महानसीयधूमविषयको यो वह्निव्याप्तेरनुभवस्तज्जनितसंस्कारस्य पर्वतीयधूमदर्शनादुद्बोधे सति महानसीयधूमविषयकमेव धूमो वह्निव्याप्य इत्याकारकस्मरणं जायते किन्तु ततः पर्वते वह्निव्याप्यत्वेन पर्वतीयधूमग्राहकोऽपि पर्वतो वह्निव्याप्यधूमवानितिपरामर्श उत्पत्तुमर्हति, तद्धर्मविशिष्टवैशिष्ट्यावगाहिबुद्धौ तद्धर्मप्रकारकज्ञानस्य तद्धर्मधर्मिणोर्निवेशमनन्तर्भाव्यैव कारणत्वाभ्युपगमेन वह्निव्याप्तिप्रकारकमहानसीयधूमविषयकज्ञानेन वह्निव्याप्यत्वेन पर्वतीयधूमवैशिष्ट्यावगाहिनोऽपि परामर्शस्य सम्भवात्।

एवं व्यवहाराद् गवादिपदस्य गवादिव्यक्तिमात्रे शक्तिग्रहेणापि गवादिपदादगृहीतगोपदशक्तिकाया अपि गवादिव्यक्तेः शाब्दबोधो भवितुमर्हति शक्तिज्ञानोपस्थितिशाब्दबोधानां समानप्रकारकत्वेनैव कार्यकारणभावस्वीकारेण गोत्वप्रकारकयत्किंचिद्गोव्यक्तिविषयकोपस्थितितो योग्यताबलाद् गवादिव्यक्त्यन्तरस्यापि शाब्दबोधे भानसम्भवात्।

न च महानसादौ वह्निधूमयोः सहचारदर्शनानन्तरं धूमो वह्निव्यभिचारी न वेत्येवंविधो धूमे वह्निव्यभिचारसंशयः सर्वानुभवसिद्धः, स सामान्यलक्षणप्रत्यासत्त्यभावेऽनुपपन्नो यतो हि चक्षुःसंयुक्ते धूमे वह्निव्यभिचाराभावः प्रत्यक्षसिद्धोऽस्तत्र वह्निव्यभिचारसंशयो नोदेतुमर्हति, यश्च धूमो देशतः कालतो वा विप्रकृष्टस्तत्र वह्निव्यवभिचारस्य तदभावस्य वाऽनिर्णयेऽपि न तत्रोक्तसंशयः समुत्पत्तुं शक्यस्तस्याज्ञातत्वात्, संशय प्रति च धर्मिज्ञानस्य कारणत्वात्।

उक्तसन्निकर्षाभ्युपगमे तु नायं दोषो महानसीये धूमे वह्निसहचारग्रहणदशायां धूमत्वसामान्यलक्षणप्रत्यासत्त्या गृहीते विप्रकृष्टे धूमे संशयविरोधिनो निर्णयस्याभावेनोक्तसंशय-सम्भवादिति वाच्यं वह्निव्यभिचाराभाववत्तयाऽनिर्णीतायां महानसीयधूमव्यक्तावेव वह्निव्यभिचार-संशयसम्भवात्। अयम्भावः-

महानसीयधूमे वह्निसहचारदर्शनदशायां यो वह्निव्यभिचाराभावनिश्चयो जायते स यदि धूमत्वावच्छेदेन स्यात्तर्हि सामान्यलक्षणप्रत्यासत्त्या गृहीते विप्रकृष्टधूमेऽपि वह्निव्यभिचारसंशयो न भवितुमर्हति तद्धर्मावच्छिन्नधर्मिकसंशयमात्र प्रति तद्धर्मावच्छेदेन एकैककोटिनिर्णयस्य प्रतिबन्धकत्वात्। यदि च वह्निव्यभिचाराभावनिर्णयो महानसीयधूमव्यक्तौ धूमत्वसामाना-धिकरण्येनैव जायते तदा तद्धूमव्यक्तावपि धूमत्वसामानाधिकरण्येन वह्निव्यभिचारावगाहिनो धूमत्वावच्छेदेन च तदभावावगाहिनः संशयस्योत्पत्तिर्भवितुमर्हति तद्धर्मसामानाधिकरण्येन वह्निव्यभिचाराभावनिश्चयस्य तद्धर्मसामानाधिकरण्येन वह्निव्यभिचारावगाहिसंशयं प्रत्यविरोधि-त्वात्।

न च तद्वत्ताबुद्धिं प्रति लाघवात् तदभाववत्तानिश्चयः समानविशेष्यताप्रत्यासत्या प्रतिबन्धक इत्येव स्वीकार्यं न तु तद्धर्मावच्छेदेन तद्धर्मधर्मितावच्छेदककतदभावनिश्चयस्य सामानाधिकरण्यप्रत्यासत्त्या प्रतिबन्धकत्वं मान्यं प्रतिबध्यप्रतिबन्धकभावावच्छेदकगर्भे धर्मिता-वच्छेदकस्य निवेशेन धर्मितावच्छेदकभेदेन प्रतिबध्यप्रतिबन्धकभावे नानात्वापत्त्या गौरवात्, अतो वह्निव्यभिचाराभाववत्तया गृहीते धूमे वह्निव्यभिचारसंशयो न भवितुमर्हतीति वाच्यम्। उक्तरीत्या प्रतिबन्धकत्वकल्पने पार्थिवं तैजस जलीयं च रूपं वायुत्वाभावव्याप्यमित्येवं निश्चये सति रूपं वायुत्वाभावव्याप्यं न वेति रूपविशेष्यकसंशयानुपपत्तिप्रसङ्गात्, रूपमात्रे वायुत्वाभावव्याप्त्यभावविरोधिन्या वायुत्वाभावव्याप्तेनिर्णयात्, धर्मितावच्छेदकं निवेश्यैव प्रतिबध्यप्रतिबन्धकभावकल्पनाया औचित्याच्च।

न च पार्थिवादिरूपभिन्नं रूपं न वेत्याकारकसम्भावनायामेव रूपे वायुत्वाभावव्याप्यत्वसन्देहेन सम्भावनाविरहविशिष्टसमानधर्मिकनिश्चयस्य प्रतिबन्धकत्वे दोषाभाव इति वाच्यं। तथा सति प्रत्यक्षधूमे वह्निव्याप्तिनिश्चयस्य सत्त्वेऽपि प्रत्यक्षधूमातिरिक्तो धूमो न वेति सम्भावनायां धूमो वह्निव्यभिचारी न वेति संशयस्य प्रत्यक्षधूम एव सम्भवेन उक्तसंशया रोधेन सामान्यलक्षणप्रत्यासत्तेरभ्युपगमस्य नैरर्थक्यप्रसङ्गात्।

न च घटत्वादिरूपेणोपस्थितेषु प्रसिद्धधूमभिन्नेषु धूमत्वाभावस्य निश्चितत्वेन तेष्वतिरिक्त-धूमत्व-सम्भावनाया दुर्घटतया प्रसिद्धधूमेऽपि धूमत्वस्य निश्चितत्वेन तत्रापितादृश-सम्भावनाया असम्भवतया सम्भावनाया धर्मिणोऽप्रसिद्धधूमस्योपस्थित्यर्थमेव सामान्यलक्षण-प्रत्यासत्तिरावश्यकीति वाच्यम्। उक्तरीत्या समानधर्मिकज्ञानस्य विरोधित्वे सम्भावनाया एवानुपपत्तेः।

अयम्भावः- प्रसिद्धेषु रूपेषु पार्थिवादिभिन्नत्वाभावदर्शनेन तेषु पार्थिवादिभिन्नत्व-सम्भावना न भवितुमर्हति, एवं पार्थिवादिरूपातिरिक्तेऽपि पार्थिवादिभिन्नत्वसम्भावना न भवितुमर्हति पार्थिवादिरूपातिरिक्तेषु सर्वेषु रूपभेदस्य रूपत्वाभावस्य च निश्चयात्। रूपान्यत्र रूपं द्रव्यादयो रसादयश्च न रूपं प्रसिद्धरूपभिन्नं यद् रूपभिन्नं द्रव्यं रसादिर्वा तत्सर्वं न रूपमित्याकारकविशेषदर्शनस्य सर्वसम्मतत्वात्, अतोऽतिरिक्तसम्भावनाया उक्तरीत्या उत्तेजक-त्वासम्भवेन प्रत्यक्षधूमे वह्निव्याप्यत्वनिश्चयदशायां सर्वजनानुभवसिद्धस्योक्तसंशयस्यानुरोधेन समानधर्मिकनिश्चयस्य प्रतिबन्धकतायाः परित्याज्यता वह्निव्याप्यत्वेन गृहीते धूमे धूमत्वावच्छेदेन वह्निव्याप्तेरग्रहदशायां तत्रैव धूमे वह्निव्यभिचारसंशयस्य सम्भवेन तदनुरोधेन सामान्यलक्षणप्रत्यासत्तेरभ्युपगमोऽनावश्यक एव।

## दीधितिकारमतस्यालोचनम्

दीधितिकृतः कथनमिदमालोच्यमानं नोचितं प्रतिभाति। यतः सामान्यलक्षणाया अनभ्युपगमे धूमान्तरस्यात्यन्तमज्ञानेन एतद्धूमो वह्निव्याप्य इत्याकारकनिश्चयोत्तरं धूमो वह्नि-

व्याप्यो न वेति संशयो न स्यात्, संशयं प्रति धर्मिज्ञानस्य कारणतया अज्ञातस्य धूमस्य संशये धर्मिविधया भानासम्भवात्। एतद्धूमे च वह्निव्याप्तेर्निर्णयसत्त्वेन तस्याप्युक्तसंशये धर्मिविधया भानासम्भवात्।

न च धूमत्वावच्छेदेन एतद्धूमे वह्निव्यापतेरनिर्णयेन एतद्धूमस्य उक्तसंशये धर्मिविधया भानं निराबाधं समानधर्मिकज्ञानस्य विरोधिताया निराकरणादिति वाच्यं। धूमान्तर-स्यात्यन्तमज्ञाने धूमत्वस्य एतद्ध्सूम एवावगाहनेन एतत्त्वे व्याप्यतावच्छेदकत्वानवगाहनाद-व्यावर्त्तकधर्मे व्याप्यतावच्छेदकत्वग्रहासम्भवाद्, व्यावर्त्तकत्वेनाज्ञातधर्मस्य व्याप्यांशे उपलक्षणतयैव भानोपगमात्।

न च व्यावर्त्तकत्वेनाज्ञातधर्मेऽपि व्याप्यतावच्छेदकत्वोपगमे दोषाभावेन एतत्त्व-विशिष्टधूमत्वावच्छेदेनैव वह्निव्याप्तेर्निश्चयेनोक्तसंशयः सुघट एव प्रतिबन्धकीभूतस्य धूमत्वा-वच्देदेन वह्निव्याप्तिनिश्चयस्याभावादिति वाच्यं व्यावर्त्तकत्वेनाज्ञातधर्मस्यापि व्याप्यतावच्छे-दकतया भानवादिमते व्यावर्त्तकत्वेनाज्ञातधर्मविशिष्टधर्मावच्छेदेन तद्वत्तानिश्चयस्य शुद्धधर्मावच्छेदेन तदभाववत्ताबुद्धिं प्रत्यपि प्रतिबन्धकत्वाद्, अन्यथा सर्वं वस्तु प्रमेयमिति-ज्ञानवतः पुंसः प्रमेयधूमो वह्निव्याप्य इतिनिश्चयोत्तरं धूमो वह्निव्याप्यो न वेतिसंशयोत्पत्ति-प्रसङ्गात्, तथा च एतद्धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्यापि धूमत्वेन एतद्धूमधर्मिकवह्नि-व्यभिचारसंशयं प्रति प्रतिबन्धकतया एतद्धूमो वह्निव्याप्युतिनिश्चयानन्तर धूमधर्मिकवह्नि-व्यभिचारसंशयानुत्पत्तिदुर्निवारेति उक्तनिश्चयदशायाम् उक्तसंशयस्य धूमान्तरधर्मिकतया उपपत्तये धूमान्तरज्ञानार्थं सामान्यलक्षणायाऽभ्युपगमो नितान्तमावश्यक एव।

न च प्रमेयधूमो वह्निव्याप्य इतिनिश्चयो परं शुद्धधूमत्वावच्छेदेनापि वह्निव्याप्तिनिश्चयो-त्पत्तिरभ्युपगम्यते संशयानुत्पादकरूपफलबलात्, एतद्धूमो वह्निव्याप्य इति निश्चयोत्तरं च संशय उत्पद्यत इति तत्रोत्तरकालं धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयो नोत्पद्यत इति तत एव

सामञ्जस्यमिति वाच्यं प्रमेयत्वस्य व्यावर्त्तकत्वज्ञानवतोऽपि पुंस उत्तरक्षणं धूमत्वावच्छेदेन व्याप्तिनिश्चयोत्पादापत्तेः।

किं च प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्य धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयजनकत्वकल्पने प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्य तदव्यवहितपूर्ववर्तित्वमनन्यथासिद्धत्वं चेति द्वयं कल्पनीयं तदपेक्षया प्रमेयधूमत्वावच्छेदेन वह्निव्याप्ति निश्चय विरहस्य सिद्धनियतपूर्ववृत्तिताकस्य प्रतिबन्धकाभावविधयाऽनन्यथासिद्धत्वमात्रं कल्पनीयमिति लाघवात् प्रमेयधूमत्वावच्छदेन वह्निव्याप्तिनिश्चयस्यैव धूमत्वावच्छेदेन तत्संशयकारणीभूताभावप्रतियोगित्वात्मकप्रतिबन्धकत्वं सिद्ध्यति।

न च प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयाभावस्य तत्संशयाव्यवहितपूर्ववर्त्तित्वमसिद्धमिति वाच्यं निश्चयसामग्र्या अपि संशयविरोधितया धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयकारणीभूतप्रमेयधूमत्वावच्छिन्नधर्मिकवह्निव्याप्तिनिश्चयात्मकतत्सामग्रीसद्भावे संशयासम्भवादन्यथा समानविषयकसंशयनिश्चययोर्युगपदापत्तः, एवं च तदभावस्य व्यवहितपूर्ववर्त्तित्वं सिद्धमेव। वस्तुतस्तत्रानन्ययासिद्धत्वमपि सिद्धमेव। धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्येव तत्सामग्र्या अपि संशयप्रतिबन्धकताया उक्ततया तदभावस्य संशयकारणत्वात्। एवं स्थिते सति मध्ये किमेतेनान्तर्गडुना धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयेन तदुत्पत्तिकल्पनेन च।

एतेन व्यावर्त्तकत्वज्ञानविरहविशिष्टप्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्यैव शुद्धधूमत्त्वावच्छेदेन वह्निव्याप्तिनिश्चयकारणत्वमितिव्यावर्त्तकत्वज्ञानकाले प्रमेयधूमो वह्निव्याप्य इति निश्चयोत्तरं न धूमत्वावच्छेदेन तन्निश्चयोत्पत्तिर्न वा तत्र संशयानुपपत्तिरिति प्रागुक्तदोषवारणेऽपि न निस्तारः, व्यावर्त्तकत्वज्ञानविरहविशिष्टप्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयाभावस्य क्लृप्तकारणताकतया तत एवोपपत्तेर्मध्ये निश्चयान्तरोत्पादकल्पनावैफल्यात्।

इत्थमेव चायमेव धूमो नान्य इतिनिश्चयवदेतद्धूमो वह्निव्याप्य इतिनिश्चयोत्तरं न धूमो वह्निव्यभिचारी न वेति संशयः। एवं चात्र व्यावर्त्तकत्वेनाज्ञातैतत्त्वविशिष्टधूमत्वावच्छिन्ने

व्याप्तिनिश्चयस्य शुद्धधूमत्वावच्छिन्ने व्याप्तिनिश्चयोत्पादकतायास्त्वदुक्तरीत्यापि उपगन्तव्यतया प्रागुक्तस्थलेऽपि तादृशनिश्चयोत्पत्तिर्दुवरैवेति कथं तत्र संशयोपपादनसम्भवः।

न च व्यावर्त्तकत्वेनाज्ञातैतत्त्वादिविशिष्टधूमत्वावच्छिन्ने व्याप्तिनिश्चयस्य शुद्धधूमत्वावच्छिन्ने व्याप्तिनिश्चयहेतुत्वं नोच्यते किन्तु तत्तद्व्यक्तित्वेनैवेति यत्र संशयानुभवस्तत्र तदकल्पनान्न दोष इति वाच्यं तथा सति अनन्तकार्यकारणभावप्रसङ्गेन महागौरवात्। अत एव तत्रानियतकारणान्तरस्वीकारस्यापि निरासः, अवश्यक्लृप्तनियतपूर्ववर्त्तिनस्तस्यैव कारणत्वसिद्धेः।

अथ व्यावर्त्तकत्वेनागृहीतधर्मस्योपलक्षणतया भानमिति नोपगम्यते न वा तादृशधर्मविशिष्टधर्मावच्छेदेन तद्वत्तानिश्चयस्य शुद्धधर्मावच्छेदेन तदभाववत्ताज्ञानविरोधित्वमिति ज्ञानान्तरस्य तत्रोत्पत्तिरिति वा, किन्तु व्यापकत्वेन गृहीतधर्मस्योपलक्षणतया भानादिकमेव। सर्वं वस्तु प्रमेयमिति ज्ञानवतो वस्तुत्वव्यापकतायाः प्रमेयत्वेऽवगाहनात् पश्चाद् धूमत्वव्यापकत्वमपि तत्रावगम्येतैवेति प्रमेयधूमो वह्निव्याप्य इति ज्ञाने प्रमेयत्वस्योपलक्षणतया भानं न तु एतद्धूमो वह्निव्याप्य इति निश्चये एतत्त्वस्य एतत्त्वे धूमत्वव्यापकताया अग्रहणात्, एष एव धूमो नान्य इत्येवमेतत्त्वे धूमत्वव्यापकतानिश्चयसत्त्वे च संशयोऽसिद्ध एवेति चेन्नायं धूम इति प्रत्यक्षानन्तरमेतत्त्वे धूमत्वव्यापकत्वग्रहस्यैव दुर्वारत्वात्। व्यभिचाराग्रहसहचारग्रहयोरेव व्याप्तिग्राहकत्वात्। अत एवैतद्रूपैतद्रसयोरेकत्र दर्शने तयोर्व्याप्यव्यापकभावग्रहाद् भूयोदर्शनस्य व्याप्तिग्राहकत्वानियमः।

न च सामान्यलक्षणामङ्गीकुर्वतां मतेऽपि धूमत्वैतत्त्वयोर्व्याप्यव्यापकभावग्रहः स्यादिति वाच्यं धूमत्वेन निखिलधूमोपस्थितो धूमान्तरे एतत्त्वाभावज्ञानादेव व्याप्ति निश्चयासम्भवात् तत्रैव धूमे व्यभिचारग्रहात्, धूमान्तरे एतत्त्वाभावज्ञानानुत्पादे तु इष्टमेव व्याप्यव्यापकभावग्रहः, अत एव क्वचित्संशयः क्वचिन्न संशय इत्यपि नियम उपपन्नः। सामान्यलक्षणामनङ्गीकुर्वतां

धूमत्ववतो धूमान्तरस्यानुपस्थित्या तत्रैतत्त्वाभावग्रहविरहेणैतत्त्वे धूमत्वव्यापकताया ज्ञानाद् एतद्धूमो वह्निव्याप्य इतिज्ञाने एतत्त्वस्य विशेषणतया भानं दुःसम्पादमेव।

नन्वतिरिक्तेषु वस्तुषु धूमत्वसम्भावनया नैतत्त्वे धूमत्वव्यापकत्वज्ञानमनङ्गीकुर्वतामपि सामान्यलक्षणां व्यभिचाराग्रहसहचारग्रहयोरिव सम्भावनाविरहस्यापि व्याप्तिग्रहहेतुत्वात्, अतिरिक्तेषु धूमत्वसम्भावनया व्यभिचारसंशयसम्भवाद्वा धूमत्वेन सम्भाविते एतत्त्वाभावग्रहादिति चेन्न ज्ञातेष्वतिरिक्तेषु विशेषदर्शनेनैव सम्भावनायां असम्भवात्। न चाज्ञातेष्वेव धूमत्वं सम्भावनीयमिति वाच्यं तथा सति अज्ञातज्ञानायैव सामान्यलक्षणास्वीकारापत्तः।

एतेन धूमत्वं वह्निव्यभिचारिवृत्ति न वा धूमत्वं तत्तद्धूमभिन्नवृत्ति न वेत्यादिसम्भावनानामुत्तेजकत्वं वदन्तोऽपि परास्तास्तत्तद्धूमभिन्नत्वेन ज्ञातेषु धूमत्वस्य वृत्तित्वाभावनिश्चयेन सम्भावनाऽयोगात्। अज्ञातेषु चाज्ञानादेव वृत्तित्वसम्भावनाऽसम्भवात्।

एवं धूमत्वत्वेन धूमत्वानुपस्थितिकालेऽपि तादृशसंशयस्यानुभविकतया तत्रैव संशयोपपादनं दुःशकं स्यात् निर्धर्मितावच्छेदककसम्भावनाविरहात्, धर्मिज्ञानस्य संशयाहेतुत्वेऽपि धर्मितावच्छेदकप्रकारकज्ञानस्य तद्धेतुताया आवश्यकत्वात्, निर्धर्मितावच्छेदककसम्भावनायाः कथंचिदभ्युपगमेऽपि तस्योत्तेजकत्वादिकमत्यन्तमसम्भावितमेव।

न च तत्तद्धूमस्यैव तादात्म्येन तत्तद्धूमान्यवृत्तित्वसम्भावना विवक्षितेति वाच्यं तत्तद्धूमान्यत्वेन ज्ञातेषु घटादिषु तादात्म्येन धूमाभावनिश्चयादज्ञातस्य चाज्ञानादेव सम्भावनाया असम्भवात्।

ननु तद्रूपतद्रसयोरेकाधिकरणे दर्शनेऽपि कदाचिद् व्यभिचारसंशयो दृश्यते न हि तत्र तद्रूपस्य पदार्थान्तरोपस्थापकसामान्यत्वमेकस्मिन्नेव वस्तुनि तत्सत्त्वाद् येन व्यभिचारसंशयो वक्तुं शक्यते। एवं चादृष्टविशेषादेव तत्र व्याप्तिग्रहप्रतिबन्धकत्वं वक्तव्यम् एवं सति एतत्त्वधूमत्वयोरपि व्याप्तिग्रहप्रतिबन्धकादृष्टविशेषकल्पनेनैवोपपत्तिरिति चेन्न तद्रूपतद्रसस्थलेऽपि सामान्यान्तरेणैव वस्त्वन्तरोपस्थितिसम्भवेन तत्रैव विशेषादर्शनेन तद्रूपाभावदिसंशयेन

व्यभिचारसंशयसम्भवात्। वस्त्वन्तरानुपस्थितिकाले व्याप्तिग्रहस्येष्टत्वात्। न चैवं वस्त्वन्तरोपस्थितिकाले कदाचिदपि तद्रूपतद्रसयोर्व्याप्तिग्रहो न स्यात्तत्र तद्रूपाभावादिसंशयादिति वाच्यं तद्रूपतद्रसयोः प्रत्यक्षेणापि व्यापकत्वग्रहसम्भवात्।

ननु प्रत्यक्षं प्रति तत्तत्सन्निकर्षत्वेन हेतुतया एतत्त्वधूमत्वयोर्व्यापकत्वग्राहकसन्निकर्षाऽकल्पनादेव न व्यापकत्वग्रह इति नोपलक्षणतया एतत्त्वग्रह इति धूमे वह्निव्याप्तिसंशयो नानुपपन्न इति चेन्न एतत्त्वधूमत्वयोर्दर्शनोत्तरं मानसव्याप्तिग्रहस्यैव दुर्वारत्वात्। व्यभिचाराग्रहसहचारग्रहादीनामेव तत्र हेतुत्वात्। घट इत्याकारकप्रत्यक्षकाले जातिमानित्याकारकमानसप्रत्यक्षापत्तेर्जातित्वज्ञानविरहेणैवापादयितुमशक्यतया तत्तत्सन्निकर्षादेस्तत्र हेतुत्वाकल्पनात्।

न च तद्रूपतद्रसयोः सन्निकर्षसत्त्वेऽपि क्वचित्संशयदर्शनाद् वस्त्वन्तरे क्वचित् तद्रूपाभावज्ञानमुत्पन्नं कदाचिच्च नोत्पन्नमिति वक्तव्यम्, एवमेतत्त्वधूमत्वयोर्ज्ञानस्थलेऽपि क्वचिद् वस्त्वन्तरे एतत्त्वाभवाज्ञानं क्वचिन्न जातमिति वक्तव्यम्, तत्रैवादृष्टविशेषस्य नियामकत्वं वक्तव्यमिति तदपेक्षया तयोर्व्याप्यव्यापकभावग्रहे एवादृष्टविशेषस्य नियामकत्वमस्तीति वाच्यम्, अयं धूम इति ज्ञानोत्तरमपि किं धूममात्रे एतत्त्वं वर्तते किं वा क्वचिद् धूमे तदभावोऽपीति, धूमान्तरं वर्तते तदा तत्र एतत्त्वं नास्तीत्याद्यनुभवस्य सर्वसिद्धतया तन्नियामकतया सर्वैरेवादृष्टविशेषस्य कल्पनीयत्वात्। एतत्त्वधूमत्वयोर्व्याप्यव्यापकभावाग्रहनियामकान्तरसम्भवेऽदृष्टविशेषस्य तन्नियामकत्वकल्पनानौचित्यात्। अन्यथा घटादिकं प्रत्यपि अदृष्टविशेषादेर्नियामकत्वं कल्प्यतां किं दण्डादेः कारणत्वेन, किं वा गुरुभूतप्रतिबन्धकत्वादेस्तत्र तत्र कल्पनेन, सर्वत्रादृष्टविशेषस्य नियामकत्वसम्भवात्।

न चायं धूम इति प्रत्यक्षाव्यवहितोत्तरक्षणं तत्र वह्निव्याप्तिग्रहे तृतीयक्षणे व्यभिचारसंशयः सम्भवति, तत्र द्वितीयक्षणे व्यापकत्वग्रहादुपलक्षणतया भानमित्येवं चतुर्थक्षणीयसंशयादिकं प्रत्येव तस्य प्रतिबन्धकत्वसम्भवादिति वाच्यं चतुर्थपञ्चमादिक्षणेष्वपि संशयानुभवात् तदनुपपत्तेरेव दुरुद्धरत्वात्।

अथ पार्थिवरूपं जलीयरूपं तैजसरूपं च वायुत्वाभावव्याप्यमिति निर्णयकाले रूपं वायुत्वाभावव्यभिचारि न वेति संशयाऽऽनुभविकः स कथं सामान्यलक्षणावादिनामप्युपपद्यताम्, न च पार्थिवत्वादीनां रूपत्वाव्यापकतया पार्थिवत्वाभावादेर्जलीयरूपादौ ग्रहणेन व्यभिचारग्रहाच्च नोपलक्षणतया पार्थिवत्वादिभानसम्भव इति न रूपत्वावच्छेदेन वायुत्वाभावव्याप्तिसंशये पार्थिवरूपत्वाद्यवच्छेदेन वायुत्वाभावनिश्चयस्य प्रतिबन्धकत्वमिति वाच्यम् पार्थिवजलीयतैजसान्यतमरूपं वायुतवाभावव्याप्यमिति निश्चयवत एव संशयानुपपत्तेः पार्थिवत्वतैजसत्वजलीयत्वान्यतामाभावस्य कस्मिंश्चिदपि रूपेऽग्रहणादिति वाच्यम् रूपत्वेनोपस्थितापूर्वरूपेषु पार्थिवत्वाद्यन्यतमत्वानिर्णयेन व्यभिचारसंशयसम्भवात्, तदन्यतमत्वे रूपत्वव्यापकत्वग्रहविरहेण तत्रोपलक्षणतया भानायोगात्।

न च यावन्ति पार्थिवरूपाणि तावन्ति पार्थिवाद्यन्यमत्ववन्ति, एवं यावन्ति जलीयानि तैजसानि चेति निश्चयोत्तरं व्यभिचारसंशयो दुर्वच इति वाच्यं पार्थिवरूपत्वाद्यवच्छेदेन तादृशान्यतमत्वनिश्चयस्य रूपत्वसामानाधिकरण्येन तादृशान्यतमत्वाभावग्रहाविरोधित्वात्।

न च पार्थिवजलीयतैजसानि यावन्ति रूपाणि सर्वाणि तानि पार्थिवजलीयतैजसान्यतमत्ववन्तीति निश्चयवतः सर्वेषु रूपेषु तदन्यतमत्वनिश्चयात्तादृशान्यतमत्वस्योपलक्षणतयैव भानं स्यादिति वाच्यम् यत उक्तप्रत्ययो हि पार्थिवजलीयतैजसान्यतमत्वविशिष्टरूपत्वावच्छेदेन तादृशान्यतमत्वावगाही, न हि पुनस्तादृशप्रत्ययो रूपत्वसामानाधिकरण्येन पार्थिवाद्यन्यतमत्वाभावबुद्धिं प्रतिरुणद्धि शुद्धरूपत्वावच्छेदेन तादृशान्यतमत्वनिश्चयस्यैव विरोधित्वात्।

न च पार्थिवजलीयतैजसान्यतमरूपाणि तादृशान्यतमत्ववन्तीति प्रत्यये अन्यतमत्वमुपलक्षणविधयैव भासत इत तस्य रूपत्वसामानाधिकरण्येनान्यतमत्वाभावग्रहविरोधित्वमिति वाच्यं रूपत्वव्यापकताया अन्यतमत्वेन ग्रहणे तस्योपलक्षणतया भानं तस्योपलक्षणतया भाने च रूपत्वसामानाधिकरण्येनान्यतमत्वाभावग्रहप्रतिबन्धमुखेन व्यभिचाराग्रहेणान्यतमत्वे रूपत्वव्यापकत्वग्रह इति परस्पराश्रय इति कदुत्तरमात्रमिदं तस्मात् पार्थिवाद्यन्यतमरूपाणि

तादृशान्यतमत्ववन्तीति ज्ञानवतो रूपत्वसामानाधिकरण्येनान्यतमत्वाभावग्रहेण तद्वृत्तित्वस्य रूपत्वे ग्रहणाद् रूपत्वव्यापकत्वमन्यतमत्वे दुर्ग्रहमत एवान्यतमत्वस्योपलक्षणतया भानाभावेन पार्थिवाद्यन्यतमरूपं वायुत्वाभावव्याप्यमिति निश्चयवतोऽपि संशयोपपत्तिः। यस्य रूपाणि सर्वाणि वायुत्वाभावव्याप्यानीत्येव रूपत्वावच्छेदेन तद्ग्रहस्तस्य संशयाभावस्तूभयमतेऽपीष्ट एव।

प्रकृते च त्वन्मते प्रत्यक्षीभूतधूमे एतत्त्वनिश्चयेन धूमान्तरस्यात्यन्तमज्ञानेन एतत्त्वाभाववद्वृत्तित्वज्ञानं धूमत्वेऽसम्भावितमेव, तथा च व्यापकत्वेन गृहीतस्य तस्योपलक्षणतयैव भानान्मूलोक्तसंशयो दुरुपपाद एवेति सामान्यलक्षणा स्वीकरणीयैव।

पक्षधरमिश्रो[1] हि सामान्याभावभानार्थं सामान्यलक्षणप्रत्यासत्तेरभ्युपगममावश्यकं मन्यते, अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया सामान्यलक्षणाया अभावे घटादिसामान्याभावप्रतियोगिनः समग्रस्य घटादेर्ज्ञानासम्भवेन घटादिसामान्याभावस्य भानं न स्यात्।

दीधितिकारो मतमिदं निराचिकीर्षुर्ब्रवीति यदभावस्य ज्ञानमात्रे लौकिकप्रत्यक्षे वा प्रतियोगिज्ञानस्य कारणत्वं नास्ति सामान्यलक्षणावादिमते यस्य कस्यचिद् घटाभावादेः प्रत्यक्षानन्तरमभावत्वप्रत्यासत्त्या जायमाने अभावत्वमात्रेणाभावान्तरावगाहिनि प्रत्यक्षे इदन्त्वादिना सन्निकृष्टस्याभावस्य लौकिकप्रत्यक्षे च प्रतियोगिज्ञानस्य व्यभिचारात्।

एवं चाभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वासिद्ध्या सामान्याभावभानार्थ समग्रप्रतियोगिनो ज्ञानस्यानावश्यकतया तदुपपत्तये सामान्यलक्षणायाः कल्पनमनावश्यकम्।

न चाभावबुद्धौ प्रतियोगिज्ञानस्याहेतुत्वे घटादिज्ञानं विनापि घटो नास्तीत्याकारकाभावप्रत्यक्षापत्तिरिति वाच्यम्। उक्तबुद्धेर्घटत्वविशिष्टवैशिष्ट्यावगाहिबुद्धित्वेन तत्कारणीभूतस्य घटत्वप्रकारकज्ञानस्य विरहादेव घटादिज्ञानदशायामुक्तप्रत्यक्षानुत्पादस्य सम्भवात्।

---

[1] जागदीश्यां सामान्य लक्षणाप्रकरणे, पृ०सं० 160

न चाभावप्रत्यक्षे स्वातन्त्र्येण प्रतियोगिज्ञानस्याहेतुतया प्रतियोगिज्ञानोपपत्तये सामान्य-लक्षणप्रत्यासत्तेरनावश्यकत्वेऽपि घटादिसामान्याभावप्रत्यक्षे प्रतियोगिविधया सकलघटादेर्भा-नोपपत्तये सकलघटादिभिरिन्द्रियसन्निकर्षसम्पादनार्थमेव सामान्यलक्षणाप्रत्यासत्तिरावश्यकीति वाच्यं, सामान्याभावप्रत्यक्षे सकलप्रतियोगिविषयकत्वस्यासिद्धत्वात्।

न चाभावविषयकलौकिकप्रत्यक्षे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याहेतुत्वे घटत्वनिर्विकल्पकानन्तरं विशेष्ये विशेषणमितिरीत्या अभावे घटं घटे च घटत्वमवगाहमानस्य घटाभाव इत्याकारकलौकिकप्रत्यक्षस्यापत्तिर्दुर्निवारा घटत्वप्रकारेण घटवैशिष्ट्यावगाहिबुद्धौ घटत्वप्रकारेण घटज्ञानस्य हेतुत्वाभ्युपगमेनोक्तापत्तिपरिहारसम्भवेऽपि घटस्याज्ञानदशायामि-न्द्रियसम्बद्धविशेषणतया 'न' इत्याकारकस्याभावलौकिकप्रत्यक्षस्यापत्तिर्दुर्निवारा अभावप्रत्यक्षं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वे तु प्रागुपस्थितस्य प्रतियोगिनोऽभावांशे विशेषणीभूय भाने बाधकाभावान्न तादृशप्रत्यक्षापत्तिः।

घटाभावस्य पटत्वावच्छिन्नाभावत्वेन प्रात्यक्षिकभ्रमे घटज्ञानजन्यत्वाभावेन व्यभिचारात् प्रतियोगिज्ञानस्य हेतुत्वानुपपत्तिर्नाशङ्कनीया तद्वारणार्थं घटत्वावच्छिन्नत्वाभावत्वेन प्रत्यक्षं प्रति घटज्ञानत्वेन हेतुताया घटस्याज्ञानदशायामिन्द्रियसम्बद्धविशेषणताप्रत्यासत्त्या न इत्याकारक-प्रत्यक्षापत्तिभयेनाभ्युपगमासम्भवेऽपि घटत्वावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपिताभावनिष्ठ-लौकिकविषयताकप्रत्यक्षं प्रति घटत्वादिप्रकारकज्ञानत्वेन हेतुत्वसम्भवात् तस्य भ्रमप्रमानिर्वि-कल्पकसाधारणत्वात् प्रकारत्वे प्रतियोगित्वसम्बन्धावच्छिन्नत्वस्य निवेशेन घटो नास्तीति प्रत्यक्षस्य स्वरूपसम्बन्धेनाभावत्वप्रकारकत्वेऽपि असंग्रहाभावाच्च।

न च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वपक्षे अभावो न घटीय इत्या-कारकनिश्चयदशायामभावे घटभानस्यासम्भवेन न इत्याकारकप्रत्यक्षापत्तिर्दुर्निवारेति वाच्यम् 'न' इत्याकारकप्रत्यक्षस्य घटत्वावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपिताभावनिष्ठविषयताकत्ववद् दण्डत्वपटत्वादितत्तद्धर्मावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपिताभावनिष्ठविषयताकत्वेन तादृशविष-

यताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति हेतुभूतस्य तत्तद्धर्मप्रकारकज्ञानकूटस्य एकदा विरहादेव 'न' इत्याकारकप्रत्यक्षस्यापत्त्यसम्भवात्।

न चैवमभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वसिद्ध्या घटादिसामान्याभावप्रतियोगिनां निखिलघटादीनां सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्येति वाच्यम्। अभावबुद्धौ यावत्प्रतियोगिज्ञानत्वेन कारणत्वकल्पनाया गौरवग्रस्ततया प्रतियोगितावच्छेदकविशिष्टयत्किंचित्प्रतियोगिज्ञानस्यैव कारणत्वकल्पनाया उचितत्वात् तस्य च सामान्यलक्षणप्रत्यासत्तिं विनापि सम्भवात्।

न च तत्प्रतियोगिकाभावबुद्धौ तज्ज्ञानस्य कारणतया यावत्प्रतियोगिज्ञानस्य कारणत्वमयत्नसिद्धमिति वाच्यम्, उक्तकार्यकारणभावे मानाभावात्। प्राचीनमते ध्वंसप्रागभावात्यन्ताभावानां प्रतियोग्यादित्रितयप्रतियोगिकतया ध्वंसप्रागभावरूपयोः प्रतियोगिनोरग्रहणेऽपि भावात्मकस्यैकस्य प्रतियोगिनो ग्रहमात्रेण तेषां गृह्यमाणतया व्यभिचाराच्च।

इयमपि दीधितिकारोक्तिर्विचार्यमाणा न सामीचीनमिति अत्र भूतले यावान् घटो नास्तीतिबुद्धेर्यावद्घटज्ञानापेक्षत्वाद् यावद्घटज्ञानस्य च सामान्यलक्षणामन्तरा असम्भवात्। न चोक्तबुद्धेरपि घटसामान्याभावबुद्धेर्घटत्वेन यत्किंचिद्घटज्ञानजन्यत्वमिव यावत्त्वेन यत्किंचिद्घटज्ञानजन्यत्वं स्वीकर्तुमर्हं यावत्त्वस्य यावति घट एव पर्याप्तत्वेन पर्याप्तिसम्बन्धेन यावत्त्वेन एकघटज्ञानस्य दुर्घटत्वात् प्रतियोगितावच्छेदकताघटकसम्बन्धेनैव च प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावबुद्धौ कारणत्वात् कालिकेन घटत्वप्रकारकज्ञानदशायां समवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्याग्रहणात्।

सामान्यलक्षणाया अभ्युपगमे तु घटत्वप्रत्यासत्त्या निखिलघटानामुपस्थितौ सत्यां यावत्त्वेन निखिलघटज्ञानस्य सम्भवेन दोषाभावात्।

## तमःप्रत्यक्षानुरोधेन सामान्यलक्षणाया अभ्युपगमसम्बन्धे दीधितिकृतो मतस्य विमर्शः

न्यायमते तमः स्वपरप्रकाशकतेजःप्रतियोगिकयावत्संसर्गाभावरूपं चक्षुर्वेद्यं च। अतः तत्प्रत्यक्षोपपत्तये सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्या, अन्यथा अभावप्रत्यक्षे प्रतियोगि-बुद्धेर्हेतुतया यावतां तमःप्रतियोगितेजसामग्रहणे तत्प्रत्यक्षं न स्यादिति सामान्यलक्षणावादिनां प्राचीनविदुषां मतम्।

उक्तं[1] मतं निराचिकीर्षुणा दीधितिकृतोक्तं यत्तमो न तत्तत्तेजोऽभावसमुदायरूपं किन्तु तेजोविशेषसामान्याभावरूपम्, तेजोविशेषत्वं च तेजस्त्वव्याप्त्या स्वपरप्रकाशकतेजोनिष्ठा विलक्षणा जातिस्तदवच्छिन्नप्रतियोगिताकसामामान्याभाव एव तमः। अतस्तत्प्रत्यक्षे उक्तजात्या-त्मकत्तेजोविशेषत्वेन यत्किंचित्तेजोज्ञानमात्रमेव प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानरूप-कारणविधया अपेक्षितम्, तच्च सामान्यलक्षणाप्रत्यासत्तिं विनापि सुघटम्।

किं च यदि उक्तविधतेजोऽभावसमुदायस्य तमस्त्वं मन्येत तदा तमसः कुत्रापि कदापि वृत्तित्वं न स्यात् तत्तत्तेजोध्वंसस्य तत्तत्तेजःप्रागभावस्य च तादृशतेजोऽभावसमुदायान्तर्गतत्वात् तयोश्च एकत्र एककालेऽसत्त्वात्।

यदि पुनस्तत्तेजोऽभावसमुदायो यावन्ति तादृशतेजांसि तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्न-तत्तद्व्यक्तिनिष्ठप्रतियोगिताकसमानाधिकरणाभावसमुदायात्मना परिष्क्रियेत तदापि तस्य तमोरूपत्वं न वक्तुं शक्यम्, तादृशाभावानामनुगतैकधर्मशून्यतया तम इत्येवंविधाया अनुगता-कारायाः प्रत्यक्षप्रतीतेरुपपादयितुमशक्यत्वात्।

यदि चैकैकतादृशतेजोऽभावविशिष्टापरापरतादृशतेजःप्रतियोगिकाभावत्वेनानुगमय्य तादृशतेजोऽभावसमुदायस्य तमस्त्वं मन्येत तर्हि तदपि नोचितमसंख्यानां तादृशतेजोऽभाव-व्यक्तीनां तम इत्याकारकप्रतीतिविषयतायाः कल्पने गौरवात्। तदपेक्षया एकस्य तेजोविशेषसा-

[1] जागदीश्यां सामान्यलक्षणाप्रकरणे, पृ०सं० 186

मान्याभावस्य तमःप्रतीतिविषयत्वकल्पने लाघवेन तेजोविशेषसामान्यभावस्यैव तमोरूपत्व-कल्पनाया औचित्यात्।

यदि चेत्थं तर्क्येत यत्तेजोविशेषसामान्याभावस्य सन्निकर्षकाले तादृशतेजोऽभाव-समुदायस्याप्यवश्यं सन्निकृष्टतया सर्वेषां तादृशतेजोऽभावानामपि तमःप्रतीतिविषयताया अनिवार्यत्वेन गौरवोद्भावनन्नोचितमतस्तेजोविशेषसामान्याभावस्य तादृशतत्तत्तेजोऽभावसमु-दायस्य वा तमस्त्वाभ्युपगमे विनिगमनाविरहेणोभयोरेव तयोस्तमोरूपतायाः स्वीकारस्यौचित्येन तादृशतत्तत्तेजोऽभावप्रत्यक्षोपपत्तये प्रतियोगिभूतानां तत्तेजसां ग्रहणार्थं सामान्यलक्षण-प्रत्यासत्तिरवश्यमभ्युपगन्तव्या, परमिदं न शोभनम्, सामान्यलक्षणप्रत्यासत्तेरभ्युपगमेऽपि तेजस्त्वेनैव तत्तत्तेजसां ग्रहणस्य सम्भवतया तादृशतत्तत्तेजस्त्वेन तादृशतेजसां सामान्यलक्षणप्रत्यासत्त्यापि ग्रहणस्यासम्भवेन तादृशतत्तत्तेजोऽभावसमुदायस्याप्रत्यक्षताया एव स्वीकार्यत्वात्।

किन्तु दीधितिकृतः कथनमिदं विचार्यमाणं न युक्तियुक्ततां भजते, यतस्तमो यदि तेजोविशेषसामान्याभावरूपमपि स्यात्तदापि तत्प्रत्यक्षे प्रतियोगिविधया सर्वेषां तेजोविशेषाणां भानमभ्युपेयमेव तस्य तेजोविशेषत्वेन यावत्तेजोविशेषप्रतियोगिकतया यत्किंचित्तेजःप्रतियोगित्वेन तद्भानस्वीकारस्यानौचित्यात्।

एवं च प्रत्यक्षे इन्द्रियसन्निकृष्टस्यैव भाननियमेन तेजोविशेषसामान्याभावात्मकतमः-प्रत्यक्षे अभावांशे भासमानस्य यावतस्तेजोविशेषस्य सन्निकृष्टताया अवश्यं स्वीकार्यत्वात्तस्य च सन्निकर्षस्य ज्ञानलक्षणस्यैव स्वीकरणीयतया तदर्थं सामान्यलक्षणप्रत्यासत्तेरवश्यं स्वीकरणीयत्वादन्यथा यावतस्तेजोविशेषस्यासन्निकृष्टतया अभावांशे विशेषणविधया तमः-प्रत्यक्षे भानासम्भवात्।

यत्तु इदमुक्तं यत् सामान्यलक्षणप्रत्यासत्तेरभ्युपगमेऽपि तेजस्त्वेन तेजस्त्वव्याप्यजाति-विशेषरूपेणैव वा तत्तत्तेजसां ग्रहणसम्भवेन तत्तत्तेजस्त्वेन तत्तत्तेजसो ग्रहणस्यासम्भवतया

तत्तत्तेजःप्रतियोगिकाभावप्रत्यक्ष न सम्भवतीति तन्न समीचीनं तेजोविशेषसामान्याभावस्यापि तेजोविशेषत्वेन यावत्तेजोविशेषप्रतियोगिकत्वात्तत्प्रत्यक्षे तेजोविशेषत्वेनैव यावतां तेजोविशेषाणामभावांशे भानवत्तत्तेजोऽभावसमुदायेऽपि तत्तत्तेजसां विशेषणविधवा भानस्वीकारेण तत्तत्तेजस्त्वेन तेजस्त्वेनैव तत्तत्तेजोग्रहणस्यानावश्यकत्वात्। तेजस्त्वेनापि च तावतो निखिलतेजोविशेष्यस्य सामान्यलक्षणप्रत्यसत्तिं विना ग्रहणासम्भवात्।

## प्रागभावप्रत्यक्षानुरोधेन सामान्यलक्षणप्रत्यासत्तेरभ्युप-गमनीयतायां दीधितिकृन्मतविमर्शः

प्रागभावप्रत्यक्षस्योपपत्तये सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्या, तथा हि प्रागभावोऽनागतप्रतियोगिक एवेति निर्विवादम्, अतोऽभावप्रत्यक्षे प्रतियोगिज्ञानस्य हेतुतया अनागतप्रतियोगिज्ञानं विना प्रागभावप्रत्यक्षं न सम्भवति, प्रागभावस्य प्रत्यक्षत्वं च सर्वसम्मतम्। अतः प्रागभावप्रत्यक्षे हेतुभूतस्यानागतप्रतियोगिज्ञानस्योपपत्तये सामान्यलक्षणप्रत्यासत्ति नूंनं स्वीकार्या तां विनानागतस्य ज्ञानासम्भवात्।

यदिदानीमत्र घटप्रागभाव इत्याकारकप्रत्यक्षं प्रागभावांशे घटत्वविशिष्टवैशिष्ट्यबुद्धिरूपमतस्तत्र हेतुविधया घटत्वप्रकारकज्ञानमात्रमपेक्षितं विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदप्रकारकज्ञानत्वेनैव कारणतया कारणतावच्छेदकोटौ विशेषणस्याप्रवेशेन घटत्वेन यस्य कस्यचिद् घटस्य ज्ञानेनापि उक्तस्य प्रागभावप्रत्यक्षस्योत्पत्तिसम्भवादितिसामान्यलक्षणप्रत्यासत्तेरभ्युपगमोऽनावश्यक इति। तदापि प्रयोजनान्तरानुरोधेन सामान्यलक्षणप्रत्यासत्तेः स्वीकारोऽनिवार्य एव तथा हीदानीमत्र घटप्रागभाव इति प्रत्यक्षस्य प्रागभावांशे विशेषणविधया अनागतघटावगाहित्वमेव मन्तव्यम्, जातस्यघटस्यविशेषणविधया तत्र भाने उक्तप्रत्यक्षस्य जातघटाभाववति प्रागभावे जातघटावगाहितया भ्रमत्वापत्तेः। अनागतघटस्य भानं चानागतघटे सन्निकृष्ट एव सम्भवति, स च सन्निकर्षो लौकिकसन्निकर्षबाधाज्ज्ञानलक्षणात्मक एव मन्तव्यः स च सामान्यलक्षणां विना दुर्घट इति।

परमुक्ता[1]युक्तिर्दीधितिकृते न रोचतेऽतस्तेन सामान्यलक्षणाया अभ्युपगमस्यौचित्यं न मन्यते, तस्यायमाशयः- यदिदानीमत्र घटप्रागभाव इत्याकारकः प्रत्ययो न लोकसिद्धः किन्तु अत्र घटो भविष्यतीत्याकारक एव प्रत्ययो लोकसिद्धः स च घटांशे भविष्यत्त्वविषयकः भविष्यत्त्वं च न वर्तमानप्रागभावप्रतियोगित्वरूपं वक्तुं शक्यं श्वोभाविघटप्रतियोगिकस्य प्रागभावस्याद्यापि वर्तमानतया श्वोभाविनि अद्य भविष्यतीतिप्रत्ययप्रसङ्गात्, किन्तु भविष्यतीतिशब्दस्योत्पत्स्यत इति शब्दस्य समानार्थकतया वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं, वर्तमानकालोत्तरकालोत्पत्तिकत्वमेव वा भविष्यत्त्वं वाच्यम्। तथा च भविष्यत्त्वस्यातीन्द्रियोत्पत्तिघटिततया प्रत्यक्षविषयत्वासम्भवेनोक्तप्रत्ययस्य प्रत्यक्षभिन्नताया एवाभ्युपगमनीयतयाऽनागतमानार्थं सामान्यलक्षणप्रत्यासत्तेरभ्युपगमोऽनावश्यक एव।

न च भविष्यत्त्वस्यातीन्द्रियत्वेन लौकिकप्रत्यक्षाऽसम्भवेऽपि तदंशेऽलौकिके घटो भविष्यतीतिप्रत्यक्षे अनागतघटभानार्थं सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्या, तस्य जातघटविषयकत्वाभ्युपगमे भ्रमत्वप्रसङ्गादिति वाच्यम्। एतद्घटपूर्ववर्त्तिघटदृष्टान्तेन घटत्वहेतुना जायमानायां वर्तमानघटे घटपूर्वत्वानुमितौ योग्यताबलेनानागतघटस्य भानेन सामान्यलक्षणप्रत्यासत्तिं विनाप्यनुमानादेवाऽनागतधटस्य ग्रहणसम्भवेन घटो भविष्यतीति भविष्यत्त्वविषयकेऽलौकिके प्रत्यक्षे ज्ञानलक्षणप्रत्यासत्याऽनागतघटभानसम्भवात्।

न च घटानुत्पत्तिकाले इदानीमिह कपाले घटो नास्तीति प्रत्यक्षप्रत्ययः सर्वानुभवसिद्धोऽतस्तत्राभावांशे अनागतघटस्य भानोपपादिकाया ज्ञानलक्षणप्रत्यासत्तेरूपपत्तये सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्येति वाच्यम्, उक्तप्रत्ययस्य घटात्यन्ताभावविषयकतयैवोपपत्तेः।

न चोक्तप्रत्यय एतत्कपाले एतत्कालावच्छेदेन घटाभावमवगाहते घटात्यन्ताभावश्च नित्यतया न कालावच्छेद्योऽतस्तस्यात्यन्ताभावविषयकत्वाभ्युपगमो नोचित इति वाच्यम् भाविनि

[1] प्रागभावप्रत्ययोऽपि च प्रतियोगिवृत्तिघटत्वादिप्रकारकज्ञानसाध्यो न प्रतियोगिज्ञानमपेक्षते।

नष्टे वा घटे इह कपाले घटो नास्तीति प्रत्ययानुरोधेनात्यन्ताभावस्यापि कालावच्छेदेन वृत्तिताया आवश्यकत्वात्। अयम्भावः- उक्तप्रत्ययो हि घटप्रतियोगिकाभावमात्रमवगाहते इति न वक्तुं शक्यते। यत्किंचिद्घटवत्यपि घटो नास्तीतिप्रत्ययप्रसङ्गादत उक्तप्रत्ययो घटत्वावच्छिन्न-प्रतियोगिताकमभावमवगाहते इत्येव वक्तव्यम्, एवं च ध्वंसप्रागभावयोः प्रतियोगितायां घटत्वाद्यवच्छिन्नत्वस्यासम्भवतया उक्तप्रत्ययस्य घटात्यन्ताभावविषयकत्वाभ्युपगमोऽवश्यं स्वीकार्यः।

## प्रागभावोऽसिद्ध इति तत्प्रत्त्यक्षानुरोधेन सामान्यप्रत्यासत्तिरनावश्यकीति दीधितिकृदुक्तिविमर्शः

वस्तुतस्तु प्रागभावो नास्त्येव प्रमाणाभावात्, न चोत्पन्नस्य पुनरुत्पत्त्यापत्तिपरिहाराय कार्यं प्रति प्रागभावस्य कारणताया अवश्यमभ्युपगन्तव्यतया प्रागभावानङ्गीकारो दुर्घट इति वाच्यं कार्योत्पत्तौ कार्यस्य प्रतिबन्धकत्वाभ्युपगमेनोत्पन्नस्य पुनरुत्पत्त्यापत्तिपरिहारसम्भवात्।

ननु प्रागभावानभ्युपगमे प्रागभावकालवृत्तित्वरूपं सामान्यतः पूर्वत्वं तत्प्रागभावकाल-वृत्तित्वरूपं च तत्पूर्वत्वं दुर्निर्वचमिति चेन्न प्रागभावं विनापि निर्वचनसम्भवात्, तथा हि सामान्यतः पूर्वत्वं नाम- ध्वंसप्रतियोगिकालवृत्तित्वमेवं तत्पूर्वत्वं नाम- तदुत्पत्तिकालीन-ध्वंसप्रतियोगिकालवृत्तित्वम्, इदं च प्रागभावं विनापि सुवचम्।

न च तत्पूर्वत्वकुक्षौ प्रविष्टोत्पत्तिस्तदधिकरणावृत्तिप्रागभावप्रतियोगिकालसम्बन्धरूपैव वाच्या। सा च विना प्रागभावं दुर्वचेति वाच्यं, महाप्रलयानभ्युपगमे स्वाधिकरण-कालध्वंसानधिकरणकालसम्बन्धरूपाया महाप्रलयाङ्गीकारे च यदीयसम्बन्धसामान्ये यत्काल-वृत्तिध्वंसप्रतियोगित्वाभावस्तस्य तत्कालसम्बन्धरूपाया उत्पत्तेः प्रागभावं विनापि निर्वक्तुं शक्यत्वात्।

न च क्षणत्वस्य स्ववृत्तिप्रतियोगिकप्रागभावानधिकरणसमयत्वरूपतया प्रागभावं विना निर्वचनासम्भवेन तद्घटितोत्पत्तिर्दुर्वचेति वाच्यं, स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वेन स्ववृत्तिध्वंस-प्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयत्वेन वा क्षणस्य वक्तुं शक्यत्वात्।

न च स्वानधिकरणेषु तन्तुषु पटोत्पत्तिधारणाय सहस्रादीनां तन्तूनां तत्तत्तन्तुत्वेन तत्तत्पटजनकत्वं वाच्यम् तथा च लाघवादेक एव प्रागभावः कल्पनीयः स च स्वाश्रय एव प्रतियोग्युत्पादक इति नातिप्रसङ्ग, इति वाच्यम्। प्रागभावस्वीकारेऽपि तत्तत्तन्तुव्यक्तीनां तत्तच्चरमतन्तुसंयोगव्यक्तीनां वा तत्पटं प्रति विशिष्य हेतुत्वस्यावश्यकत्वेन प्रागभावकल्पनाया अयौक्तिकत्वात्। अयमाशयः-

यदि प्रागभावमभ्युपगम्य तत्तत्पटादिकं प्रति तत्पटादिप्रागभावस्य कारणता न मन्यते तदा यः पटो येषु सहस्रतन्तुषु संयुक्तेषु जायते तत्पटस्य त्रिचतुरेष्वेव तन्तुषूत्पन्नेषु संयुक्तेषु चोत्पत्तिः स्यात्, तत्पटप्रागभावघटितायास्तत्पटसामग्र्यास्तदानीं सत्त्वात्।

न च तत्पटं प्रति तत्पटप्रागभावाश्रययावत्तन्तुत्वेन जनकतया नोक्तापत्तिरिति वाच्यम्। अवच्छेदककोटौ प्रागभावस्य प्रवेशेऽप्रवेशे उभयथैव तत्कारणत्वासिद्धेः, प्रवेशे प्रथमान्यथा-सिद्धिग्रस्तत्वात्, अप्रवेशे च तत्पटप्रागभावाश्रयाणां तन्तूनां तावत्तन्तुत्वेन निर्वाहसम्भवेन प्रागभावस्य हेतुताया अयौक्तिकत्वात्।

न च जनकतया प्रागभावस्यासिद्धत्वेऽपि जनकतावच्छेदकतयैव तत्सिद्धिरभ्युपेयेति वाच्यं कतिपयतन्तुष्वसंयुक्तेष्वपि सहस्रतन्तुसाध्यस्य पटस्योत्पत्तिप्रसङ्गात्।

न च तत्पटप्राक्क्षणवृत्तितत्पटप्रागभावव्याप्ययावत्संयोगानां तत्पटं प्रति जनकत्वस्वी-कारेण नोक्तापत्तिरिति वाच्यम्। कारणतावच्छेदकगर्भे तन्तुसंयोगानां तत्पटप्रागभावव्याप्यत्वेन निवेशापेक्षया तत्पटव्याप्यत्वेन निवेशे लाघवेन जनकतावच्छेदकतयापि प्रागभावासिद्धेः। तदेवं प्रागभावस्य प्रमाणाभावेन असिद्धतया तत्प्रत्यक्षेः नागतप्रतियोगिनो भानानुरोधेन सामान्य-लक्षणप्रत्यासत्तेरभ्युपगमोऽनावश्यक एव।

अत्रैवं विमृश्यते- प्रागभावस्य दीधितिकृता यदप्रत्यक्षत्वमुक्तं तन्न समीचीनम्। यतो हि इह इदानीं घटप्रागभावेत्याकारकप्रत्ययस्य यल्लोकासिद्धत्वमुक्तं तन्न यौक्तिकं परकीय-प्रत्ययानामवेद्यत्वेन स्वात्मनि तादृशप्रत्ययस्यासिद्धत्वोक्तेः सम्भवेऽपि लोकानां न तादृशप्रत्यय इति वक्तुमशक्यत्वात्, विपुलो हि लोकोऽसंख्यास्तत्र प्रत्येतारोऽतः कस्यापि तादृशः प्रत्ययो न भवतीत्येष निश्चयोऽसर्वज्ञस्य दुर्घटस्तथा च यदि एकस्यापि कस्यचित्प्रत्येतुस्तादृश प्रत्ययो भवेत् तदा तत्र प्रागभावविशेषणतया भाविनो घटस्य भानोपपादिकाया ज्ञानलक्षणायाः प्रत्यासत्तेरुपपत्तये सामान्यलक्षणप्रत्यासत्तेरभ्युपगमो दुर्वारः।

प्रागभावस्य यदप्रामाणिकत्वं दीधितिकृताऽभ्यधायि तदपि न सम्यग्, एकदैवोत्पन्नेषु संयुक्तेषु च सहस्रतन्तुषूत्पाद्यमानस्य पटस्य अन्यतन्तुषूत्पत्तेर्वारणार्थं तत्पटकारणतया तत्पट-प्रागभावकल्पनाया आवश्यकत्वात्। अन्यथा विनिगमनाविरहेण तत्तत्तन्तुसंयोगानां विशिष्य तत्पटं प्रति हेतुत्वं कल्पयित्वा तद्रहितेषु तन्तुषु तत्पटोत्पत्त्यापत्तिवारणे गौरवात्, यतो हि तत्पटारम्भकतत्तत्तन्तुषु तत्पटोत्पत्तेः प्राक् कतिषुचिदपि तन्तुषु द्रव्यारम्भकसंयोगाभावेन पूर्वं तत्पटोत्पत्त्यापत्त्यसम्भवेन प्रागभावपक्षे तत्पटं प्रति संयोगानां विशिष्य हेतुत्वकल्पनाया अनावश्यकत्वात्।

न च तत्पटं प्रति तत्पटवत्त्वेन तन्तूनां कारणत्वकल्पनयापि तन्त्वन्तरेषु तत्पटोत्पत्त्या-पत्तेः परिहारसम्भवेन तत्पटोत्पादकतया तत्पटप्रागभावकल्पना अनावश्यकीति शङ्कितुं शक्यं कार्योत्पत्तौ कारणतावच्छेदकविशिष्टकारणस्यैव कार्योत्पत्तेः पूर्वमपेक्षणीयतया तत्पटोत्पत्तेः प्राक् तत्पटविशिष्टतन्तुरूपकारणस्य समवधानासम्भवेन तत्पटोत्पत्तेरसम्भवापत्तेः।

यदि च कारणतावच्छेदकोपलक्षितस्य कारणस्य सत्तामात्रमेव कार्योत्पत्तौ अपेक्षितं स्यात्तदा द्रव्यचाक्षुषं प्रति चाक्षुषवद् द्रव्यत्वेनापि कारणतायाः सम्भवेनोद्भूतरूपादीनां चाक्षुषप्रत्यक्षं प्रति कारणत्वं भज्येत।

किं चानुमित्यादिकं प्रति अप्रामाण्यज्ञानाभावविशिष्टपरामर्शस्य कारणत्वेऽपि अप्रामाण्यज्ञानास्कन्दितपरामर्शदशायामप्यनुमित्यापत्तिः स्यात् तदानीमप्यप्रामाण्यज्ञानाभावोपलक्षितस्य परामर्शस्य सत्त्वात्।

किं च यः पटः सर्वेषां स्वारम्भकतन्तुसंयोगानां नाशान् नश्यति तत्पटस्य तन्नाशोत्तरं पुनः संयुक्तेषु जनिततत्पटकतन्तुषूत्पत्त्यापत्तिः स्यात्, पटजनकानां तन्तूनां तन्तुसंयोगानां चोपस्थितत्वात्।

यदि तत्पटोत्पादकानां संयोगानां तत्तद्व्यक्तित्वेन तत्पटं प्रति कारणत्वं कल्पयित्वा उक्तापत्तिर्वार्यते तदा महद् गौरवम्, अतस्तादृशापत्तिवारणाय तत्पटजनकतया तत्पटप्रागभावः कल्पनीयः। उक्तस्थले च विनष्टस्य तत्पटस्य प्रागभावविरहादेव न पुनस्तदापत्तिसम्भवः।

न च तत्पटारम्भकसंयोगोत्पत्तिकाले उत्पन्नायास्तत्पटोत्पादकतन्तुपर्याप्तायाः संख्याव्यक्तेस्तत्पटं प्रति हेतुत्वकल्पनयाऽपि उक्तापत्तिर्वारयितुं शक्यते। तत्पटोत्पादकसंयोगनाशकाले तादृशसंख्याव्यक्तेरपि नाशेन तदानीं तादृशसंख्याव्यक्तेरविद्यमानत्वादिति वाच्यं, यस्य तन्तोर्द्वितीयपक्षण एव तन्त्वन्तरसंयोगस्योत्पत्त्या तृतीयक्षणे सहस्रतन्तुकपटोत्पत्तिस्तस्मिन्नेव तन्तौ व्यभिचारेण तावत्तन्तुपर्याप्तसंख्यायाः कारणत्वकल्पनाया असम्भवात्। एकत्वान्यसंख्यायाः समानाधिकरणयावदेकत्वसापेक्षतया द्रव्योत्पत्तेर्द्वितीयक्षणे एकत्वान्यसंख्याया उत्पत्त्यसम्भवात्।

इदमप्यत्रावधानमर्हति यत् तत्पटोत्पादकेषु सहस्रतन्तुषु न एकैव सहस्रत्वसंख्या अपि तु पुरुषभेदेन तत्र अनेकाः सहस्रत्वसंख्याः सम्भवन्ति। अतो विनिगमनाविरहेण सर्वासामेव तादृशसंख्याव्यक्तीनां तत्तद्व्यक्तित्वेन तत्पटं प्रति कारणत्वस्य कल्पनीयतया अनन्तकार्यकारणभावकल्पनापत्तिः। यदि च तावत्तन्तुपर्याप्तसहस्रत्वसंख्यात्वेन सर्वास्तादृशीः संख्या अनुगमय्य तासां तत्पटोत्पत्तिं प्रति हेतुत्वं कल्प्येत तदा महागौरवं, संख्यानिष्ठकारणतावच्छेदकगर्भे सहस्रतन्तूनां प्रवेशात्। तन्तूनां कारणतावच्छेदकगर्भे प्रवेशेन प्रथमान्यथा-

सिद्धिग्रस्ततया तेषां कारणत्वानुपपत्तिरपि, अतस्तत्पटहेतुतया एकस्यैव तत्पटप्रागभावस्य कल्पनमेव न्याय्यम्। धर्मिग्राहकप्रमाणेन कारणत्वेनैव प्रागभावस्य सिद्धतया पदार्थान्तरेण सार्धं विनिगमनाविरहस्य वक्तुमशक्यत्वात्।

दीधितिकृतोत्पन्नस्य पुनरुत्पत्त्यापत्तिवारणाय प्रागभावमुपेक्ष्य यत्तत्तत्कार्यं प्रति तत्तत्कार्यस्य प्रतिबन्धकत्वमुक्तं, तदपि न युक्तम्। शाखावच्छिन्ने वृक्षे उत्पन्नायाः कपिसंयोग-व्यक्तेस्तत्रैव पुनरुत्पत्त्यापत्तेर्वारयितुमशक्यत्वात्, तदुत्पत्त्यनन्तरमपि मूलावच्छेदेन तदभावस्य सत्त्वात्।

प्रागभावाभ्युपगमे तु नायं दोषोत्पन्नायाः कपिसंयोगव्यक्तेः प्रागभावस्य नष्टत्वेन पुनरुत्पत्तेरापादयितुमशक्यत्वात्।

न च तत्तद्देशावच्छेद्यतत्तत्संयोगं प्रति तत्तद्देशावच्छेद्यतत्तत्संयोगाभावत्वेन कारणत्व-कल्पनाया नोक्तदोष इति वाच्यं, तत्तत्संयोगं प्रति तत्तत्संयोगप्रागभावत्वेन कारणत्व-कल्पनापेक्षया उक्तकारणत्वकल्पनायां गौरवात्।

न चावच्छेदकतासम्बन्धेन कप्यादिसंयोगसामान्यं प्रति अवच्छेदकतासम्बन्धेन कप्यादिसंयोगसामान्याभावस्य कारणत्वकल्पनयापि उक्तापत्तेः परिहारः सम्भवति, न च कल्पनायामस्यां गौरवमपि, इति तादृशसंयोगं प्रति तादृशसंयोगप्रागभावस्य कारणत्वकल्पनया नियुर्क्तिकेति वाच्यं, प्रागभावस्य प्रत्यक्षसिद्धतया तमादाय विनिगमनाविरहेणोक्तकारणतायाः कल्पनस्यानौचित्यात्।

किञ्च धारावाहिकप्रत्यक्षस्थले प्रथमक्षणे उत्पन्नस्य निर्विकल्पकस्य चतुर्थक्षणे पुनरुत्पत्त्यापत्तिस्तृतीयक्षणे प्रथमक्षणोत्पन्नस्य निर्विकल्पकस्य नाशेन कार्यरूपस्य प्रतिबन्धक-स्याभावसौलभ्यात्, तत्तत्कार्यं प्रति तत्तत्कार्यप्रागभावस्य कारणत्वकल्पनया च नैष दोष उत्पन्नस्य प्रागभावविरहात्।

तादात्म्यसम्बन्धेन कार्यं प्रति प्रतियोगितासम्बन्धेन प्रागभावस्य कारणत्वकल्पनया च न कार्याणां तत्प्रागभावानां चानन्त्येन कार्यप्रागभावयोः कार्यकारणभावकल्पनायामानन्त्यापत्तेरप्यभावात्।

## सामान्यलक्षणासाधकमिश्रयुक्तिभिर्दीधितिकारमतनिरासविचारः

मिश्रो ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहस्योपपत्तये सामान्यलक्षणप्रत्यासत्तेरभ्युपगममावश्यकं मन्यते। तस्यायमाशयः- यद् यत्र ज्ञानेच्छाकृतयः क्रमेणोत्पद्यन्ते तत्र ज्ञानेच्छयोः साक्षात्कारो न भवितुमर्हति। यतो हि योग्यविशेषगुणानामात्मनि युगपदुत्पत्तेरनङ्गीकारेण इच्छाकाले ज्ञानस्य साक्षात्कार एवं कृतेः काले इच्छायाः साक्षात्कारो न भवितुमर्हति। कृत्यनन्तरं च कृतिसाक्षात्कारकाले इच्छायाः साक्षात्कारस्य कथंचित्सम्भवेऽपि ज्ञानस्य साक्षात्कारो नैव सम्भवति, कृतिजन्मकाले ज्ञानस्य नष्टत्वात्, कार्योत्पत्तेरव्यवहितपूर्वकाले विद्यमानस्यैव च कारणत्वादतो ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहोऽसम्भवः।

सामान्यलक्षणप्रत्यासत्तेरभ्युपगमे तु नैष दोषो ज्ञानोत्तरमिच्छायाऽनुत्पादस्थले ज्ञानस्य कृतेश्चानुत्पादस्थले इच्छायाः साक्षात्कारे सति ज्ञानत्वेच्छात्वरूपसामान्यलक्षणप्रत्यासत्त्या सर्वेषां ज्ञानानां सर्वासां चेच्छानामलौकिकप्रत्यक्षसम्भवेन कृतेरपि कस्याश्चिल्लौकिकप्रत्यक्षे सति कृतित्वसामान्यलक्षणप्रत्यासत्त्या सर्वासां कृतीनामपि ज्ञानसम्भवेन ज्ञानेच्छाकृतीनां कार्यकारणभावस्य ग्रहणसम्भवात्।

[1]दीधितिकारो मिश्रोक्तां युक्तिमिमां निरस्यन् ब्रूते यत् सामान्यलक्षणप्रत्यासत्तेरभ्युपगमे ज्ञानेच्छाकृतीनां स्वरूपग्रहणमात्रमेव सम्भवति न तु तासां पौर्वापर्यमपि सामान्यलक्षणप्रत्यासत्त्या ग्रहीतुं शक्यतेऽतः सामान्यलक्षणप्रत्यासत्तेरभ्युपगमेऽपि ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहोऽसम्भव एव तदौपयिकस्य पौवापर्यज्ञानस्याभावादत इदमेव मन्तव्यं यदिच्छाया अनुत्पादस्थले ज्ञानस्य कृतेरनुत्पादस्थले चेच्छायाः साक्षात्कारे सति प्रतियोगिज्ञानस्य जाततया

[1] जागदीश्यां सामान्य लक्षणाप्रकरणे, पृ०सं० 303

ज्ञानसामान्यव्यतिरेकस्येच्छासामान्यव्यतिरेकस्य, एवं कृतिसाक्षात्कारे कृतिव्यतिरेकस्य च ग्रहणसंभवेन ज्ञानसामान्यव्यतिरेके इच्छाव्यतिरेकनियमस्येच्छासामान्यव्यतिरेके च कृतिव्यतिरेकनियमस्य ग्रहणसम्भवेन च मनसा इच्छां प्रति ज्ञानं कारणं, कृति प्रति चेच्छा कारणमित्येवं कार्यकारणभावग्रहः सम्भवति।

यद्यप्येष कार्यकारणभावग्रह इच्छोपधायकं ज्ञानं कृत्युपधायिकामिच्छां च न विषयीकरोति तथापि न काचिद्धानिः, इच्छानुपधायके ज्ञाने इच्छास्वरूपयोग्यत्वरूपाया इच्छाकारणताया एवं कृत्यनुपधायिकायामिच्छायां स्वरूपयोग्यतारूपायाः कृतिकारणताया ग्रहणसम्भवात्।

तदेवं सामान्यलक्षणप्रत्यासत्तिं विनापि ज्ञानेच्छाकृतीनां मानसस्य कार्यकारणभाव-ग्रहणस्य सम्भवेन तदर्थं सामान्यलक्षणप्रत्यासत्तेः कल्पनमयौक्तिकम्।

किन्तु **दीधितिकारस्य** निराकरणमिदं न सम्यग्, इच्छोपधायके ज्ञाने कृत्युप-धायिकायामिच्छायां न इच्छाकृत्योः कार्यकारणभावग्रहस्योपपत्तये सामान्यलक्षणप्रत्यासत्तेर-भ्युपगमस्यावश्यकत्वात्।

यच्च **दीधितिकृता** इदमुक्तं यत्सामान्यलक्षणप्रत्यासत्त्या ज्ञानत्वेच्छात्वाभ्यामि-च्छाकृत्युपधायकयोर्ज्ञानेच्छयोर्ग्रहणसम्भवेऽपि ज्ञानेच्छयोरिच्छाकृत्योश्च पौर्वापर्यस्य ग्रहीतुम-शक्यतया कार्यकारणभावग्रहो न भवितुमर्हतीति। तन्न युक्तं, ज्ञानत्वरूपेण गृहीते इच्छोप-धायकज्ञाने एवमिच्छात्वरूपेण गृहीतायामिच्छायामिच्छाकृत्योर्व्यभिचारस्याज्ञानमात्रेणापि उक्तज्ञानेच्छासामान्यव्यतिरेकनियतेच्छाकृतिव्यतिरेकग्रहेण कार्यकारणभावग्रहसम्भवात्।

## सामान्यलक्षणायाः प्रत्यासत्तित्वसाधकप्रगल्भोक्तयुक्तिभि-र्दीधितिकारमतनिरासविचारः

सामान्यलक्षणप्रत्यासत्तिं साधयितुकामेन प्रगल्भेनेदमुक्तं यदिदं गोपदशक्यतावच्छेदकं गोत्वादित्यत्र तादात्म्येन गोत्वस्य अथ वा अयं सास्नावान् गोत्वादित्यत्र समवायेन गोत्वस्य गोत्वत्वेन साध्यव्याप्तिर्ग्राह्या। गोत्वत्वं च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वम्, तच्च सकलगोघटिततया सकलगवां ग्रहणं विना ग्रहीतुमशक्यमिति तद्ग्रहौपयिकस्य सकल-गोग्रहस्योपपत्तये सामान्यलक्षणाप्रत्यासत्तिरवश्यमभ्युपगन्तव्या।

उक्तं[1] मतं निराकुर्वता दीधितिकृता इदमुक्तं यद् गोत्वत्वकुक्षौ सकलगोवृत्तित्वं गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपं, न तु तत्तद्गोव्यक्तिवृत्तित्वरूपम् तथा सति सामान्यलक्षणयापि गोत्वेनैव गवां ग्रहणेन तत्तद्व्यक्तित्वेन सर्वगवां ग्रहीतुमशक्यतया गोत्वत्वस्य ग्रहणानुपपत्तेः, गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं च गोत्वेन यत्किञ्चिद्-गोग्रहणेऽपि ग्रहीतुमर्हमिति गोत्वत्वग्रहणानुरोधेन सामान्यलक्षणप्रत्यासत्तेः कल्पनमनावश्यकम्।

परं दीधितिकृतो निराकरणमिदं न युक्तिसङ्गतं गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेद-कत्वशरीरेऽपि गोत्वेन सर्वासां गवां प्रवेशस्यावश्यकत्वादन्यथा तद्रूपवत्यास्तद्गोव्यक्तेः प्रत्ययमात्रदशायां तद्गवीयरूपेऽपि गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वस्य ग्रहण-सम्भवेन तत्र गोपदशक्यतावच्छेदकत्वस्याभावेन गोत्वत्वरूपेण गोत्वे गोपदशक्यतावच्छे-दकत्वव्याप्तेर्ग्रहीतुमशक्यतया तदानीं गोत्वलिङ्गेन गोपदशक्यतावच्छेदकत्वानुमितेरनुपपत्ति-प्रसङ्गात्, गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकगर्भे सकलगवां प्रवेशे च तद्ग्रहणार्थं सामान्यप्रत्यासत्तेरावश्यकत्वात्।

किंच गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वघटितरूपेण गोत्वस्य व्याप्यत्वे गौरवमतः। सकलगोवृत्तित्वघटितरूपेणैव तस्य व्याप्यत्वमभ्युपेयम्, सकलगोवृत्तित्वं च

---

[1] जागदीश्यां सामान्य लक्षणाप्रकरणे, पृ०सं० 309-311

तत्तद्गोवृत्तित्वरूपं सदपि गोवृत्तित्वत्वेनैव तद्घटकमतस्तत्तद्व्यक्तित्वेन न सकलगोग्रहणापेक्षा किन्तु गोत्वेनैव सकलगोग्रहसापेक्षा, सा च सामान्यलक्षणप्रत्यासत्त्या सम्भवत्येव, अतः सकलगोवृत्तित्वस्य सामान्यलक्षणप्रत्यासत्त्या अशक्यग्रहणत्वं यद्दीधितिकृतोक्तं तन्न सम्यगित्येवं प्रगल्भोक्तरीत्यापि सामान्यलक्षणप्रत्यासत्तेः साधनं निराबाधमेव।

## पाकादिचिकीर्षायाः सुखादीच्छायाश्चानुरोधेन सामान्य-प्रत्यासत्तेरभ्युपगमविषये विमर्शः

सामान्यप्रत्यासत्ति साधयितुकामैः कैश्चिद् विपश्चिद्भिरिदमुच्यते यन्मनुष्यस्य पाकादौ चिकीर्षा सुखादाविच्छा च सर्वजनसिद्धा, सा च सिद्धे पाकादौ सुखादौ च न भवितुमर्हति। विषयसिद्धेरिच्छां प्रति प्रतिबन्धकत्वादतोऽसिद्धे पाकादावेव चिकीर्षा असिद्धे सुखादावेव चेच्छा मन्तव्या, इच्छा चेष्यमाणस्य सामान्यज्ञानेनैव साध्या, अतोऽसिद्धस्य पाकादेः सुखादेश्च सामान्यरूपेण ज्ञानं विना न तत्सम्भव इत्यसिद्धानां पाकादीनां सुखादीनां च ज्ञानार्थं सामान्य-लक्षणाप्रत्यासत्तिरवश्यमभ्युपेया। तत्सत्त्वे पाकत्वेन निखिलपाकानां सुखत्वेन निखिलसुखानां च ज्ञानसम्भवेन सिद्धपाकसुखादिकं विहाय असिद्धपाकसुखादाविच्छा सम्भवति।

मतमिदं निराकुर्वता चिन्तामणिकृता इदमभिहितं यदसिद्धस्य पाकादेरज्ञानेऽपि सिद्धपाकादिविषयकज्ञानादेवासिद्धे पाकादौ इच्छोत्पत्तेः सम्भवेन नोक्तयुक्तया सामान्यप्रत्या-सत्तिः सोढुमहति तथा च विषयतासम्बन्धेनेच्छां प्रति विषयतासम्बन्धेन ज्ञानस्य कारणत्वमव-श्यमभ्युपेयम्, अन्यथा अज्ञातेऽपीच्छोत्पत्तिप्रसङ्गादतः सिद्धपाकादिज्ञानादज्ञाने असिद्धपाकादा-विच्छोत्पत्तेः समर्थनमसङ्गतमिति वाच्यम् ज्ञानेच्छाकृतीनां समानविषयकत्वेन कार्यकारण-भावानभ्युपगमात्, समानप्रकारकत्वेन कार्यकारणभावाभ्युपगमेऽपि दोषाभावात्। अज्ञाते इच्छा नोत्पद्यते इति नियमाभावाद् यद्रूपप्रकारकज्ञानं न भवति तद्रूपप्रकारिकैवेच्छादिर्न जायत इत्येव नियमात्।

न च विनिगमनाविरहेण समानप्रकारताप्रत्यासत्त्या इव समानविषयताप्रत्यासत्त्या अपि ज्ञानेच्छाकृतीनां कार्यकारणभावस्य स्वीकार्यतया। अज्ञाते इच्छादीनामुदयो नैव समर्थयितुं शक्यमिति वाच्यं, समानविषयकज्ञाने सत्यपि समानप्रकारकज्ञानाभावे इच्छाकृत्योरनुदयेन समान-प्रकारताप्रत्यासत्त्या कार्यकारणभावस्यावश्यक्लृप्तत्वात्।

किन्तु चिन्तामणिकृतः कथनमिदं कमनीयं न प्रतिभाति, शुक्त्यादिज्ञानाद् रजतत्व-प्रकारकरजतविषयकेच्छाद्यापत्तिवारणाय समानविषयकत्वेनापि ज्ञानेच्छाकृतीनां कार्यकारण-भावस्यावश्यकत्वात्।

यत्तु दीधितिकृता[1] सामान्यप्रत्यासत्तिसाधिकाया उक्तयुक्तेर्निराकरणाय इदमुक्तं यत् सिद्ध एव पाकादौ चिकीर्षा, सिद्ध एव सुखे चेच्छा भवितुमर्हति। तत्प्रकारकेच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानस्यैव विरोधितया तादृशज्ञानाभावदशायां सिद्धेऽपि तत्प्रकारके-च्छाया उत्पत्तौ बाधकाभावात्।

यद्युक्तरीत्या सिद्धे इच्छोत्पत्तिर्न मन्येत तदा बहुतरकालात् प्रोषितस्य प्रोषणकाले मृत-कान्ताकस्य मरणाज्ञाने कान्तावलोकनेच्छा न स्याद्, जातानां कान्तावलोकनानां सिद्धत्वात्। कान्ताया मृतत्वेन तदवलोकनान्तरस्य चासिद्धत्वादतो यथा कान्तावलोकनत्वावच्छेदेन सिद्धत्वज्ञानाभावात्, सिद्धे एव कान्तावलोकने इच्छाया उदयो मन्यते तथैव सिद्धे सुखादाव-पीच्छाया उदयोपपत्तिसम्भवेनासिद्धसुखादिज्ञानार्थं सामान्यप्रत्यासत्तेरभ्युपगमो निरर्थकः।

दीधितिकारोऽसिद्धसुखादेः[2] प्रकारान्तरेण ज्ञानमुपपाद्य तदर्थं सामान्यलक्षणाया प्रयोजनवत्तां निराचकार। तत्प्रकारान्तरं चानुमानरूपं यथा अयं कालः सुखोत्पत्तिकालीनध्वंस-प्रतियोगी सुखवत्कालत्वात्, सुखोत्पत्तिमदेतत्कालपूर्ववर्तिकालवत्। सुव्यक्तमिदं यदेतदनुमानं पक्षीभूतस्य एतत्कालस्य ध्वंसकाले सुखस्योत्पत्त्यैव भवितुमर्हति, उत्पत्तिश्चैतत्कालध्वंसकाले एतत्कालपर्यन्तं जातस्य सुखस्य न भवितुमर्हति उत्पन्नस्य पुनरुत्पत्तेरनभ्युपगमात्। तथा च

[1] जागदीश्यां सामान्य लक्षणाप्रकरणे, पृ०सं० 328-329
[2] जागदीश्यां सामान्य लक्षणाप्रकरणे, पृ०सं० 334-336

यत्सुखमादाय एतत्काले सुखोत्पत्तिमत्कालीनध्वंसप्रतियोगित्वमुपपत्तुमर्हति तदसिद्धमेव सुखं भवितुमर्हति, तदेवमनेनानुमानेनासिद्धसुखस्य ज्ञातुं शक्यतया तज्ज्ञानार्थं सामान्यप्रत्यासत्तेर-भ्युपगमो निरर्थक इति।

किन्तु दीधितिकृतो वचनमिदं वचनीयतामतिशयितुं नार्हति, यतो हि उक्तसाध्यकुक्षौ यदि सिद्धस्य सुखस्य प्रवेशस्तदा पक्षे तदुत्पत्तिकालीनध्वंसप्रतियोगित्वं बाधितम्। असिद्धं सुखं चाज्ञाततया साध्यघटकं न भवितुमर्हत्यत उक्तानुमानेनासिद्धसुखज्ञानस्य सम्भावना सुदूरोपेता। यद्येवमुच्येत यदुक्तसाध्यकुक्षौ सुखस्य न विशेषरूपेण प्रवेशः किन्तु सुखत्वेनैव अतोऽज्ञातसुखमादाय पक्षे सुखोत्पत्तिकालीनध्वंसप्रतियोगित्वसम्भवेन बाधो न भवितुमर्हति, तदैतदपि कथनं समीचीनं न भवति। यत उक्तादनुमानात्पूर्वं सुखत्वेनापि ज्ञातसुखस्यैवो-पस्थित्या पक्षे सुखोत्पत्तिकालीनध्वंसप्रतियोगित्वाभावग्रहणे बाधस्य दुष्परिहरत्वात्।

इदमत्रावधेयम्- जातित्वेन वह्नित्वमवगाहमानस्य वह्नेरुपनयस्य काले जातिमत्कालीनो धूम इत्वेवंविधमेव वह्नेरुपनीतप्रत्यक्षमुदेति न तु स्वरूपतो वह्नित्वेन वह्निविषयकं वह्निकालीनो धूम इति प्रत्यक्षमुदेति। अतः स्वरूपतो वह्नित्वेन तत्तद्व्यक्तिविषयकोपनीतप्रत्यक्षं प्रति स्वरूपतो वह्नित्वेन तत्तद्व्यक्तेर्ज्ञानं कारणमित्यवश्यं स्वीकार्यं, किन्तु एवंविधः कार्य-कारणभावो वह्नित्वेन अवह्निविषयकोपनीतप्रत्यक्षस्थल एव स्वीकार्यो वह्नित्वेन वह्नेरुप-नीतस्थले तु वह्नित्वेन वह्निज्ञानमात्रस्यैव वह्नित्वेन वह्निविषयकोपनीतप्रत्यक्षं प्रति हेतुत्वं मन्तव्यं लाघवात्, न तु कारणतावच्छेदकगर्भे तत्तद्वह्निविषयकत्वं निवेश्यं गौरवात्। एवं च वह्नित्वेन कस्यचिदेकस्य वह्नेर्ज्ञानसत्त्वे वह्नित्वेन सकलवह्निविषयकप्रत्यक्षस्य दुर्वारतया सामान्यलक्षणायाः प्रत्यासत्तित्वं प्रसभमुपपद्यते। सामान्यलक्षणाजन्यज्ञानस्य सामान्याश्रयमुख्य-विशेष्यकत्वनियमाभावेन यावद्वह्निविषयकस्य वह्निकालीनो धूम इत्याकारकोपनीतप्रत्यक्षस्य सम्भवात्।

न च वह्निकालीनोऽयं धूम इति प्रत्यक्षे वह्नित्वेन यावद्वह्नेर्भाने भ्रमत्वापत्तिः, एतद्धूमे यावद्वह्निकालीनत्वाभावादिति वाच्यं, वह्नित्वेनैव यावद्वह्नीनां भानेन भ्रमत्वायोगात्। एतद्धूमस्य यत्किञ्चिद्वह्निकालीनत्वेन तत्र वह्निकालीनत्वाभावस्यासम्भवेन वह्निकालीनत्वाभाववति वह्नि-कालीनत्वप्रकारकत्वाभावात्।

न च वह्नित्वेन कस्यचिदेकस्य वह्नेर्ज्ञानोत्तरं वह्नित्वेन सकलवह्न्यवगाह्युपनीतप्रत्यक्षं न भवितुमर्हति तत्प्रकारकबुद्धिं प्रति तद्विषयकज्ञानस्य कारणतया वह्नित्वेन एकवह्निकाले वह्न्यन्तरस्याज्ञातत्वेन तदुत्तरं भाविनि ज्ञाने वह्न्यन्तरस्य प्रकारत्वासम्भवादिति वाच्यं, तत्प्रकारकप्रत्यक्षे तद्विषयकज्ञानत्वेन कारणतायां मानाभावात्।

घटवद्भूतलमित्यादिज्ञानस्य विशेषणतावच्छेदकीभूतघटत्वप्रकारकज्ञानादेव सम्भवाद्। अयं घट इति प्रत्यक्षस्य च घटघटत्वाभ्यामिन्द्रियसन्निकर्षबलादेव सम्भवेन तज्जनकतया घटत्वादिविषयकस्य निर्विकल्पकप्रत्यक्षस्यास्वीकारात्। सम्बन्धसाक्षात्कारे सम्बन्धिद्वय-साक्षात्कारस्य हेतुतया अयं घट इत्याकारकस्य घटघटत्वसम्बन्धसाक्षात्कारस्यानुरोधेन घटघटत्वयोर्निर्विकल्पकप्रत्यक्षस्य स्वीकारेऽपि तत्प्रकारकप्रत्यक्षं प्रति तद्विषयकज्ञानत्वेन कारणत्वकल्पनाया अप्रामाणिकत्वात्।

न चायं घट इति ज्ञानं विशेषणज्ञानसाध्यं विशिष्टबुद्धित्वादित्यनुमानेन तत्प्रकारकबुद्धौ तद्विषयकज्ञानस्य कारणतासिद्धिरावश्यकीति वाच्यं, विशिष्टबुद्धित्वे विशेषणज्ञानजन्यत्व-व्याप्तिग्राहकस्य दृष्टान्तस्याभावाद्। अयं दण्डीत्यादिज्ञानस्य दण्डत्वरूपविशेषणतावच्छेदक-प्रकारकज्ञानजन्यत्वेन विशेषणज्ञानजन्यत्वस्यासिद्धतया दृष्टान्तत्वासम्भवात्।

न च सामान्यलक्षणास्वीकारे प्रमेयत्वप्रकारेण यस्य कस्यचिदेकस्य ज्ञाने सति प्रमेयत्वसामान्यप्रत्यासत्त्या सर्वेषां पदार्थानां ज्ञानसम्भवेन प्रमेयत्वेन यत्किञ्चित्प्रमेयविदोऽपि सर्वज्ञत्वापत्तिरिति वाच्यं, प्रमेयत्वेन सर्वज्ञतया इष्टत्वात्। न च सर्वस्य सर्ववित्त्वाभ्युपगमे कस्यापि अयं घटो न वेति संशयो न स्यादिति वाच्यम्। अयं घटो न वेति

संशयविरोधिनोऽयं घट इति निश्चयस्य सामान्यप्रत्यासत्त्या जनयितुमशक्यत्वेन तन्निश्चयाभावे तत्संशयसम्भवात्। अयमाशयः-

अयं घटो न वेत्यादिसंशयः स्वरूपतो घटत्वं घटभेद चावगाहते अतस्तं प्रति स्वरूपतो घटत्वप्रकारकनिश्चयः प्रतिबन्धको भवितुमर्हति, प्रमेयत्वसामान्यप्रत्यासत्तिर्हि प्रमेयत्वेनैव घटत्वादिकं निश्चाययति, न तु स्वरूपतोऽतः प्रमेयत्वेन घटत्वादिसकल विशेषज्ञानसत्त्वेऽपि विरोधिनिश्चयस्यानुदयेन न तादृशसंशयानुपपत्तिः।

## ( घ ) सामान्यलक्षणासन्निकर्षस्य प्रत्यक्षप्रमा हेतुत्वनिरासः

पूर्वोक्त सन्निकर्षस्य प्रत्यक्षकारणत्वं न रोचते शब्दशास्त्रविद्भयः, तत्तु अनुपदमेव वक्ष्यते। पूर्वं तावन्न्यायदर्शनमर्मज्ञैरेव कृतस्तन्निरासः, उच्यते-

**धूमौ वह्निव्याप्य इत्येवं रूपेणैव व्याप्त्यनुभवः, तत्र धूमत्वेनैव धूमस्य वह्नित्वेनैव च वह्नेः प्रवेशः न तु महानसीयत्वादिना। तथैव व्याप्तिस्मरणम्, धूमवानयमिति पक्षधर्मताज्ञानं चेति व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञानानां समाप्रकारकत्वेनानुमिति हेतुत्वमुपपद्यते।**

एवमेव गवादिपदेष्वपि शक्त्यनुभवतत्स्मरणवाक्यार्थानुभवानामेकगोत्वादिप्रकारकत्वेन हेतुहेतुमद्भावश्चोपपद्यते इति क्व सामान्यलक्षणस्योपयोगः? स्पष्टं चैतत्सर्वं चिन्तामणिदीधिति-व्याख्यानभूतायां सामान्यलक्षण जागदीश्याम्।[1]

किञ्च, धमोवह्निव्याप्यः न वेति संशेयोऽपि नानुपपन्नः। यस्य पुरुषस्य एतद्धूमत्वेन (महानसीयत्वादीना) धूमे वह्निव्याप्तिग्रहस्तस्य तु सामान्यरूपेण धूमे व्याप्तिनिश्चयरूपप्रति-बन्धकाभावात् तादृशः संशयो भवितुं युज्यत एव। स्पष्टं चेदं दीधितौ सामान्यलक्षण-चिन्तामणेः।[2]

यत्तु पक्षे साध्यसंशयरूपपक्षतासम्पादनमेत्फलमुक्तम्, तदपि न रोचते नव्यन्यायशास्त्र-विद्भयः। गगने मेघनिश्चयसत्वे विनापि साध्यसंदेहं घनगर्जनेन मेघानुमितिर्गगने भवत्येवेति पक्षतायास्तादृशं स्वरूपमस्वीकृत्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपाया एव तस्याः सिद्धान्तितत्वात्-

**सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्।।**[3]

---

[1] अनु0जा0, सा0ल0, प्र0, पृ0 115-117
[2] सा0ल0, चि0दी0, पृ0 143
[3] न्या0सि0मु0, अनु0 ख0, का0सं0 70

शक्तिवादे सामान्यलक्षणमङ्गीकुर्वतां पुनरनिष्कृतिरेवेत्यादिना अस्य सन्निकर्षस्य प्रयोजनमुक्त्वापि **'मैवम्- भगवत्संकेतरूपायां शक्तौ'** इत्यादिना तस्या निष्फलत्वमेव सिद्धान्तितं श्रीगदाधरभट्टाचार्येण।[1]

**उक्तविषयेशब्दशास्त्रविदः**

सामान्यलक्षणोऽयं सन्निकर्षः प्रतिपदं मुनित्रयेणानुक्त एव। श्रीभट्टोजिदीक्षितेन शब्दकौस्तुभे, श्रीनागोजिभट्टनोद्द्योते चास्योपन्यासः पूर्वपक्षत्वेन कृतः। तथाहि- **''आत्त्वसामान्यलक्षणप्रत्यासत्त्या 'माष्टि' इत्यादिप्रयोगसमवायिनां सर्वेषामाकाराणां बुद्धिशब्दवाच्यता ग्रहात्''** इति,[2] **''सामान्यलक्षणया भूतभाविसकलव्यक्तिग्रहः सम्भवत्येव''** इति च।[3]

अयं भावः- शब्दानित्यत्वपक्षे बुद्धिविधायकैः **''मृजेर्वृद्धिः''** इत्यादिसूत्रैर्यदाऽऽकारादयो भाव्यन्ते, तदा तेषु वृद्धिपदवाच्यत्वग्रहोऽनेन **''वृद्धिरादैच्''**[4] इति सूत्रेण करिष्यते। यदा चानेन आकारादिषु वृद्धिपदीयशक्तिग्रहः सम्पाद्यते, तदा **''मृजेवृद्धिः''**[5] इत्यादिविधिसूत्रैराकारादयो भाव्येरन्निति ज्ञप्त्युत्पत्त्योः परस्परापेक्षत्वेनेतरेतराश्रयत्वप्रसङ्गे आचार्यद्वयस्येयमुक्तिः। आत्वादिरूपसामान्यलक्षणसन्निकर्षेण भूतभाविवर्तमानेषु सकलाकारादिषु वृद्धिपदीयशक्तिग्रहः सुकर एवेति नेतरेतराश्रयत्वप्रसक्तिरिति।

**वस्तुतोऽस्य सन्निकर्षस्यानङ्गीकार एव**

शाब्दिकाचार्यां वस्तुतो नैवाभ्युपगच्छन्ति प्रत्यक्षहेतुत्वेनेयं सन्निकर्षम्। पूर्वोक्तस्थलयोः श्रीभट्टोजिदीक्षित-श्रीनागोजिभट्टौ पूर्वपक्षतयोक्त्वाऽपि तत्रैवेतदभावेऽपि कार्यं निर्वाह्य नैवाङ्गी-

---

[1] द्र०- शा०वा०, विशेषका, हरि० टीका, पृ० 90
[2] श०कौ०, म०भा०- 1/1/1
[3] म०भा०, प्र०उ०- 1/1/1
[4] पा०सू०, 1/1/1
[5] पा०सू०, 7/2/114

चक्रतुरिमं सन्निकर्षं प्रत्यक्षहेतुतया। तथा हि- **सामान्यलक्षणानभ्युपगमपक्षे त्वात्वजातौ शक्तिग्रहात्, शक्त्यनुभवपदार्थस्मरणवाक्यार्थबोधानां समानप्रकारकत्वेनैव (कार्यकारणभावाभ्युपगमे) अतिप्रसङ्गभङ्गाभ्युपगमाद्वा। अन्यथा गेहे घटोऽस्तीति वाक्यादपूर्वव्यक्तिर्न गृह्येतेति दिक्।''**[1]

''**सामान्यलक्षणानङ्गीकारेऽपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्यकारणभावाभ्युपगमान्न दोषः**'' इति च।[2]

शक्तिग्रहपदार्थस्मृतिशाब्दबोधेषु प्रकारांश एव समानत्वादरेण कार्यकारणभावो मन्तव्यः न तु विशेष्यीभूतव्यक्त्यंशेऽपि, इति आत्वादिजात्यवच्छिन्ने शक्तिग्रहस्य पर्यवसानेन नास्ति सामान्यलक्षणसन्निकर्षादर इति भावः। अन्यत्रापि उद्द्योतकृता स्पष्टीकृतोऽयमभिप्रायः। तथाहि- ''**प्रथमतो बालस्य यद्यपि विशेषव्यक्तावेव शक्तिग्रहः, तथापि आवापोद्वापन्यायेन व्यवस्थितिरिरिति तत्त्वम्**'' इति।[3]

अनयाप्युक्त्या तस्याः प्रत्यासत्तित्वं नाभ्युपेयते किन्तु तत्तदर्थाश्रितजात्यादिरूपधर्म-द्वारीकृत्य तदाश्रयीभूतसकलव्यक्तिलाभः सम्पादितः।

प्रदीपकृता श्रीकैयटेनापि न स्वीकृतोऽयं सन्निकर्षः। तथाहि-[4]

''**कथं पुनरिति-प्रत्यक्षेणैकस्यैव शब्दस्य श्रवणाद् भेदावगमे प्रमाणाभावः**'' इति भावः। यदीयं प्रत्यासत्तिरादृता स्यात्, तर्हि प्रमाणाभाव इति न वदेत्। सामान्यलक्षण-सन्निकर्षेण सकलव्यक्तीनां भिन्नानां प्रत्यक्षे सति भेदग्रहे प्रत्यक्षप्रमाणस्यैव तादृशसन्निकर्ष-रूपस्य सम्भवात्।

---

1 श०को०- 1/1/1
2 म०भा०, प्र०उ०- 1/1/1
3 म०भा०, प्र० 1/2/64
4 म०भा०, प्र०- 1/2/27

वस्तुतस्तु सामान्यलक्षणानङ्गीकारे भाष्यकारस्यैव तादृशं तात्पर्यमुपवर्णितं प्रदीपकृता, न तु स्वीयं किञ्चिदपि। यतोहि-

**''कथं पुनर्ज्ञायते त्रयाणामयं प्रश्लिष्टनिर्देश इति''?**

इति समाहित भाष्यकृता। तत्र समाधानभाष्यं प्रत्यक्षातिरिक्तं नैवानुमानेनार्थापत्या वा योजयितुं शक्यम् न तु प्रत्यक्षेणापि, इति तादृशमेव योजितं श्रीकैयटेन। उद्द्योतकृताऽनुमानाकारोऽपि प्रदर्शिता।[1]

यद्यपि हेतोः साध्यस्य च प्रतिव्यक्तिभिन्नत्वेन पर्वतीयवह्निधूमव्यक्त्योः सामानाधिकरण्यस्य सत्वेऽपि महानसीयवह्निव्यक्त्या सह उक्तधूमव्यक्तेः सामानाधिकरण्याभावेनोक्तस्थलादौ कथं निर्वाहः? सामान्यो व्याप्तिग्रहाभावादिति वक्तुं शक्यते, तथापि साधनाधिकरणत्वव्यापकं स्वाश्रयाश्रयत्वसम्बन्धेन साधनाश्रयाश्रितं च यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्ये तात्पर्यम्, स्वं वह्नित्वादिकं तदाश्रयो वह्निः, तदाश्रयत्वं महानसादाविति महानसीयवह्न्यादेरपि पर्वतीयधूमादौ व्याप्तिग्रहणेष्टसिद्धौ नास्त्युक्त सन्देहावसरः।[2]

एवञ्च तत्तद्धूमत्वेन तत्तद्वह्निसामानाधिकरण्यनिश्चयेऽपि प्रसिद्धधूमे एव तत्सम्भवेनाप्रसिद्धदेशान्तरीयकालान्तरीयधूमाविषयकत्वेन धूमो वह्निव्याप्यः, न वेति संशयस्यापि सूपपत्तिः समानप्रकारकत्वेनैव निश्चयस्य संशयविरोधित्वाऽभ्युगमात्। प्रकृते तु न तथा, तत्तद्धूमत्वेन धूमे व्याप्तेर्निश्चयः, संशयस्तु धूमत्वेनेति भेद इत्येवं प्रकारैः सामान्यलक्षणायाः प्रसरो न भवितुर्महति तन्नये।[3]

---

1 म०भा०, प्र०उ०- 1/2/27

2 द्र०- वे०प०, म०प्र०, शि०म०, अनु०परि०, पृ० 172

3 द्र०- वे०प०, म०प्र०, शि०म०, पृ० 116

## वेदान्त नये सामान्यलक्षणा निरासविचारः

वेदान्तिनः सामान्यस्वरूपमेव न स्वीकुर्वन्ति। अतस्तेषां नये सामान्यस्य सन्निकर्षत्वे मानमेव नास्ति। नित्यत्वेसति अनेकसमवेतत्वमिति सामान्यलक्षणमपि न सम्भवति। ब्रह्मणोऽतिरिक्तस्य पदार्थस्यास्वीकारात्। अथ च नित्यत्वघटित समवायसम्बन्धोऽपि न सम्भवति। समवायसम्बन्धं निराकुर्वद्भिर्वेदान्तिभिः प्रतिपाद्यते। समवायो न सम्बन्धः, तस्य सम्बन्धिनो वृत्तितयाऽप्रतीयमानत्वात्। वृत्तिनियामकाः यावन्तः संयोगादि संबन्धाः ते सम्बन्धि प्रत्यक्षे प्रत्यक्षतां यान्ति। समवायस्य प्रत्यक्षत्वमपि न सम्भवति। समवायि घटः इति प्रतीतिस्तु घटप्रत्यक्षे मानम्, नतु घटवृत्ति समवाये।

अथ च यथा वृत्तिनियामकसंयोगसम्बन्धस्य समवायसम्बन्धेन सम्बन्धिनो वृत्ति स्वीक्रियते तद्वदेव वृत्तिनियामकसमवायसम्बन्धस्यापि केनचित्सम्बन्धेन वृत्तिता स्वीकरणीया। यत्तु स्वरूपसम्बन्धेन समवायस्य वृत्तिता चीयते तत्तु न सम्भवति। स्वरूपसम्बन्धस्य प्रतियोग्यनुयोगिरूपत्वस्वीकारात् प्रतियोग्यनुयोगिभ्यां भिन्नत्वं न सम्भवति। अतः स्वरूप-सम्बन्धः प्रतियोगिरूपः अनुयोगिरूपो वा स्यात्? तस्य सम्बन्धिनोरनतिरिक्तत्वे सम्बन्धत्वमेव नास्ति। येन समवायस्यसम्बन्धिता नैयायिकैः अभिमता। समवायस्यास्वीकारे तत्सम्बन्धेन वृत्तित्वरूपस्य समवेतत्वस्यापि असिद्धिः। अतः नित्यत्वसमवेतत्वघटित सामान्यलक्षणम-सम्भवम्।

**'अयं घटः'** इति ज्ञाने यद्घटत्वं प्रकारतया भासते, तद्घटत्वं जातित्वे मानं नास्ति। घटत्वं घटे भासतेति घटत्व सत्तायां प्रमाणमस्ति। एतदतिरिक्तमपि सामान्यस्वरूपबोधकं किमपि लक्षणं नास्ति। सामान्ये अनुमानप्रमाणमपि न सम्भवति। सामान्यस्वरूपस्य अन्य प्रमाणेनासिद्धतया साध्याप्रसिद्धि दोषः सम्भवति। अतः यन्नैयायिकैः धूमसन्निकर्ष जाते धूमत्वसामान्येन सकलधूमानां सन्निकर्ष स्वीकुर्वन्ति तन्नसमीचीनम्। यत्तु महानसीयधूमे गृहीत व्याप्तिकस्य पुरुषस्य पर्वतीयधूमदर्शनेन व्याप्तिस्मरणं न सम्भवति। अतः धूमत्व सामान्येन

सकलधूमेषु वह्नित्व सामान्येन सकल वह्निनां व्याप्तिग्रहः स्वीकरणीयः। तन्निरासाय वेदान्तिनः अपरमेव व्याप्तिलक्षणं प्रतिपादयन्ति- **''अशेषसाधनाऽश्रयाश्रितसाध्यसामानाधिकरण्यं व्याप्तिः।''** लक्षणसमन्वयो यथा- वह्निमान् धूमादित्यत्र साधनं धूमः साधनता धूमनिष्ठा तदवच्छेदकं धूमत्वं तदवच्छिन्नाः पर्वतीयचत्वरीयादिधूमव्यक्तयः साधनरूपाः तदाश्रयाः पर्वतादयः, तानेवाश्रिता याः साध्यव्यक्तयः, ताश्चापि साध्यतावच्छेदकं यद्वह्नित्वं तदवच्छिन्ना एव तासां धूमत्वावच्छिन्नधूमव्यक्तीनां वह्नित्वावच्छिन्नवह्निव्यक्तीनां यत् सामानाधिकरण्यं पर्वतादौ वृत्तित्वं **'यत्र यत्र धूमस्तत्र तत्र वह्निः'** इत्यादिरूपं यस्य व्याप्तेः सा तथा। धूमवान्वह्निरित्यादौ यथा कथंचित् महानसीयवह्निव्यक्त्या महानसीयधूमव्यक्तिसाधनेऽपि नातिप्रसङ्गः। यद्यपि तत्र महानसीयधूमवह्नयोः सामानाधिकरण्यं दृष्टं तथाऽप्ययोगोलके व्यभिचारात् साधनतावच्छेदकावच्छिन्नेन वह्निना सामानाधिकरण्यं तास्ति। अतः सामान्य-लक्षणायाः प्रयोजनमेव नास्ति।

## (ङ) सामान्यलक्षणास्वीकारे युक्त्युद्भावनम्

एतद्स्वरूपविषये प्राचीनानां तार्किकाणां नव्यानाञ्च मतभेदः दृश्यते।

अत्र प्राचीनास्तार्किकाः नयनसम्बद्ध चाक्षुषप्रकारतापन्न घटत्वादिकमेव भूतभविष्य-कालीनानां सर्वेषां घटानां प्रत्यक्षे सन्निकर्षः।

नव्यमतेतु स्वप्रकारीभूत घटत्वाद्याश्रय विषयतासम्बन्धेन चक्षुरादिसम्बद्धघटादि-विशेष्यक कलशत्वादिप्रकारकं चाक्षुषादिकं सन्निकर्षः। अथवा स्वविषयीभूत घटत्वाद्याश्रय-विषयतासम्बन्धेन कलशत्वादिज्ञानमेव सन्निकर्षः। इत्थंप्रकारेण सामान्यलक्षणास्वरूपविषये नव्यप्राच्यानां मतभेदः दृश्यते।

इममेवाभिप्रायमभ्युपेत्य रघुनाथशिरोमणिना दीधितिग्रन्थे इत्थं प्रकारेण व्युत्पत्तिः प्रदर्शिता- **सामान्यं लक्षणं स्वरूपं यस्याः सा सामान्यलक्षणा**, अनयाव्युत्पत्या सामान्य-स्वरूपैव सामान्यलक्षणप्रत्यासत्तिर्भवति। उक्तञ्च दीधितौ "**अत्र च सामान्यं लक्षणं स्वरूपं यस्या इत्यर्थे सामान्यमेव प्रत्यासत्तिः। सामान्यं लक्षणं निरूपकं यस्याः इत्यर्थे तु तज्ज्ञानम्।**"[1]

अस्यायमाशयः प्रथम व्युत्पत्या सामान्यलक्षणाघटक लक्षणशब्दः स्वरूपवाचको-भवति। अतः सामान्यलक्षणशब्देन सामान्यस्वरूपैव प्रत्यासत्तिः।

अत्र च लक्षणशब्दस्य निरूपकत्व स्वरूपमर्थमभ्युपेत्य सामान्यलक्षणायाः सामान्य-विषयकज्ञानमेवार्थः। तथा च सामान्यविषयकज्ञानमेव प्रत्यासत्तिः। उक्तञ्च चिन्तामणौ- "**सा च इन्द्रियसम्बद्ध विशेषणताऽतिरिक्तैव वा।**"[2]

अत्रेयं जिज्ञासाजायते यज्ज्ञानविषयीभूतं सामान्यं अथवा सामान्यविषयकं ज्ञानं सामान्यलक्षणप्रत्यासत्तिः भवतु नाम। परन्तु तादृशस्य परिगणित षड्विधसन्निकर्षेषु

---

[1] सामा०ल० दी- पृ० 11, 12
[2] सामा०ल० चि- पृ० 12

गणनाभावात् तस्याः सामान्यलक्षणायाः प्रत्यासत्तित्वं कथं वक्तुं शक्यते। इत्याकारक जिज्ञासामेव मणिकृता सामान्यलक्षणा विषये इत्थमुक्तं यत्सा इन्द्रियसम्बद्ध-विशेषणतारूपाऽतिरिक्तैव वा। इत्थं प्रकारेण सामान्यलक्षणायाः विशेषणतास्वरूपतया तस्याः विशेषणतायामेव समावेशान्नहि तस्या सामान्यलक्षणायाः गणित प्रत्यासत्तिष्वनन्तरभावः। अथवा षड्विधगणनालौकिकप्रत्यासत्तिषु विद्यते, न तु इयं गणनाऽलौकिकप्रत्यासत्तिपरा। ममेव आशयं परिष्कर्तुं मणिकृताऽतिरिक्तैव सामान्यलक्षणा भवति।

अस्यायमाशयः परिगणित षड्विधप्रत्यासत्यतिरिक्तैव सामान्यलक्षणाप्रत्यासत्तिः। तत्र प्रथममिन्द्रियसम्बद्धविशेषणतायाः सामान्यलक्षणात्वमभ्युपेत्य सामान्यलक्षणाप्रत्यक्षयोः इत्थं प्रकारेण कार्यकारणभावोभवति। **''इन्द्रियसम्बद्धविशेषणता इत्यत्र भावार्थो न विवक्षितः।''**[1] अत्र विशेषणतायाः विशेषणस्वरूपत्वमेवार्थः। विशेषणतेत्यत्र भावार्थस्या-विवक्षितत्वादथवा विशेषणता पदं लक्षणावृत्तया धूमत्वाद्यर्थकम्। तथा च विशेषणतापद-बोध्यत्वं सामान्ये अक्षतमेव।

इन्द्रियसम्बद्धेत्यत्र सम्बद्धपदमिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारार्थकमेवञ्चेन्द्रियसम्बद्ध-विशेषणताया एव सामान्यलक्षणप्रत्यासत्तित्वं सुकरम्।

एवञ्च तत्तद्विषयकालौकिकप्रत्यक्षं प्रति सामान्यलक्षणाप्रत्यासत्तेः जनकत्वे इत्थं प्रकारेण भवति कार्यकारणभावः। अलौकिकमुख्यविशेष्यतासम्बन्धेन तत्पुरुषीयधूमत्वप्रकारक चाक्षुषत्वावच्छिन्नं प्रति तत्पुरुषीय चक्षुसन्निकृष्टधर्मिकचाक्षुषप्रकारतापन्न धूमत्वं हेतुः। अत्रालौकिक मुख्यविशेष्यत्वं कार्यतावच्छेदकसम्बन्धः। कारणावच्छेदकसम्बन्धश्च समवायः। एवञ्चालौकिकमुख्यविशेष्यतासम्बन्धेन धूमाः इत्याकारकालौकिकप्रत्यक्षत्वावच्छिन्नं प्रति तत्पुरुषीयचक्षुःसन्निकृष्टः संयोगसम्बन्धेन सम्बन्धीधूमः तद्विशेष्यकं यत्तद्पुरुषीय चक्षुःसन्निकृष्टः संयोगसम्बन्धेन सम्बन्धी धूमः, तद्विशेष्यकं यत्तद्पुरुषीय चाक्षुषं धूमः इत्याकारकं तत्र

---

[1] सा०ल० दी०- पृ० 13

प्रकारतापन्नं यद्धूमत्वं तदेव सामान्यलक्षणाप्रत्यासत्तिः। तादृशधूमत्वरूपायाः प्रत्यासत्तेः सकलेषु भूतभाविवर्तमानेषु धूमेषु विद्यमानत्वात् भवति धूमत्वस्वरूपसामान्यलक्षणप्रत्यासत्या सकलधूमविषयकं धूमाः इत्याकारकं प्रत्यक्षम्।

इत्थं प्रकारेण धूमत्वात्मक सामान्यलक्षणप्रत्यासत्या सः धूमत्वप्रकारकालौकिक चाक्षुषप्रत्यक्षस्य भवति कार्यकारणभावः।

एतद्कार्यकारणभावे तत्पुरुषीयत्वस्थाने यदि यत्किञ्चित्पुरुषीयत्वं निवेश्यते तदा यत्किञ्चित्पुरुषीय चक्षुसन्निकृष्टधर्मिक चाक्षुषप्रकारतापन्न धूमत्वादेः कारणत्वाभ्युपगमे एकपुरुषीय चक्षुस्सन्निकृष्टधर्मिक चाक्षुषप्रकारतापन्न धूमत्वकाले पुरुषसामान्यस्यैव निखिलं धूमविषयकचाक्षुषप्रत्यासत्तिः। अतः कार्यकारणभावकुक्षौ यत्किञ्चित्पुरुषीयत्वमनिवेश्य तत्पुरुषीयत्वस्य निवेशः कृतः। यदि च तत्पुरुषीयत्वमनिवेश्य पुरुषसामान्यीयत्वं निवेश्यते तदा पुरुषसामान्य चक्षुस्सन्निकृष्टधर्मिक चाक्षुषप्रकारतापन्नधूमत्वस्य हेतुत्वं लभ्यते। एवञ्च युगपत्समस्तपुरुष चक्षुस्सन्निकृष्टधर्मिक चाक्षुषप्रकारतापन्नधूमत्वादेः असम्भवेन कस्यापि धूमत्वप्रकारता निखिलधूमविशेष्यक चाक्षुषन्न स्यात्। तथा च कार्यकारणभाव कुक्षौ तत्पुरुषीयत्वमेव निवेशनीयम्। न तु यत्किञ्चित्पुरुषीयत्वन्न वा पुरुषसामान्यीयत्वम्।

यद्यत्र कारणतावच्छेदक प्रथमतत्पुरुषीयत्वन्न निवेश्यते चेत् तदा प्रथमं तत्पुरुषीय चक्षुस्सन्निकर्षाधीनं तदीय धूमत्वप्रकारकं चाक्षुषं जातम्, तस्मिन्नेवकाले तत्पुरुषीयचक्षुस्सन्निकर्षस्य विनाशः पुरुषान्तरीय चक्षुस्सन्निकर्षश्च समुत्पन्नः। तत्र तत्पुरुषस्य धूमत्वेन निखिलधूमस्य प्रत्यक्षापत्तिः। अतः प्रथमतत्पुरुषीयत्व निवेशः।

एवं द्वितीयतत्पुरुषीयत्वस्यानिवेशे तत्पुरुषीय चक्षुसन्निकर्षोत्पत्तिकाले एव पुरुषान्तरस्य यत्र धूमत्वप्रकारकचाक्षुषं जातम्। तत्र तत्पुरुषस्य धूमत्वेन निखिलधूमप्रत्यक्षापत्तिस्यात्। तदुपादाने च तत्पुरुषीय चक्षुसन्निकर्षस्य धूमे विद्यमानत्वेपि तदीय चाक्षुषप्रकारताया धूमत्वे नैष दोषः।

यद्यपि विशिष्ट बुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानस्य कारणत्वेन तदभावादेवोक्त स्थले धूमत्वेन सकलधूमप्रत्यक्षस्यासम्भवात् द्वितीयतत्पुरुषीयत्वनिवेशः निरर्थकस्यात्।

इत्येवं वक्तुं न शक्यते। यत्पुरुषस्य धूमत्वविषयकस्मरणकाले चक्षुधूमसन्नि-कर्षोत्पत्तिः, पुरुषान्तरीय चाक्षुषञ्च, तत्रैव उत्तरक्षणे तत्पुरुषीय चाक्षुषापत्ति स्यात्। यतोहि विशिष्टप्रत्यक्षं प्रतिविशेषणप्रत्यक्षत्वेन नहिकारणत्वं स्वीकर्तुं शक्यते। सुरभिचन्दनमित्यादौ सौरभाद्युपनीत भानस्थले व्यभिचार दोषात्। यद्यपि सामान्यस्य प्रत्यासत्तित्वे घटवत्वप्रकारेण एकघटवत्ताप्रकारक प्रत्यक्षानन्तरं घटवत्वरूपसामान्यलक्षणप्रत्यासत्या सकलघटवतः प्रत्यक्षं न स्यात्। इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापन्न घटव्यक्तेः घटान्तरवत्यभावात् कथं घटवत्वरूप-सामान्यलक्षणप्रत्यासत्या सकल घटवतः प्रत्यक्षं न स्यात्?

अतेवोक्तं शिरोमणिना- ''**सखण्डेचाऽखण्डमेव प्रत्यासत्तिः**''[1]। एवञ्च सामान्य-लक्षणप्रत्यक्षयोः इत्थं प्रकारेण कार्यकारणभावः। तथाहि- स्वीयघटत्वावच्छिन्नप्रकारतानिरूपित अलौकिकमुख्यविशेष्यतासम्बन्धेन घटवत्वप्रकारकचाक्षुषत्वावच्छिन्नं प्रति तत्पुरुषीय चक्षुस्सन्निकृष्ट तत्पुरुषीयघटत्वादिप्रकारकचाक्षुषत्वावच्छिन्नं कारणं। एतत्कल्पेऽपि कार्यताव-च्छेदकसम्बन्धः अलौकिकमुख्यविशेष्यत्वम्। कारणतावच्छेदकसम्बन्धश्च स्वप्रकारीभूतसामा-न्याश्रयनिष्ठविशेष्यत्वम्।

इत्थं प्रकारेण सामान्यविषयकज्ञानस्य सामान्यलक्षणात्वं स्वीक्रियते चेत् तर्हि यादृशस्थले चक्षुस्सन्निकृष्टधूमवत्धर्मिकप्रकारताश्रयस्य धूमस्याविद्यमानत्वेपि तद्विषयक स्मरणात्मकज्ञानस्य विद्यमानत्वात्भवति धूमवद्विषयकज्ञानात्मकसामान्यलक्षणप्रत्यासत्या सकल-धूमवतां धूमवन्तः इत्याकारकालौकिकप्रत्यक्षस्योपपत्तिः।

अथ सामान्यस्यप्रत्यासत्तित्वमनभ्युपेत्य यदि सामान्यविषयकंज्ञानं प्रत्यासत्तिः इत्येवं स्वीक्रियते चेत् तर्हि सामान्यलक्षणायाः सामान्यविषयकज्ञानस्वरूपतया ज्ञानलक्षणायाऽपि

---

[1] सामा०ल० दी- पृ० 34

ज्ञानस्वरूपतया तयोः भेदो न स्यात्। इत्येवं प्रतिपादयितुं न शक्यते। सामान्यलक्षणाप्रत्यासत्तिस्थले यावद्घटविषयकप्रत्यक्षं सौरभत्वविषयकज्ञानात्मक सामान्यलक्षणप्रत्यासत्या सौरभत्वाश्रयस्य यावत् सौरभस्यालौकिकं प्रत्यक्षं जायते। परन्तु सौरभत्वविषयक ज्ञानस्वरूपात्मकज्ञानलक्षणाप्रत्यासत्या सौरभत्वस्यैवालौकिकंप्रत्यक्षं भवति, न तु तदाश्रयस्यसौरभस्य। अतेवोक्तं विश्वनाथेन मुक्तावल्यां-

**आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते।**
**विषयीयस्य तस्यैव व्यापारो ज्ञानलक्षणः॥**[1]

इत्थं प्रकारेण सामान्यलक्षणप्रत्यासत्या सामान्याश्रयस्यालौकिकं प्रत्यक्षं तथा ज्ञानलक्षणा प्रत्यासत्या यद्विषयकं ज्ञानं तत्प्रत्यक्षे एव कारणं भवतीति अनयोर्प्रत्यासत्योर्भेदः कल्पनीयः।



[1] न्या०सिमु०- प्र०खं०- का०-64

# पञ्चमोऽध्यायः

## (क) ज्ञानलक्षणास्वरूपसमीक्षणम्

न्यायदर्शने ज्ञानलक्षणोऽपि अलौकिकः सन्निकर्षः प्रत्यक्षप्रमाहेतुत्वेन स्वीकृतोऽस्ति। तस्य स्वरूपं चेत्थं ज्ञानलक्षणं स्वरूपं यस्य सः ज्ञानस्वरूप इति यावत्। यद्यपि सामान्यलक्षणोऽपि सन्निकर्षो ज्ञानरूप एव। तथापि सामान्याश्रयस्य सकलस्य प्रत्यक्षं सामान्यलक्षणेन, ज्ञानलक्षणेन तु यद्विषयकं ज्ञानं तद्व्यक्तिरूपविषयस्यैव प्रत्यक्षं भवति, **"विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः"** इति वचनात्।[1] यथा सुरभिचन्दनमिति प्रत्यक्षे सौरभांशेऽयं सन्निकर्षः, चन्दनांशे संयोगः सन्निकर्षश्चक्षुः, इति उभाभ्यां सन्निकर्षाभ्यामेकं चाक्षुषप्रत्यक्षसुत्पद्यते। तत्र सौरभांशेऽपि योऽयमलौकिकः सन्निकर्षः, सोऽपि चक्षुष एव, इन्द्रियसंयुक्तमनःसंयुक्तात्म समवेतज्ञानस्यैव तादृशज्ञानविषयत्वस्यैव वा सन्निकर्षत्वस्वीकारात्। एवं चोक्तस्थले चक्षुःसंयुक्तं मनोऽस्त्येव, तत्संयुक्तश्चात्माऽप्यस्त्येव। तत्रात्मनि सौरभादे स्मृत्यादिरूपं ज्ञानमपि पूर्वतनघ्राणजप्रत्यक्षाद्यनुभवजनितोद्बुद्धसंस्कारबलेनोत्पन्नमेवेति तदेव ज्ञानं तद्विषयत्वं वा इदानीं चाक्षुषे जननीये सौरभादिविशेषणेन सह चक्षुषः सन्निकर्षो ज्ञानलक्षण इति गीयते।

किञ्च, इदं रजतमित्यादिभ्रमेऽपि इदमंशे (विशेष्यांशे) चक्षुःसंयोगः, रजतांशे हट्टस्थरजतस्मृतिरूपो ज्ञानलक्षणः सम्बन्धः- इत्युभाभ्यां लौकिकालौकिकसन्निकर्षाभ्यामेकं भ्रमात्मकं चाक्षुषं जायते। एवं सर्वत्र भ्रमे विशेषणांशे ज्ञानरूपोऽयमेव सम्बन्ध उपयुज्यते।

---

[1] न्या०सि०मु०, प्र०खं०, कारि०- 65

## अस्य सम्बन्धस्यानङ्गीकारे शाब्दिकमतम्

यद्यपि प्रत्यक्षहेतुत्वेनायमपि सम्बन्धो न क्वापि मुनित्रयेण शब्दतः संगृहीतः, नाऽपि च प्रत्याख्यातः। तथाऽपि **"श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः"** इति भाष्यग्रन्थव्याख्यानावसरे[1] भाष्यकृदभिप्रायं प्रकाशयता श्रीनागोजिभट्टेनोद्योते यदुक्तम्, तेनास्य सम्बन्धस्थ प्रत्यक्षहेतुता स्फुटं निरस्ता भवति। तथाहि- **"संस्कारविशिष्टान्तः-करणसंयुक्तेन संयुक्तपूर्वपूर्वध्वन्यनुभवोत्पादितसंस्कारविशिष्टश्रोत्रसम्बद्धेनान्त्यवर्णेन प्रत्यक्षायमाणेन स्फोटरूपपदप्रत्यक्षा"** इत्युक्तं तत्र। तस्यायमाशयः- संस्कारद्वारा श्रोत्रसम्बद्धेऽन्तः-करणेऽन्त्यवर्णाकारा या वृत्तिर्जायते, सैव प्रत्यक्षं प्रमाणं कीर्त्यतेऽत्र दर्शने। प्रत्यक्षीक्रियमाणेनान्त्यवर्णेनैव अखण्डः स्फोटोऽभिव्यज्यते (प्रत्यक्षीक्रियते) पूर्वपूर्ववर्णानुभवजनितसंस्काराणां सहकारित्वेनेत्थं सामर्थ्यं तादृशेऽन्त्यवर्णे सूपपद्यते, येनाखण्डस्फोटस्याभिव्यक्तिः सम्पाद्यते। संस्कारद्वारैव प्रत्येकं पूर्ववर्णेष्वपि व्यञ्जकता हर्यादिसम्मता[2] विस्मर्तव्या। अत्र च न ज्ञानलक्षणप्रत्यासत्त्यवसरः, यतो हि पूर्वपूर्ववर्णानुभवजनितसंस्कारैस्तत्स्मरणैर्वा सहकृतेनाऽन्त्यवर्णीयश्रोत्रसमवायसन्निकर्षेण सर्वेषां वर्णानामेकं श्रावणप्रत्यक्षं यदि सम्भवेत् तदा स्यात्तदवसरः, तच्च नैव सम्भवति, घटादिपदस्यास्मन्मतेऽखण्डत्वात्। न च समुदायभावापन्नस्य ध्वन्यात्मकशब्दस्यानया रीत्या प्रत्यक्षं क्रियताम्, पश्चात् स्फोटोऽभिव्यज्यताम्। अनेन प्रत्यक्षेण ध्वनिनेति साम्प्रतम्, समुदायस्यासम्भवेन प्रत्येकं वर्णेष्वेव व्यञ्जकत्वस्य सिद्धान्तयिष्यमाणत्वात्।[3]

## लघुमञ्जूषायां तु कण्ठत एवेयं प्रत्यासत्तिः प्रत्याख्याता

श्रीनागेशभट्टेन लघुमञ्जूषायां तु अस्य सन्निकर्षत्वमेव न स्वीकृतम्, प्रत्यक्षहेतुत्वस्य का चर्चा? तथा हि ज्ञानलक्षणे प्रतियोगित्वानुयोगित्वनिरूपकत्वाभावेनोभयवृत्तित्वाभावेन च सम्बन्धत्वमेव नास्ति, इच्छादिवत्। ज्ञाननाशेऽस्य स्वरूपमेव नावतिष्ठेत, नापि ज्ञानलक्षणे-

---

[1] म0भा0, 1 अ0, 1 पा0, 1 आ0, "अ इ उ ण्" सूत्रे, पृ0 96
[2] वा0प0 1-88। ल0म0, र0प्र0 टीका च, शक्त्याश्रयनिरू0, पृ0 151
[3] वा0प0 1-88

त्यनेन ज्ञानविषयत्वं सम्बन्धतया स्वीकर्तुमर्हम्, ज्ञानविषयोभयस्वरूपाया ज्ञानविषयताया ज्ञाननाशे सति वक्तुमशक्यत्वात्।

अतश्च संस्कारचक्षुःसन्निकर्षाद्युभयजन्यं ज्ञानान्तरमेवैतत् सुरभि चन्दनमित्यादि। एवं च स्मृतित्वानुभवत्वयोः शङ्कितं साङ्कर्य्यमपि दूरं गतम्।[1]

## उक्तविषये श्रीमन्तो दुर्बलाचार्याः

सुरभि चन्दनमित्यत्र चन्दनत्वेनहेतुनासुरभित्वमनुमीयते इत्यनुमितिरियम्। अन्यथा **'पर्वतो वह्निमान्'** इत्यादावपि ज्ञानलक्षणसन्निकर्षेण साध्यस्य, इन्द्रियसन्निकर्षेण पक्षस्य च प्रत्यक्षमेव स्यात्, **'अनुमानप्रमाणं मा प्रसरत्''** इति निरवोचन् शाब्दिकप्रवराः श्रीदुर्बला-चार्याः कुञ्जिकायां[2] लघुमञ्जूषाटीकायाम्।

## अद्वैतवेदान्तनयेऽपि ज्ञानलक्षणसन्निकर्षस्य नास्ति प्रत्यक्षहेतुता

अद्वैतवेदान्तिनामपि मते ज्ञानस्य प्रत्यासत्तित्वं नास्त्येव, तथा सति पर्वतादौ पक्षे तत एव वह्न्यादेर्ज्ञानेऽनुमानोच्छेदः स्यात्। यद्यपि **'घटमहं जानामि'** इत्यनुव्यवसायो मानस-प्रत्यक्षरूपो मनसो घटेन सह सम्बन्धमन्तराऽनुपपद्यमानो मनसो घटे स्वसंयुक्तात्मसमवेतज्ञान-विषयत्वरूपं सम्बन्धे कल्पयतीति पूर्वस्य व्यवसायरूपज्ञानस्य सम्बन्धत्वमायाति। तथापि अयं प्रकारो न समीचीनः, ज्ञानस्य स्वप्रकाशतयाऽनुव्यवसायस्य (मनोजन्यज्ञानान्तरस्य) स्वीकारे मानाभावात्।

सुरभि चन्दनमित्यादिचाक्षुषेऽपि असन्निकृष्टसौरभविषयकत्वाङ्गीकारेणोपपत्तिः, संस्कारस्य सहकारित्वात्, प्रत्यभिज्ञावत्। तादृशसन्निकर्षकल्पने तु गौरवमिति भ्रमस्थले प्रमात्वाप्रमात्वयोरिवात्र परोक्षत्वापरोक्षत्वयोरपि एकत्र ज्ञाने सत्तायां बाधकाभावेन सर्वेष्टं सिद्ध्यति।[3]

---

[1] द्र०-ल०म०, र०प्र०, पृ० 218
[2] द्र०-ल०म०, कु०टी०, पृ० 257
[3] द्र०-वे०प०, शि०म०, म०प्र०, प्र० पारि०, पृ० 117

## ( ख ) सामान्यलक्षण ज्ञानलक्षणयोर्भेदव्यवस्थापनम्

ज्ञानलक्षणस्वरूपं निरूप्य अथेदानीं ज्ञानलक्षणसामान्यलक्षणयोर्भेदः निरूप्यते। सामान्यलक्षणसन्निकर्षेण धूमत्वादि सामान्यं गृहीत्वा धूमत्वेन सकलधूमानां परिग्रहो भवति। सामान्यलक्षणपदस्य व्युत्पत्तिः सामान्यं जातिः, घटादि व्यक्तिश्च तदेव लक्षणं स्वरूपात्मा यस्य व्युत्पत्या जात्यात्मको व्यक्त्यात्मकश्च सन्निकर्षः परिचीयते। ज्ञानमेवलक्षणं स्वरूपं यस्य सः ज्ञानात्मको सन्निकर्षः। सामान्यलक्षणसन्निकर्षेण व्यक्तिनिष्ठजातिग्रहणेन सर्वाषां व्यक्तीनां ग्रहो भवति। जातेः व्यक्तिसापेक्षत्वेन व्यक्तिग्रहे जातेरपि ग्रहो भवति। जातिग्रहश्च सर्वाषां व्यक्तीनां ग्राहको भवति। इदमेव वैशिष्ट्यं सामान्यलक्षणायाः।

यद्यपि एककालावच्छेदेन सर्वाषां धूम व्यक्तीनामिन्द्रियेण सह सन्निकर्षाभावात् प्रत्यक्षात्मकं ज्ञानं न सम्भवति। तथापि धूमव्यक्तिवृत्ति सामान्यस्य सन्निकर्षात् सकलधूमव्यक्तीनां ज्ञानं सम्भवति। अतएव एकस्यां महानसीयधूमव्यक्तौ महानसीयवह्नेः साहचर्यज्ञानेसति सामान्यलक्षणसन्निकर्षेण सार्वासु धूम व्यक्तिषु व्याप्तिग्रहो सम्भवति। अतएव पर्वतीय धूमज्ञानेनापि व्याप्तेः स्मरणं सम्भवति। एवमेव एकस्याः महानसीयवह्निव्यक्तेः इन्द्रियसन्निकर्षेण धूमव्यक्तौ साहचर्यज्ञानेसति वह्निवृत्ति वह्नित्वसामान्यज्ञाने सर्वाषां वह्निव्यक्तीनां साहचर्यज्ञानं सम्भवति। इन्द्रियसन्निकृष्टावह्निव्यक्ति वह्नित्वेन सकलवह्निनां सामान्यलक्षणसन्निकर्षेण प्रतिबोधको भवति। सामान्यलक्षणासन्निकर्षस्यास्वीकारे सकल-वह्निव्यक्तीनां सकलधूमव्यक्तिषु साहचर्यज्ञानं न सम्भवति। अतः सामान्यलक्षणसन्निकर्षः अभिमतः।

ज्ञानलक्षणसन्निकर्षस्तु इन्द्रियसन्निकृष्ट चन्दनखण्डव्यक्तिज्ञानद्वारा तद्वृत्ति सौरभस्य बोधको भवति। ज्ञानलक्षणासन्निकर्षानङ्गीकारे प्राग्दिने घ्रात्वाऽनुभूतस्य 'सुरभिचन्दनस्य'-अपरदिने दूराच्चक्षुःसंयोगमात्रेण 'सुरभिचन्दन'मिति यज्ज्ञानमलौकिकं सौरभस्य जायते

तत्रेन्द्रियसन्निकर्षाऽभावेन केन सन्निकर्षेण सौरभस्यालौकिकभानं स्यात्, अतः तादृशाऽलौकिकप्रत्यक्षविषयताव्यापकस्तत्र ज्ञानलक्षणात्मकः सन्निकर्षः स्वीकार्य।

तत्र चन्दनखण्डस्य संयोगात्मकसन्निकर्षद्वारा प्रत्यक्षात्मं ज्ञानं सम्भवति। सौरभस्य ज्ञानं ज्ञानलक्षणाप्रत्यासत्तिद्वारा सम्भवति। जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमेन सौरभत्वजातौ तु केनाऽपि धर्मेणज्ञानाऽनुत्पादात् सौरभत्वस्य स्वरूपतोऽलौकिकमानसः साक्षात्कारो ज्ञानलक्षणाजन्य एव भवतीति तदर्थं ज्ञानलक्षणाया आवश्यकत्वात्।

उक्तञ्च न्यायसिद्धान्तमुक्तावल्यां-[1]

**"यद्यपि सामान्यलक्षणयापि सौरभभानं संभवति, तथापि सौरभत्वस्य भानं ज्ञानलक्षणया।"**

[1] न्या0सि0मु0, प्र0खं0, पृ0 216

## ( ग ) ज्ञानलक्षणा स्वीकारे युक्ति प्रदर्शनम्

ज्ञानलक्षणासन्निकर्षस्यास्वीकारे **'सुरभिचन्दन'**मित्यत्र सौरभविषयकज्ञानस्य स्मृतित्वापत्तिः स्यात्। अथ चान्येषामपि तद्वृत्तिज्ञातधर्माणां प्रत्यक्षत्वापत्तिः स्यात्। लक्षणास्वीकारे हि पूर्वानुभूत सौरभस्यैव भानं सम्भवति। ज्ञानलक्षणासन्निकर्ष महिम्ना धूलीपटले धूमस्य भ्रमे जाते सति वह्ने तत्र स्थिते सति धूलीपटलज्ञानेनानुमितिर्भवत्येव। तत्र धूमत्वं धूलीपटले जातिर्नास्ति, तथापि ज्ञानलक्षणाप्रत्यासत्या जात्यतिरिक्तपदार्थस्य किञ्चिद्धर्मप्रकारेण भानं सम्भवति।

यदा, धूमत्वेन धूलीपटलभ्रमो जातस्ततो **'धूमत्वावच्छिन्नधूलीपटलभ्रमवानहम्'** इत्यनुव्यवसायज्ञानं मनसा जातम्, अत्रानुव्यवसाये धूमत्वं धूलीपटलं भ्रमश्चेति त्रयं भासते, ज्ञानज्ञानस्यापि ज्ञानविषयकत्वात्, तथा च तत्र भ्रमांशविषयकानुव्यवसायो मनस्संयोगसन्निकर्षजन्यः, धूमत्वांशविषयको धूलीपटलांशविषयकश्चानुव्यवसायो मनस्संयुक्तात्मसमवेतभ्रमात्मकज्ञानलक्षणासन्निकर्षजन्य एव भवति। अप्यसंभवाच्च। तत्र ज्ञानलक्षणया धूलीपटलं किञ्चिद्धर्मधूमत्वप्रकारेण विषयीभवतीति।

## (घ) योगजसन्निकर्षस्वरूपविचारः

ग्राह्य-ग्रहण-ग्रहीतृभेदेन त्रिधावर्त्तमानानां पदार्थानां योगबलेन साक्षात्कारे कृते सति सर्वदुःखानामेकान्तात्यन्ततो नाशः संभवति, यतोहि निरोधकाले एव ज्ञः पुरुषः दुःखाधारभूत-बुद्धितः पृथग् भवति, स्वरूपेणावतिष्ठते, स्वरूपज्योतिरमलः केवली भवति। सच निरोधस्तत्वज्ञानमन्तरा न शाश्वतिको भवति, इति नान्तरीयकं खलु योगस्य सांख्यम्। वैकल्पिकमवास्तवं तत्त्वज्ञानं न खलु वास्तवदुःखनाशायालम्। अतः सांख्ययोगविद्याप्रमेयाः साक्षात्कारयोग्याः सद्भूतपदार्थाः स्थूलसूक्ष्मकारणद्रव्यगताः। केवलया मेधया श्रुतेन तर्केण च योगमन्तरेण नैषामधिगमः कर्तुं शक्यते। समाधिचितिशक्त्यादयः पदार्था अलौकिकाः, अतस्तेषां ज्ञानं न लौकिकप्रत्यक्षाधीनम्, प्रत्युत चित्तस्थैर्य विशेषाधीनम्।

योगाभ्यासजनितो धर्मविशेष आत्मस्थोऽलौकिकः सन्निकर्षः, अयमपि अलौकिक-प्रत्यक्षे हेतुरिति न्यायवैशेषिकयोर्मतम्। अयमपि सम्बन्ध इन्द्रियविषययोरेव, अनेन सम्बन्धेन अतीतानागतानामपि विषयाणां तत्तदिन्द्रियेण प्रत्यक्षजननात्। सम्बन्धस्वरूपं तु- स्वसंयुक्तमनः संयुक्तात्मवृत्तियोगजन्यधर्मविशेषवत्वम्। विषयेषु तादृशधर्मवत्त्वं च स्वाश्रयसंयोगसम्बन्धेन, विषयतासम्बन्धेन वा। अत्र धर्मेत्यस्य स्थानेऽदृष्टविशेषोऽपि वक्तुं शक्यते।

अत्र युक्तयुञ्जानभेदात् तज्जनितधर्मस्यापि द्वैविध्यं वेदितव्यम्। तत्र युक्तस्य योगिन ईश्वरानुग्रहविशिष्टमनः प्रसादवतो मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव उत्पद्यते। युञ्जानस्य तु चिन्ताविशेषोऽपि सहकारी, इति कादाचित्कं ज्ञानं तस्येति विशेषः।[1]

**श्रुतयोऽप्यत्र प्रमाणभूता उपन्यस्यन्ते**

**'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।**

**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥[2]**

---

[1] न्या०सि०मु०, प्र०खं०, कि०टी०, पृ० 217

[2] कठवल्ली, 1 अ०/2 म० 12

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा।**

**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः।।**[1]

**ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मनः सर्वमेवाविशन्ति।।**[2] इति।

एवं च यमनियमाद्यभ्यासजनितपुण्यात्मकसन्निकर्षेण धारणाध्यानसमाध्यात्मकसंयमापराभिधानचिन्तासहकृतेन युञ्जानयोगिनः कालान्तरीयदेशान्तरीयसूक्ष्मविप्रकृष्टपदार्थविषयकोऽलौकिकः साक्षात्कारो भवति।[3]

**मीमांसक नये योगजसन्निकर्षस्वरूपविमर्शः**

मीमांसका अपि योगजसन्निकर्षेणेन्द्रियविप्रकृष्ट भूतभावि पदार्थानां प्रत्यक्षत्वं स्वीकुर्वन्ति। योगजसन्निकर्षस्यास्वीकारे इन्द्रियविप्रकृष्टपदार्थानां भूतभावि पदार्थानाञ्च प्रत्यक्षत्वं न स्यात्। तदर्थं योगजसन्निकर्षः स्वीकर्तव्यः। विप्रकृष्ट पदार्थानां योगजसन्निकर्षेण प्रत्यक्षत्वं सम्भवति। तत्र प्रमाणं वाल्मीकिकृतरामायण महाकाव्यमस्ति। तत्र श्रूयते सीतामन्वेषणपराः कपयः यदा सिन्धु तटं सम्प्राप्ताः तदा सम्पातिनामा गृद्धराज अमिलत। स च योजनसत् व्यवहितामपि दशरथनन्दन सुन्दरीं सीतां दृष्ट्वा कपियूथं निवेदयति।

**''इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा।**
**अस्माकमपि सौवर्णं दिव्यं चक्षुर्बलं तथा।।**
**तस्मादाहारवीर्येण निसर्गेण च वानराः।**
**आयोजनशतात्साग्राद्वयं पश्याम नित्यशः।।**
**अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः।**
**विहिता पादमूले तु वृत्तिश्चरणयोधिनाम्।।''**[4]

---

[1] मु0 3, ख0-1, म0-8

[2] मु0 3, ख0-2, म0-5

[3] न्या0सि0मु0, प्र0खं0, कि0टी0, पृ0 217

[4] श्रीमद्वाल्मीकिरामायणम्, किष्कि0का0, वर्ग- 58, श्लोक- 29, 30, 31

एतेन ज्ञायते इन्द्रियविप्रकृष्ट विषयाणामपि ज्ञानं सम्भवति।

अथ च सामान्यजनानां चक्षुरेन्द्रियमालोकसापेक्षविषयव्यञ्जकं भवति। परन्तु मार्जारादि प्राणीनामालोकनिरपेक्ष चक्षुः घनाऽन्धकारे विषयप्रकाशकं भवति। उक्तञ्च न्यायमञ्जर्यां-

**''उन्दुरवैरिणस्तु सान्द्रतमतमः पङ्कपटलविलिप्तदेशपत्तिमपि संपश्यन्ति''[1]**

इदृल्लोलप्रमाणसिद्ध योगजप्रत्यक्षं मीमांसका। रपि अभ्युपगच्छन्ति। योगिनोऽपि प्रत्यक्षयोग्य पदार्थान्नेव योगजसन्निकर्षेण पश्यन्ति। अतः धर्माधमादीनां योगजसन्निकर्षेणाऽपि प्रत्यक्षत्वं न सम्भवति।

**''यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।**
**दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता।।''[2]**

सोऽतिशयः स्वार्थानतिलङ्घनात्। स्वार्थं स्वविषयमनतिलङ्घ्य दूरगं सूक्ष्मं वा स्वार्थं गृह्णातु, न पुना रूपे ग्रहणं श्रोत्रव्यापारादित्यर्थः।

**''येऽपि चातिशया दृष्टाः प्रज्ञामेधाबलैर्नृणाम्।**
**स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनादिति।।''[3]**

## अदृष्टपदार्था योगिप्रत्यक्षगम्या भवन्ति न वेति विचारः

अदृष्टभूतानां धर्माधर्मादीनां योगजसन्निकर्षेण प्रत्यक्षत्वं सम्भवति नवेति विचारः प्रसङ्गे विदुषां वैमत्यमस्ति। तत्र केचन प्रतिपादयन्ति-योगिनः योगजसत्याप्राणीनामदृष्टमपि प्रत्यक्षीकुर्वन्ति। तदेव योगजसत्तेः वैशिष्ट्यं यतो यद्यपि नास्मदादिनयनविषयो धर्मस्तथापि योगीन्द्रियगम्यो भविष्यति। तथाहि योजनशतव्यवहितमन्धकारान्तरितं वा नास्मदादिलोचन-गोचरतामुपयाति सम्पातिवृषदंशदृशोस्तु विषयो भवत्येव। प्रत्यक्षेयोग्ययोग्यापदार्थविषयक-ज्ञानवत्वेन योगिनां सर्वज्ञता स्वीक्रियते।

---

[1] न्या0म0, प्रमाणप्रकरणम्, पृ0 157
[2] न्या0म0, प्रमाणप्रकरणम्, पृ0 157
[3] न्या0म0, प्रमाणप्रकरणम्, पृ0 157

''एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते।
नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते॥''[1]

अयं श्लोकः धर्माधर्मादीनामप्रत्यक्षत्वेऽपि प्रमाणं भवति। यदि एकेनैवेन्द्रियेण सर्वेषां विषयाणां ज्ञानं सम्भवति तदा चक्षुरिन्द्रियेण योगिरसमपि गृह्णीयात्। एतस्वीकारे **'यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्'** इति कथनस्य विरोध आपद्येत। अत्र केचन आचार्याः धर्माधर्मादीनां सर्वथा प्रत्यक्षायोग्यत्वं स्वीकुर्वन्ति। यदि धर्माधर्मादीनामपि प्रत्यक्षत्वं स्यात् तदा तेषामदृष्टरूपता भज्येत। **'स्वर्गकामो यजेत'** इत्यादि श्रुतिगम्यो अर्थः न कथमपि अन्येन प्रमाणेनाधिगम्यो न भवति।

''ननु कर्तव्यतारूपस्त्रिकालस्पर्शवर्णितः।
चक्षुर्विषयतामेति धर्म इत्यतिसाहसम्॥''[2]

वेदान्तिनः अपि योगजसन्निकर्षं स्वीकुर्वन्ति। वेदान्तिभिरपि धर्माधर्मादीनां योगज-प्रत्यक्षगम्यता न स्वीकुर्वन्ति। तथा चोक्तं तत्वप्रदीपिकायाम्-

**''सर्वदर्शित्वशब्देन योग्यसर्वदृष्टत्वस्य विवक्षितत्वात्।''**[3] योग्य एव विषये दूरवर्तिनि सूक्ष्मे वा दर्शनं तत्र, न पुना रूपादौ श्रोत्रादेर्वृत्तिरिति।

**योगजसन्निकर्षे शब्दशास्त्राचार्याणां सम्मतयः**

इदानीं वास्तववर्तमानक्रियां तत्क्षणवर्तिनीं योगिप्रत्यक्षप्रमाणिकामाश्रित्य समाधत्ते, अपर आह- **''अस्ति वर्तमानः कालः''** इत्युद्योतग्रन्थदर्शनेन योगिनां प्रत्यक्षमस्मदादि-प्रत्यक्षापेक्षयाऽतिशयितशक्ति इति लभ्यते।

महाभाष्येऽपि योगिनां त्रिकालदर्शित्वं सूक्ष्मदर्शित्वं चोक्तम्। तथाहि-

---

[1] न्या०म०, प्रमाणप्रकरणम्, पृ० 158
[2] न्या०म०, प्रमाणप्रकरणम्, पृ० 158
[3] द्र०- म०भा०, प्र०उ०- 3/2/123

**'विसस्यबाला इव दह्यमाना न लक्ष्यते विकृतिः सन्निपाते।**

**अस्तीति तां वेदयन्ते त्रिभावाः सूक्ष्मो हि भावोऽनुमितेन गम्यः॥''** इति।

अत्रैव प्रदीपकृत्कैयटो भाष्यकारीयप्रत्यक्षपदस्य योगिप्रत्यक्षरूपमर्थं वदन् विलक्षणमिदं प्रत्यक्षं स्वीकरोत्येव।[1]

नवाह्निकमहाभाष्ये शब्दकौस्तुभे श्रीभट्टोजिदीक्षितोऽपि प्रत्यक्षधर्माण इति भाष्यप्रतीके **'योगजधर्मबलेन साक्षात्कृतधर्माणः'** इति कथनेन योगजधर्मेणेन्द्रियमनोनैर्मल्ये सति धर्मादिसूक्ष्मपदार्थस्यापि साक्षात्कारो भवतीति सम्मन्यते।[2]

लघुमञ्जूषाटीकायामपि **''चित्तं हि स्वयमेव सर्वार्थग्रहणक्षमं विभु च, तमोरूपावरणात् सदा सर्वं न गृह्णाति। अतस्तमोवर्धकानां विषयान्तरसञ्चारवासना-पापादीनां योगतः क्षये सति स्वयमेव ध्येयं वस्तु साक्षात्क्रियते''** इत्युक्तम्। ततोऽप्यस्य प्रत्यक्षस्य वैलक्षण्यं, यद्यपि स्फुटमायाति[3], तथापि न्यायादिदर्शनवदस्य योगज-धर्मस्य न स्वतन्त्रालौकिकसन्निकर्षत्वमपि तु एतद्बलेनेन्द्रियाणामन्तःकरणस्य च शक्तिरेवोपचिता भवतीति क्लृप्तसन्निकर्षैरेव निर्वाहे गौरवादस्य प्रत्यासत्तित्वं नाभ्युपेयामित्येवावसेयं भाष्य-प्रदीपोद्योतपर्यालोचनया।[4] प्रकाशयिष्यतेऽत्रत्यं भाष्यादिकं-

**''षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति''** इति निरूपणावसरे अत्रैव प्रत्यक्षप्रकरणे।

**श्रीनागेशभट्टसम्मतोऽस्यप्रत्यासत्तित्वनिरासप्रकारः**

लघुमञ्जूषायां श्रीमता नागेशभट्टेन योगजसन्निकर्षस्याङ्गीकारे गौरवमुद्भावितम्, तमोरूपप्रत्यक्षप्रतिबन्धकदोषस्य निरासे एवास्योपयोगो दर्शितः, संयोगादिरूपक्लृप्तसन्निकर्षैरेव

---

[1] द्र०- म०भा०, प्र०उ०- 3/2/123

[2] म०भा०श०कौ०- 1/1/1

[3] ल०म०, र०प्र०टी०

[4] म०भा०- 3/1/3

विप्रकृष्टादिवस्तुविषयकप्रत्यक्षव्यवस्था उपपादिता, भूतभाविनोरपि तदीयसूक्ष्मावस्थासन्निकर्षेणैव **'इदमेव भाविभूतञ्च'** इति प्रत्यक्षं भवत्येव, भग्नघटीयकपालेनाऽपि चक्षुषः संयोगे सति घट आसीदिति, अस्मदादिज्ञानमिवेति च प्रतिपादितम्।[1]

**बौद्धमतं योगजसन्निकर्षस्वरूपम्-**

अन्ये त्वन्यथा योगिप्रत्यक्षं व्याचक्षते-

**''भावनावलतस्पष्टं भयादाविव भासते।**

**यज्ज्ञानमविसंवादि तत्प्रमाणमकल्पकम्॥''**

योगिनामपि प्रश्रुतमयेन[2] ज्ञानेनार्थान् गृहीत्वा युक्तिचिन्तामयेन व्यवस्थाप्य भावयतां तन्निष्पत्तौ यत्स्पष्टावभासि ज्ञानं तत्प्रत्यक्षं, तच्चाविसंवादित्वात्प्रमाणं स्पष्टाभत्वादविकल्पकमिति। भयादाविवेति अर्थसामर्थ्येन समुद्भवाभावेनापि भावनाबलादेव स्पष्टं ज्ञानमुत्पद्यत इत्यत्र निदर्शनार्थम्। तदेव स्पष्टयति-

**कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः।**

**अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव॥**[3]

तत्र कामाद्युपप्लुतानामभूतभावनातः स्पष्टमपि ज्ञानं विसंवादित्वान्न प्रमाणम्। योगिनां तु भूतभावनातः चतुरार्यसत्यपरलोकादिदर्शनमविसंवादित्वात् प्रमाणम्।[4] तदेवोक्तम्-

**तस्माद् भूतमभूतं वा यद्यदेवाविभाव्यते।**

**भावनापरिनिष्पत्तौ तत्स्फुटाकल्पधीफलम्॥**

**तत्र प्रमाणसंवादि यत्प्राङ्निर्णीतवस्तुवत्।**

**तद्भावनाजं प्रत्यक्षमिष्टं शेषा उपप्लवा॥** इति।

---

1 द्र0- वा0प0 स्वोपज्ञटीका0- 1/83

2

3 प्र0वा0- 3/283

4 चतुरार्थसत्यम्- (1) दुःखम् (2) दुःखकारणं, (3) निरोधः, (4) मार्गः

## ( ङ ) योगजसन्निकर्षस्योपयोगित्वम्

इदमेव वैशिष्ट्यं योगजसन्निकर्षस्य यदिन्द्रियविप्रकृष्ट विषयस्य प्रत्यक्षजनकत्वम्। इन्द्रियविप्रकृष्टा यथा भूतभाविपदार्थेषु अस्ति तथैव द्रव्यान्तर व्यवहितेषु अथ च दूरस्थेषु विषयेष्वपि अस्ति। इन्द्रियविप्रकृष्टविषयाणां परिज्ञानं भौतिकैरिन्द्रियैः कर्तुं न शक्यते। संयोग, संयुक्तसमवाय, संयुक्तसमवेतसमवायादि षड्विधसन्निकर्षैः इन्द्रियाणीन्द्रियसन्निकृष्टविषयकं ज्ञानं जनयन्ति।

येच विप्रकृष्टविषयाः तैः सह संयोगात्मकः सन्निकर्षः न सम्भवति। इन्द्रियेण सः तेषां संयोगाभावात्। न च संयुक्तसमवायात्मकः सन्निकर्षः सम्भवति। संयुक्तसमवायात्मकः सन्निकर्षः संयोगसम्बन्धेन सम्बद्धेषु द्रव्येषु वृत्तीनां गुणादि पदार्थानां ज्ञानजनने उपयोगि भवति। इन्द्रियविप्रकृष्ट पदार्थाः द्रव्येषु वृत्तयः न सन्ति। अतः संयुक्तसमवायात्मकः सन्निकर्षेण तेषां परिज्ञानं न सम्भवति।

न च संयुक्तसमवेतसमवायात्मकसन्निकर्षेणेन्द्रियविप्रकृष्टविषयाणां परिज्ञानं सम्भवति। संयुक्तसमवेतसमवायात्मकः सन्निकर्षः द्रव्यसंयुक्त गुणादिवृत्ति जातिपरिज्ञाने कारणं भवति। विप्रकृष्ट पदार्थाः द्रव्यसमवेत गुणादिषु न वृत्तयः सन्तिः। अतः तेषां परिज्ञानं संयुक्तसमवेत-समवायात्मकसन्निकर्षेण न सम्भवति।

समवायात्मकः सन्निकर्षः आकाशवृत्ति शब्दप्रत्यक्षेकारणं भवति। श्रोत्रेन्द्रियस्याऽकाश-रूपत्वात् तत्र च समवायसम्बन्धेन शब्दस्य वृत्तित्वम्। अतः स एव सम्बन्धः शब्दप्रत्यक्षजनने हेतुर्भवति। इन्द्रियविषययोः यः सम्बन्धः भवति सः सम्बन्धः सन्निकर्षव्यापारात्मना तद्विषयक-ज्ञाने हेतुर्भवति। उक्तेषु सम्बन्धेषु कश्चिदपि सम्बन्धः इन्द्रियविप्रकृष्ट विषयैः सह न सम्भवति।

विशेषणाख्य संसर्गोऽपीन्द्रियविप्रकृष्टविषयाणां प्रत्यक्षज्ञाने हेतु न भवति। विशेष-णाख्यसंसर्गः अभावप्रत्यक्षे समवायप्रत्यक्षे च हेतुर्भवति। इन्द्रियविप्रकृष्टपदार्थानां भावरूप-त्वात्, समवायभिन्नत्वाच्च न विशेषणाख्यसंसर्गेण परिज्ञानं। सर्वशास्त्रविद्भिः इन्द्रियविप्रकृष्ट-

विषयणामपि योगजप्रत्यक्षगम्यताऽभिमता अतः तादृश प्रत्यक्षपरिज्ञानाय योगजसन्निकर्षः स्वीक्रियते। अस्माभिरज्ञातविषयानपि योगिप्रत्यक्षी करोति। यमनियमधारणाध्यानसमाधियुक्त-चेतसः एतत्सर्वं सम्भवति। तत्र युक्तयुञ्जानभेदेन योगिद्विधा। युक्तयोगि योगमहिम्ना सर्वस्मिन्काले सर्वान विषयान् साक्षात्करोतु। युञ्जानस्य यमविषयं प्रत्यक्षीकर्तुं संकल्पयति स विषयः प्रत्यक्षगोचरतामायाति। एतदेव योगजसन्निकर्षस्य महात्म्यम्।

## (च) निर्विकल्पकज्ञानप्रत्यक्षे सन्निकर्षस्वरूपविचारः

निर्विकल्पकसविकल्पकभेदेन ज्ञानस्य द्वैविध्यमभिमतम्। उक्ताः सन्निकर्षाः ज्ञानजनने हेतवः सन्तीति सम्यक्तया प्रतिपादितम्। परन्तु इमे सन्निकर्षाः सविकल्पक ज्ञान जनने हेतवः सन्ति, निर्विकल्पकज्ञानजनने वा? इत्याशंका जागर्ति। यतः सविकल्पकज्ञानात्पूर्वं निर्विकल्प-ज्ञानं सविकल्पकज्ञान हेतुत्वेन नैयायिकैः परिकल्पितः। तत्र सन्निकर्षस्योपयोगित्वमस्ति नवेति विचार्यते। पदार्थसंसर्ग रहितज्ञानं निर्विकल्पकत्वेन वेदान्तिभिरपि परिकल्पितम्। एवमेव अनेकैः दार्शनिकैः निर्विकल्पकज्ञानं परिकल्पितम्।

निर्विकल्पकज्ञानं सविषयकं भवतीति तस्य विषयः तर्हि चिन्तनीयः।

### विशिष्टज्ञाने निर्विकल्पकज्ञानस्य हेतुताविचारः

विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणत्वं वक्तव्यम्। नागृहीतविशेषणा बुद्धिर्विशेष्ये उपजायत इति नियमात्। तथा च दण्डीति ज्ञाने दण्डज्ञानं कारणम्। एवञ्चायं घट इत्याकारकं ज्ञानं विशेषणज्ञानपूर्वकं विशिष्टबुद्धित्वाद् दण्डीपुरुष इत्यादिबुद्धिवद्। इत्यनुमानेनायं घट इति ज्ञाने घटत्वादिज्ञानमवश्यं स्वीकार्यम्। तच्च घटत्वादिज्ञानं निर्विकल्पकमेव। अन्यथा तस्यापि सविकल्पकत्वे विशिष्टबुद्धित्वाद्विशेषणज्ञानं कारणत्वेन कल्प्यमित्यनवस्था स्यात्। विशेषणज्ञानाभावात् विशिष्टबुद्ध्यनुदयात्। तदुक्तं न्यासिद्धान्तमुक्तावल्याम्।[1]

**"चक्षुः संयोगाद्यनन्तरं घट"** इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति। पूर्वविशेषस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथा प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाहि एव ज्ञानं जायते। तदेव निर्विकल्पकम्। अयं भावः- घटेन सह चक्षुः संयोगानन्तरं द्रागेव किञ्चिदिति ज्ञानं जायते। तत्र घटो घटत्वञ्च स्वतन्त्रतया भासेते। इदञ्च ज्ञानं घटघटत्वेत्याकारकमुभयोर्वैशिष्ट्यानवगाहि जायते तयोः संसर्गस्याभासमानत्वात्।

[1] न्या०सि०मु०, प्र०खं०

एतदेव संसर्गानवगाहिज्ञानं निर्विकल्पकं प्रथमजं ज्ञानम्। एतदेव च सविकल्पकज्ञानकारणम्। निर्विकल्पकज्ञानानन्तरम् ''**अयं घट**'' इत्याकारकं समवायेन घटत्वविशिष्टं ज्ञानं सविकल्पकं व्यवसायात्मकं जायते। तदनन्तरं घटज्ञानवानहमिति प्रत्यक्षमनुव्यवसायज्ञानं पूर्वव्यवसायज्ञान-ग्राहकं जायते। इदञ्च विशिष्टवैशिष्ट्यावगाहिज्ञानमुच्यते तत्र निर्विकल्पकज्ञानं विना घट इत्याकरकं सविकल्पकं ज्ञानं कदापि न भवति।

तादृशं निर्विकल्पकंज्ञानं न निर्विषयं, घटघटत्वयोरेव विषयत्वात्। तत्र न प्रकारता न वा विशेष्यता न वा संसर्गता विषयता। एतत्रितयातिरिक्ताविषयताशालि तज्ज्ञानं भवति। तच्च निर्विकल्पकं ज्ञानं चक्षुः संयोगादनन्तरं जायमानमपि न प्रत्यक्षानुव्यवसायविषयं भवति।

सविकल्पकज्ञानस्यैव विशिष्टवैशिष्टयावगाहि ज्ञानं प्रत्यक्षमनुव्यवसायात्मकं जायते, न तु वैशिष्ट्यानवगाहि ज्ञानस्यापीति तन्निर्विकल्पकं ज्ञानं न प्रत्यक्षमपि त्वतीन्द्रियम्।

ननु वैशिष्ट्यानवगाहि ज्ञानस्य घटघटत्वविषयकस्य निर्विकल्पकस्य प्रत्यक्षमनुव्यवसा-यात्मकं ज्ञानं कुतो न जायत इति चेदत्रोच्यते- घटमहं जानामीत्यादिप्रत्यये आत्मनि ज्ञानं प्रकारीभूय भासते घटत्वप्रकारकघटज्ञानवानहमिति ज्ञानस्य स्वरूपात्। ज्ञाने च घटः प्रकारः, तत्र च घटत्वं प्रकारः। प्रकारो विशेषणं प्रकारे प्रकारः विशेषणतावच्छेदकोच्यते। तथा च विशेषणतावच्छेदकप्रकारकं ज्ञानंविशिष्टवैशिष्ट्यज्ञाने कारणम्। निर्विकल्पके च न घटत्वं प्रकारतया भासते। तस्य स्वरूपत एव भानस्वीकारात्। अतः तत्र ज्ञाने घटत्वविशिष्टघटस्य यद्वैशिष्ट्यं तस्य भानं न जायते। घटत्वप्रकारकं घटविशिष्टं ज्ञानं न भवति। कुत इति चेत्, जात्यखण्डोपाध्यतिरिक्तज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमात्।

जातिः घटत्वादि अखण्डोपाधिः प्रतियोगित्वगगनत्वादि। सखण्डोपाधिश्च नीलघट-त्वादि। नित्यत्वे सति इतरव्यावर्तकत्वे सति समवायेन वृत्तित्वमुपाधित्वम्। जातिस्त्वनेक-समवेता भवतीति ततोऽस्य वैलक्षण्यम्। एवञ्च तेभ्यो जात्युपाधिभ्योऽतिरिक्तानां घटादीनां ज्ञानं घटत्वादिप्रकारकतयैव भानमिति नियमः। तथा च घटघटत्वविषयकनिर्विकल्पकज्ञानस्य

प्रत्यक्षात्मकमनुव्यवसायज्ञानं वैशिष्ट्यानवगाहिशीलं न जायते। अत एव निर्विकल्पकं ज्ञानस्य न प्रत्यक्षतोपपद्यते। अपि तु तज्ज्ञानमतीन्द्रियमुच्यते।

**निर्विकल्पकज्ञानस्यानुव्यवसायरूपतानिरासः**

ननु घटत्वघटविषयकनिर्विकल्पकज्ञानस्यापि घटत्वज्ञानवानहमित्याकारकमनुव्यवसायज्ञानं जायताम्, जात्युपाध्यतिरिक्तानां किञ्चिद्धर्मपुरस्कारेण भाननियमात्। घटत्वं तु जातिः। तस्य स्वरूपतः विषयितासम्बन्धेन ज्ञाने प्रकारत्वसम्भवादिति चेत्, अत्रोच्यते जातेः समवायेनैव स्वरूपतः प्रकारत्वाङ्गीकारात् न विषयित्वादिना प्रकारत्वम्। अन्यथा कालो घटः, ज्ञानं घट इत्यादिप्रतीतेरपि कालिकेन काले विषयितया च ज्ञाने स्वरूपतो घटत्वस्य प्रकारत्वसम्भवात् तज्ज्ञानस्य प्रमात्वापत्तेः। अतः निर्विकल्पकज्ञानस्य नानुव्यवसायात्मकं प्रत्यक्षम्।

एवं न्यायमते निर्विकल्पकस्य ज्ञानस्य प्रत्यक्षत्वासम्भवेऽपि वेदान्तमते अनुव्यवसायज्ञानस्यानभ्युपगमात्, ज्ञानस्य स्वतः प्रकाशकत्वाच्चक्षुरादिसन्निकर्षाद् जायमानत्वाद् निर्विकल्पकज्ञानस्य प्रत्यक्षत्वमङ्गीक्रियत एव। अत एव सविकल्पकनिर्विकल्पकभेदेन प्रत्यक्षस्य द्वैविध्यमाहुः परिभाषाकाराः।

ननु घट इति, सोऽयं देवदत्त इत्यादिप्रत्यक्षनिर्विकल्पकज्ञानमनुदाहार्य शाब्दज्ञानस्योदाहरणमयुक्तमिति चेत्, अत्रोच्यते- यद्यपि सोऽयं देवदत्त इत्यादिज्ञाने इन्द्रियजन्ये देशकालोपलक्षितदेवदत्तरूपाभेदविषयके निर्विकल्पोदाहरणत्वं सम्भवति तथापि सन्निकर्षवशादुपलक्षकदेशकालादेरपि भानसम्भवान्न निर्विकल्पकत्वम्, सोऽयं देवदत्त इत्यादिशाब्दप्रत्यक्षस्थले तु तात्पर्यविषयस्यैव भाननियमाद्, अभेदमात्रविषयत्वान्निर्विकल्पकत्वं सम्भवति। अत एव शाब्दस्थलमेवोदाहृतम्।

## शब्दजन्यज्ञानस्य निर्विकल्पकत्वविचारः

ननु सोऽयं देवदत्त इत्यादिशब्दजन्यज्ञानस्य कथं प्रत्यक्षत्वम्, इन्द्रियाजन्यत्वादिति चेत्, न, प्रत्यक्षत्वे इन्द्रियजन्यत्वं न तन्त्रं तस्य दूषितत्वात्। किन्तु योग्यवर्तमान-विषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वं प्रयोजकम्।

**सोऽयं देवदत्त** इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयकतया उक्तप्रयोजकत्वस्य सत्वात् प्रत्यक्षत्वं सम्भवति। एवं **तत्वमस्यादि**वाक्यजन्यज्ञानस्यापि प्रत्यक्षत्वं बोध्यम्। ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम्। तथा हि तत्वमस्यादिवाक्यं तत् त्वं पदार्थसंसर्गावगाहिज्ञानजनकं वाक्यत्वात्, **गामानयेत्**यादि-वाक्यवत्। सन्निकृष्टविषयकत्वात् तादृशवाक्यजन्यज्ञानस्यप्रत्यक्षत्वेऽपि संसर्गावगाहित्वाद् निर्विकल्पकत्वं न सम्भवतीति चेत्, अत्रोच्यतेपूर्वोक्तानुमाने मुख्यार्थान्वयोपपत्तिरूपस्योपाधेः सद्भावात्। गामानयेत्यादिवाक्ये सम्भवति मुख्यार्थान्वयः तत्वमसीत्यादौ तु मुख्यार्थान्वयो न सम्भवतीति तत्र लक्ष्यार्थयोरन्वयोऽभिप्रेतः। तथा चोभयोः पदयोः लक्ष्यार्थस्य चैतन्यरूपस्यैकत्वात् संसर्गाभावान्न संसर्गविषयत्वम्। न च तत्त्वमस्यादिवाक्यं संसर्गबोधकम्, वाक्यत्वात्, **गङ्गायां घोष** इत्यादिवाक्यवदित्यनुमाने मुख्यार्थान्वयोपपत्तिरूपो नोपाधिरिति वाच्यम्। लक्ष्यार्थान्वय-सम्भवस्यैवोपाधित्वात्। किञ्च वाक्यजन्यज्ञानविषयत्वे न पदार्थसंसर्गत्वं तन्त्रम्। अनभिमत-संसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः। भोजनप्रकरणे सैन्धवमानयेति वाक्येनानभीष्टाश्वादि-संसर्गस्यापि तद्विषयत्वापत्तेः। अतः नेदं प्रयोजकमपि तु तात्पर्यविषयत्वमेव तन्त्रम्।

## वेदान्ताभिमताखण्डचैतन्यसाक्षात्कारविचारः

विशुद्धे ब्रह्मणि चैतन्ये वेदान्तानां तत्त्वमस्यादिवाक्यानां तात्पर्यमित्युपक्रमादिभिः षड्विधैर्लिङ्गैर्निर्णीयते। अतो न स्वस्वाम्यादिभावमादाय तत्त्वमस्यादिवाक्यानां संसर्गावगाहित्वं सम्भवति।

कानिपुनः षट् तात्पर्यलिङ्गानि? उच्यते, तत्त्वमसीत्यस्य वाक्यस्य "**अद्वितीय ब्रह्म**" इत्यर्थः, तस्य वाक्यस्याद्वैतब्रह्मणि तात्पर्यं षड्भिलिङ्गैरवधार्यते।

**"उपक्रमोपसंहारवक्ष्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥"**

तत्र छान्दोग्ये षष्ठप्रपाठके '**सदेव सोम्य इदमग्र आसीद्**' एकमेवाद्वितीय-मित्युपक्रमः।

तत्सत्यं स आत्मा तत्त्वमसीत्युपसंहारः। अत्रोपक्रान्तस्यैव सदद्वितीयस्य तत्सत्यमित्यादिनोपसंहारो दृश्यते, अतः तत्रैव वाक्यतात्पर्यं निर्धायते येनैवोपक्रमः तेनैवोपसंहारश्चेत् तदेव वाक्यतात्पर्यमिति निश्चयात्।

एवं '**तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो**' इति नवकृत्वोऽभ्यासः। असकृदनुवृत्तिरभ्यास उच्यते, पौनः पुन्येन कथने वाक्यतात्पर्यार्थे दृढ़ता भवति। असम्भावनाविपरीतभावनायाश्च विगमो दृश्यते। किं वा तात्पर्ये भूयस्त्वमागच्छति। यथा अहो! रमणीयम्, अहो रमणीयमित्यसकृत्कथनादर्थभूयस्त्वं लोके दृष्टम्। एवं नववारं वक्ति श्रुतिर्यदर्थं तत्रैव तत्तात्पर्यमिति निर्धायते। एवं येनाश्रुतं श्रुतं भवतीत्यादिना तस्य तात्पर्यविषयीभूतस्याद्वितीयस्य ब्रह्मणः संस्तुतस्य प्रमाणान्तरागोचरत्वादपूर्वता निर्धार्यते। तेनानुवादत्वनिरासपूर्वकापूर्वार्थनिश्चयो जायते। तात्पर्यार्थे च प्ररोचना जायते। एवं यथा सोम्य एकेन मृन्मयेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति, मृत्तिका इत्येव सत्यमित्यादिवाक्येन मृल्लोहदृष्टान्तद्वारा अद्वितीयार्थे उपपत्तिरुक्ता। उपपत्त्या चार्थसन्देह-विपरीतभावनादिनिवृत्तिर्भवति।

एवमाचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये इत्यादिवाक्येन तात्पर्यार्थस्य प्रशंसा क्रियते प्रकृतार्थस्तुतिरर्थवादः। अनेन चार्थस्य महत्त्वातिशयो जायते। एवमेभिः षड्विधैर्लिङ्गैस्तात्पर्यार्थनिर्णयो जायते। एवमन्यवेदान्तवाक्यानामपि अद्वैते ब्रह्मणि तात्पर्यं बोध्यम्।



# उपसंहार

सकलव्यवहाराणां प्रवृत्तिजनकं ज्ञानमेवास्ति। प्रवृत्तिश्च द्विविधः सम्वादिप्रवृत्तिः विसम्वादिप्रवृत्तिश्च। सम्वादिप्रवृत्ति जनकं ज्ञानं प्रमात्मकम्। विसम्वादिप्रवृत्तिजनकं ज्ञानं भ्रमात्मकं भवति। तत्र सम्वादिप्रवृत्तिजनकप्रमात्मकज्ञानस्वरूपविचारे पूर्वं सर्वस्यापि प्रमात्मकज्ञानस्योपजीव्यतया प्रत्यक्षात्मकज्ञानस्वरूपं विचार्यते। प्रत्यक्षात्मकं ज्ञानमिन्द्रियार्थ-सन्निकर्षजन्यमुच्यते। तत्र संयोगादिषड्विधाः सन्निकर्षाः लौकिकाः अथ च सामान्यलक्षणाऽऽदि त्रिविधाः अलौकिकाः सन्निकर्षाः सन्ति। इमे लौकिकाऽलौकिकसन्निकर्षाः इन्द्रियजन्यत्वे सति इन्द्रियजन्यज्ञानजनकत्वात्व्यापाररूपाः सन्ति। सन्निकर्षरूपव्यापारवत्वादि-न्द्रियाणि करणत्वेनाभिमतानि सन्ति।

एतेषां सन्निकर्षस्वरूपाणामत्र शोधप्रबन्धे तथ्याऽतथ्यात्मकं समालोचनं विहितम्। संयोगादिसन्निकर्षाणां लौकिकत्वं सामान्यलक्षणादि सन्निकर्षाणामलौकिकत्वं कथं सम्भवतीति सर्वमत्र शोधप्रबन्धे विचारितम्। अथ च शास्त्रान्तरेषु सन्निकर्षस्वरूपं यन्निर्धारितं तदपि समालोचनपुरस्सरं अत्र शोधप्रबन्धे सम्यक्तया विचारितम्। तत्र केषुचित्शास्त्रेषु सामान्यलक्षणाज्ञानलक्षणे सन्निकर्षौ न स्वीकृतौ। तत्र अस्वीकारे कः हेतुः इत्यपि शास्त्रान्तरालोचन पुरस्सरं समीक्षितम्।

येषां मते अभावप्रत्यक्षे अनुपलब्धिप्रमा प्रत्यक्षातिरिक्तत्वेनाभिमता। तेषां नये विशेष्य-विशेषणभावाख्यः सन्निकर्षः न स्वीक्रियते। तदस्वीकारे किं बीजमिति सम्यक्तया समीक्षितम्। अथ च मीमांसा नये समवायस्यास्वीकारात् समवायघटितः सन्निकर्षः न सम्भवति, अपितु समवायस्थाने तादात्म्यपदस्य प्रयोगः क्रियते इत्यपि शास्त्रान्तर समालोचनपूर्वकं समीक्षितम्।

प्रत्यक्षस्य प्रामाण्यं सम्भवति नवेति सम्यक् समीक्षितम्। सविकल्पक-निर्विकल्पकभेदेन प्रत्यक्षस्य द्वैविध्यस्वरूपं सम्यक्तया समीक्षितम्। सन्निकर्षस्योपयोगिताप्रसङ्गे शास्त्रान्तरसमालोचनपुरस्सरमुपयोगिता निरूपिता। अथ च सन्निकर्षविषये प्रमाणविचारोऽपि सम्यक्तया अत्र शोधप्रबन्धे विचारितः। इन्द्रियाणां प्राप्यकारित्वाप्राप्यकारित्वविचारप्रसङ्गे केषामिन्द्रियाणां कैः विषयैः सह साक्षात्प्राप्यकारित्वं, कैः विषयैः सह परम्परया प्राप्यकारित्व-मित्यपि अत्र शोधप्रबन्धे बहुधा विचारितम्।

न्यायनयाभिमत सन्निकर्षस्वरूपविचारपुरस्सरं कणादमताभिमतलौकिकसन्निकर्ष-स्वरूपविचारोऽपि अत्र शोधप्रबन्धे विहितः। उभयमताभिमत लौकिकसन्निकर्षस्वरूप-समीक्षणमपि उभयशास्त्रसमीक्षणपुरस्सरं अत्र शोधप्रबन्धे विहितम्। लौकिकसन्निकर्षस्वीकारे युक्तयोऽपि प्रदत्ताः सन्ति। समवायाभावप्रत्यक्षनियामकसम्बन्धविषये विविधशास्त्रकाराणां मत-समालोचनपुरस्सरं तथ्यात्मकं समालोचनमत्र शोधप्रबन्धे विहितम्।

अलौकिकसन्निकर्षविचारप्रसङ्गे विविधशास्त्रकाराणां मतसमीक्षणपुरस्सरमलौकिक-सन्निकर्षस्वरूपनिरूपणं विहितम्। तत्र सामान्यलक्षणायाः स्वरूपं विविधशास्त्रकाराणां मत-

समालोचनपुरस्सरं निरूपितम्। दीधितिकारमते सामान्यलक्षणायाः यो हि निरासविचारः सोऽपि युक्तिपुरस्सरं अत्र शोधप्रबन्धे विचारितः। सामान्यलक्षणासन्निकर्षस्य प्रत्यक्षप्रमां प्रति हेतुत्वमेव नास्ति। येषां शास्त्रकाराणां मतं तदपि युक्तिपुरस्सरमत्र शोधप्रबन्धे सम्यक्तया समालोचितम्। सामान्यलक्षणाया स्वीकारे याः युक्तयः शास्त्रेषु निर्धारिता सन्ति तासां युक्तीनां शास्त्रालोचनपुरस्सरं समीक्षणं विहितम्।

ज्ञानलक्षणास्वरूपविचारप्रसङ्गे येषां शास्त्रकाराणां मते ज्ञानलक्षणाऽभिमता तेषामभिमतिप्रसङ्गे प्रमाणानि प्रदत्तानि। अथ च येषां शास्त्रकाराणां मते ज्ञानलक्षणा नाभिमता तत्रापि अनभिमतप्रसङ्गे युक्तयः प्रदर्शिता सन्ति। सामान्यलक्षणाज्ञानलक्षणयोर्भेदव्यवस्था प्रसङ्गे उभयोः स्वरूपयोः वैलक्षण्यं प्रतिपाद्य भेदव्यवस्था निर्धारिता।

योगजसन्निकर्षस्वरूपविचारप्रसङ्गे योगिभेदात्योगजसन्निकर्षस्वरूपभेदः प्रतिपादितः। अथ च योगजसन्निकर्षस्य प्रत्यक्षप्रमाजनने का उपयोगिता इत्यपि निर्धारिता। एवमेव निर्विकल्पकप्रत्यक्षस्वरूपविचारप्रसङ्गे निर्विकल्पकप्रत्यक्षस्योपयोगिता विचारिता। तत्र निर्विकल्पकप्रत्यक्षं सविकल्पकप्रत्यक्षं प्रति कारणमिति नैयायिकाः। निर्विकल्पकं प्रत्यक्षमात्म-साक्षात्कार रूपं तच्च मोक्षकारणमिति वेदान्तिनाः। उभयोः मतयोः समीक्षा शास्त्रानुशीलं पुरस्सरं विहिता।

**निष्कर्षः**

सन्निकर्षस्वरूपज्ञानमन्तरा प्रत्यक्षज्ञानमसम्भवम्। अतः शोधप्रबन्धे ये सन्निकर्षाः शास्त्रेषु निर्धारिताः तेषां स्वरूपज्ञानाय एव शोधप्रबन्धः उपयोगि भविष्यति। सन्निकर्ष विषये शास्त्रकाराणां वैमत्यं दृश्यते। तस्य वैमत्यस्य समालोचनमन्तरा सन्निकर्षस्वरूपज्ञानमपि न सम्भवति। अतः शास्त्रकाराणां मतानि यथा शास्त्रमत्र शोधप्रबन्धे निरूपितानि।

कियन्तः सन्निकर्षाः स्वीकरणीयाः इत्यस्मिन् पक्षेऽपि शास्त्रकाराणां विमतिः दृश्यते। तस्याः विमतेः यत्कारणं तन्निरूपण पुरस्सरं सन्निकर्षस्वरूपविचाराः शोधप्रबन्धे प्रतिपादितः। सन्निकर्षमन्तरा इन्द्रियाणां कारणत्वं न सम्भवति, एतदर्थमपि सन्निकर्षस्वरूपज्ञानमपेक्षते। यतश्च व्यापारवदसाधारण कारणं करणं भवति। इन्द्रियाणां करणत्व सम्पादनाय व्यापाररूपत्वेन सन्निकर्षस्वरूपमपेक्षते।

चक्षुरादिगोलकस्थानामिन्द्रियाणां विषयैः सह यः सम्बन्धः स एव सन्निकर्ष-पदेनोच्यते। असम्बद्धं विषयमिन्द्रियं न प्रकाशयति तदर्थं लौकिकसन्निकर्षाः अभिमताः। अलौकिकसन्निकर्षाणान्तु भिन्नैव कथा? तत्र सामान्यलक्षणा प्रत्यासत्तिद्वारा धूमत्वेन सकलधूमानां ज्ञानं भवति। धूमवृत्तिधूमत्वं स्वसंयुक्तसमवायसम्बन्धेन सम्बद्धम्। तच्च सामान्यलक्षणाप्रत्यासत्तिद्वारा सर्वाषां धूमव्यक्तीनां व्यापकं भवति। अतः एकस्यां धूमव्यक्तौ एकस्याः वह्निव्यक्तेः व्याप्तिग्रहे सति धूमत्वेन सकलधूमेषु वह्नित्वेन सकलवह्नीनां साहचर्यं गृह्यते। अतः अस्ति माहात्म्यं सामान्यलक्षणाप्रत्यासत्तेः माहात्म्यम्। यदि

सामान्यलक्षणाप्रत्यासत्तिः न स्वीक्रियेत तदा महानसे माहात्म्यम्। यदि सामान्यलक्षणाप्रत्यासत्तिः न स्वीक्रियेत तदा महानसे महानसीय धूमे महानसीय वह्नेः गृहीतव्याप्तिकस्य पुरुषस्य पर्वतीयधूमदर्शनेन व्याप्तिस्मरणं न स्यात्।

एवमेव ज्ञानलक्षणाप्रत्यासत्तेरपि अस्य माहात्म्यम्। इन्द्रियसन्निकृष्टचन्दनखण्डदर्शनेन भवति सुरभिसम्प्रत्ययः। तच्च सौरभं इन्द्रियासन्निकृष्टमपि ज्ञानलक्षणाप्रत्यासत्या गृह्यते। यदि च ज्ञानलक्षणा प्रत्यासत्ति न स्वीक्रियते तदा चन्दनखण्डदर्शनेन सौरभस्य भानं न स्यात्।

एवमेव योगजसन्निकर्षस्यापि माहात्म्यमस्ति। योगिनः इन्द्रियासन्निकृष्टमपि विषयेण प्रत्यक्षीकुर्वन्ति। यदि योगजसन्निकर्षः न स्वीक्रियेत तदा इन्द्रियासन्निकृष्टविषयस्य प्रत्यक्षत्वं न स्यात्। इदमेव सन्निकर्षाणां फलम्। तदत्र संक्षेपेण निरूपितम्। एतद्वैषद्यमत्र शोधप्रबन्धे दृष्टव्यम्।

अध्ययेन कालादेव सन्निकर्षस्वरूपविषये वैमत्यमालोक्य सन्निकर्षस्वरूप ज्ञानाय महती जिज्ञासा आसीत्। अतः सन्निकर्षस्वरूपविचारे प्रवृत्तः। अत्र शोधप्रबन्धे यथामति शास्त्रालोचन पुरस्सरं सन्निकर्षस्वरूपं समालोचितम्। मन्ये सन्निकर्षस्वरूप जिज्ञासूनां महति उपकाराय एष प्रयासः भविष्यतीति सम्।



# सहायकग्रन्थसूची


| ग्रन्थनामानि | ग्रन्थकारनामानि/ संपादकनामानि | प्रकाशनस्थानम् | समयः |
|---|---|---|---|
| अद्वैतसिद्धिः | मधुसूदनसरस्वती | बम्बई | 1917 |
| अद्वैतसिद्धिः | अनन्तकृष्णशास्त्री | निर्णयसागरमुद्रणालयः, मुम्बई | 1937 |
| अथर्ववेदभाष्यभूमिका | बलदेव उपाध्याय | चौखम्भा संस्कृत सीरीज, वाराणसी | 1958 |
| अमरकोशः | श्रीमदमर सिंहः | बम्बई | 1961 |
| कल्पतरुः | अनन्तकृष्णशास्त्री | निर्णयसागरमुद्रणालयः, मुम्बई | 1938 |
| अवयवप्रकरणम् | गङ्गेशोपाध्यायः | राष्ट्रियसंस्कृतविद्यापीठ, तिरुपति | 1996 |
| किरणावली | | | |
| खण्डनखण्डखाद्यम् | | चौखम्भासंस्कृतसीरिज, वाराणसी | |
| छान्दोग्योपनिषद् | मोतीलाल बनारसीदास | दिल्ली | 1964 |
| जैनदर्शनम् | श्रीमन्मध्वाचार्यः | बम्बई | 1982 |
| तत्वचिन्तामणिः | एन0एस0 रामानुजताताचार्यः | केन्द्रीयसंस्कृतविद्यापीठम् तिरुपति | 1972 |
| तत्त्वचिन्तामणिः | गङ्गेशोपाध्यायः (रहस्य-टीका) | चौखम्भासंस्कृतसीरिज, वाराणसी | 1990 |
| तत्त्वचिन्तामण्यालोक | डॉ0 उमेश मिश्रः | मिथिला इन्स्टीट्यूट | 1957 |
| तत्त्वचिन्तामणिप्रकाशः | रामानुजताताचार्यः | केन्द्रीयसंस्कृत विद्यापीठम् तिरुपति | 1972 |
| तन्त्रवार्तिकम् | श्रीकुमारिलभट्टः | चौखम्भासंस्कृतसीरिज, वाराणसी | 1903 |
| तर्कभाषा | केशवमिश्रः | आर्यभूषण प्रेस, पूना | 1937 |
| तर्कभाषा | सुरेन्द्रदेव शास्त्री | चौखम्भा संस्कृत संस्थानम्, दिल्ली | 2003 |
| तर्कताण्डवम् | मध्वाचार्यः | मैसूर | 1932 |
| तर्कसंग्रहः | चन्द्रशेखरशास्त्री | बालमनोरमा प्रेस, मद्रास | 1916 |
| तर्कसंग्रहः | श्री केदारनाथ त्रिपाठी | | |
| तर्कसंग्रहः | वरदाचार्यः | आर्षग्रन्थ प्रकाशनम्, मैसूर | 2007 |
| तर्कसंग्रहदीपिका | चन्द्रशेखरशास्त्री | बालमनोरमा प्रेस, मद्रास | 1916 |
| तत्त्वमुक्ताकलापः | अण्णंगराचार्यः | कांची | 1941 |
| तत्त्वप्रदीपिका | | उदासीनसंस्कृतविद्यालय, काशी | 1956 |
| तात्पर्यटीका | अनन्तलालठाकुर | मिथिला इन्स्टीट्यूट | 1967 |
| तात्पर्यटीकापरिशुद्धिः | अनन्तलालठाकुर | मिथिला इन्स्टीट्यूट | 1967 |

| | | | |
|---|---|---|---|
| तैत्तिरीयोपनिषद् | वैद्यनाथशास्त्री | कुम्भकोणम् | - |
| न्यायकन्दली | विन्ध्येश्वरीप्रसादः | काशी | 1895 |
| न्यायकुसुमाञ्जलिः | वीरराघवाचार्यः | तिरुपति | 1940 |
| न्यायकुसुमाञ्जलिः | आचार्य विश्वेश्वरः | चौखम्भा विद्याभवनम्, वाराणसी | 1988 |
| न्यायदर्शनम् | डॉ0 सच्चिदानन्द मिश्रः | भारतीय विद्या प्रकाशन, वाराणसी | 1999 |
| न्यायदीपिका | धर्मभूषणयतिः | बम्बई | 1926 |
| न्यायबिन्दुः | धर्मकीर्तिः | चौ0 सं0सी0, वाराणसी | 1954 |
| न्यायभाष्यम् | महर्षि वात्स्यायनः | चौ0सं0सी0, काशी | 1925 |
| न्यायभाष्यम् | अनन्तलालठाकुर | मिथिला इन्स्टीट्यूट | 1967 |
| न्यायमञ्जरी | सूर्यनारायणशुक्लः | चौ0सं0सी0, वाराणसी | 1936 |
| न्यायवार्तिकम् | अनन्तलालठाकुर | मिथिला इन्स्टीट्यूट | 1967 |
| न्यायवार्तिकतात्पर्यटीका | श्रीवाचस्पतिमिश्रः | चौ0सं0सी0, वाराणसी | 1954 |
| न्यायसिद्धान्तमुक्तावली (किरणावली टीका) | विश्वनाथपञ्चानन | चौ0सं0सी0, वाराणसी | 1968 |
| न्यायसिद्धान्तमुक्तावली दिनकरी, रामरूद्री | पं0 हरिराम शुक्लः | चौ0सं0सी0, वाराणसी | 2011 |
| न्यायसूत्रम् | केशव मिश्रः (किशोरनाथ झा) | गङ्गनाथ झा केन्द्रीय संस्कृत विद्यापीठम्, प्रयागः | 1978 |
| पक्षता | जगदीश तर्कालङ्कारः | चौ0सं0सी0, वाराणसी | |
| परिभाषेन्दुशेखरः | श्रीनागेशभट्टः | चौ0सं0सी0, वाराणसी | 2001 |
| पञ्चपादिका | अनन्तकृष्णशास्त्री | कलकत्ता | 1933 |
| पाणिनीयसूत्रम् | महर्षिपाणिनिः | बम्बई | 1945 |
| परिमलः | अनन्तकृष्णशास्त्री | निर्णयसागर, मुम्बई | 1940 |
| प्रमेयकमलमार्तण्डः | प्रभाचन्द्राचार्यः | निर्णयसागर, मुम्बई | 1938 |
| प्रमाणवार्तिकम् | राहुल सांकृत्यायनः | काशीप्रसादजायसवाल अनुशीलन-संस्था, पटना | 1953 |
| प्रमाणमीमांसा | हेमचन्द्राचार्यः | चौखम्भासंस्कृतसीरिज, बनारस | 1995 |
| प्रमाणसमुच्चयः | आचार्य दिङ्नागः | मैसूर | 1930 |
| प्रस्थानरत्नाकरः | गोस्वामी श्रीपुरुषोत्तमः | चौखम्भा संस्कृत भवनम् | 1909 |
| प्रशस्तपादभाष्यम् | पण्डित दुर्गाधर झा शर्मा | सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी | 1997 |
| प्रौढमनोरमा | श्रीभट्टोजिदीक्षितः | चौ0सं0सी0, वाराणसी | 1940 |
| बृहदारण्यकोपनिषद् | मोतीलालबनारसीदास | दिल्ली | 1964 |
| भामती | अनन्तकृष्णशास्त्री | निर्णयसागर, मुम्बई | 1904 |

| | | | |
|---|---|---|---|
| मनुस्मृतिः (मन्वर्थमुक्तावली) | कुल्लुकभट्टः | चौखम्भा संस्कृत संस्थानम्, वाराणसी | 1982 |
| महाभाष्यम् | मोतीलाल बनारसीदास | दिल्ली | 1967 |
| महाभारतम् | | गीता प्रेस, गोरखपुर | 1984 |
| मानमेयोदयः | सूर्यनारायणशास्त्री | मद्रास | 1933 |
| मीमांसादर्शनम् | अण्णंगराचार्यः | कांची | 1940 |
| मीमांसादर्शनम् | जैमिनीमुनिः | पूना | 1929 |
| याज्ञवल्क्यस्मृतिः | वासुदेवलक्ष्मणशास्त्री | निर्णयसागर, मुम्बई | 1926 |
| योगदर्शनम् | महर्षिपतञ्जलिः | चौखम्भा संस्कृत सीरीज | 1938 |
| लघुमञ्जूषा | श्रीनागेशभट्टः | निर्णयसागर, बम्बई | 1925 |
| लघुसिद्धान्तकौमुदी | वरदराजाचार्यः | गीता प्रेस, गोरखपुर | सं0 2059 |
| वाक्यपदीयम् | क्षेत्रेशचन्द्रधरोपाध्यायः | वाराणसी | 1963 |
| वेदान्तपरिभाषा | डॉ0 गजानन शास्त्री 'मुसलगांवकर' | चौखम्भा विद्या भवनम्, वाराणसी | 2010 |
| वेदान्तसारः | आचार्य बदरीनाथशुक्लः | मोतीलालबनारसीदास, वाराणसी | 1979 |
| वैशेषिकसूत्रम् | महर्षि कणादः | चौखम्भाविद्याभवनम्, वाराणसी | 2008 |
| व्याप्तिपञ्चकम् | मथुरानाथ तर्कवागीशः | चौखम्भाविद्याभवनम्, वाराणसी | 2002 |
| व्युत्पत्तिवादः | गदाधर भट्टाचार्यः | निर्णयसागर, बम्बई | 1968 |
| शब्दशक्तिप्रकाशिका | जगदीशतर्कालङ्कारः | चौखम्भाविद्याभवनम्, वाराणसी | 2003 |
| शाङ्करभाष्यम् | अनन्तकृष्णशास्त्री | निर्णयसागर, मुम्बई | 1904 |
| शास्त्रदीपिका | अनन्तकृष्णशास्त्री | निर्णयसागर, मुम्बई | 1964 |
| शुक्लयजुर्वेदः | महर्षि कात्यायनः | बालमनोरमा प्रेस, मद्रास | 1934 |
| श्लोकवार्तिकम् | रामनाथशास्त्री | मद्रास विश्वविद्यालय, मद्रास | 1940 |
| सर्वदर्शनसंग्रहः | मध्वाचार्यः | निर्णयसागर, बम्बई | 1982 |
| सर्वार्थसिद्धिः | अण्णंगराचार्यः | कांची | 1941 |
| सांख्यतत्वकौमुदी | गजाननशास्त्री मुसलगांवकर | चौखम्भासंस्कृत सीरिज, वाराणसी | सं0 2046 |
| सांख्ययोगदर्शनम् | गोस्वामी दामोदर शास्त्री | चौखम्भा संस्कृत संस्थान, वाराणसी | 1990 |
| सामान्यनिरुक्तिः | गदाधर भट्टाचार्यः | वाराणसी | 1995 |
| सामान्यलक्षणा | जगदीशतर्कालङ्कारः | वाराणसी | 2009 |



ISSN2277-7024

# सुसंस्कृतम्

# SUSANSKRITAM

## अन्ताराष्ट्रिया अर्द्धवार्षिकी संस्कृतशोधपत्रिका
(AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL)

वर्षम् ४ अंकः १, जनवरी-जून २०१४
(विक्रम संवत् २०७१)



**प्रकाशिका**
सुरुचिकलासमितिः, वाराणसी

# विषय-सूची

ISSN2277-7024

# न्यायमते शक्तिस्वरूपविचारः

*योगेशकुमारत्रिपाठी

**'मानाधीना मेयसिद्धिर्जायते'** तथा **'प्रमाकरणमेव प्रमाणं'** भवति एतद्विषये दार्शनिकानां मतभेदो न दृश्यते। तत्र न्यायमते प्रत्यक्षानुमानोपमानशब्दसंज्ञकानि प्रमाणानि विद्यन्ते। तत्र शब्दस्य प्रमाणान्तरत्वं वैशेषिकाः नाभ्युपगच्छन्ति। परन्तु अक्षपादमतावलम्बिनां तार्किकाणां मते शब्दस्यापि प्रमाणान्तरत्वमभ्युपगतम्। स च शब्दः आप्तोपदेशस्वरूपः आप्तत्वञ्च **'यथावस्थितार्थबोधवत् पुरुषत्वम्।'** शब्दात् जायमानः शाब्दबोधः इन्द्रियार्थसन्निकर्षाजन्यत्वात् प्रत्यक्षातिरिक्तः। एवं शाब्दबोधस्य व्याप्तिज्ञानसादृश्य-ज्ञानाभ्यामजन्यत्वात् प्रत्यक्षानुमितिरिक्त्वमप्यभ्युपेयम्। अतः इयं शाब्दबोधस्वरूपात्मिका पदज्ञानजन्यपदार्थोपस्थितिजन्यप्रमा प्रत्यक्षादिप्रमातिरिक्ताऽभ्युपेया। यतोहि यं शाब्दबोधात्मिका केवलं पदज्ञानजन्यपदार्थोपस्थित्या एव जायते, न तु प्रत्यक्षादिप्रमा कारणीभूतेन्द्रियार्थसन्निकर्षादिना जायते। अतः अस्याः शाब्दबोधात्मकप्रमायाः प्रत्यक्षानुमित्युपमितिशब्देभ्यः भिन्नत्वमुपेयते। अत एवोक्तं जगदीशतर्कालङ्कारेण—

**साकाङ्क्षशब्दैर्योबोधस्तदर्थान्वय गोचरः।**
**सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा।।**

अस्यायमाशयः आकाङ्क्षा-योग्यता-सन्निधि-विशिष्टैः पदैः स्मारका ये अर्थाः भवन्ति तेषां वृत्तिज्ञानाधीनतादृशपदोपस्थापितानां पदार्थानां परस्परसंसर्गावगाही यो बोधः जायते, स च बोधः शाब्दबोध एव। स च बोधः साकाङ्क्षपदोपस्थापितपदार्थविषयकतया शाब्दबोध एव। यतः प्रत्यक्षानुमित्युपमितिप्रमासु वृत्तिज्ञानसहकृतपदार्थोपस्थितिविषयीभूतानां पदार्थानां विषयत्वेन भानं न जायते। शाब्दबोधे एव पदज्ञानजन्योपस्थितिविषयीभूतपदार्थानां भानं भवति। अतः शाब्दबोधीया प्रमा प्रत्यक्षादिप्रमातिरिक्ताऽवश्यमभ्युपेया। यस्याः वृत्तेः सहकारेण पदज्ञानेन पदार्थोपस्थितिर्जायते, सा वृत्तिः का? इत्याकारकजिज्ञासायामुक्तं गदाधरभट्टाचार्येण-**सङ्केतो लक्षणा चार्थे पदवृत्तिः।**

अस्यायमाशयः पदानुयोगिकः अर्थप्रतियोगिकः एवमर्थानुयोगिकः पदप्रतियोगिकः पदपदार्थयोः सम्बन्धः वृत्तिः भवति। सा च वृत्तिः शाब्दबोधौपक्षिकपदपदार्थयोः सम्बन्धरूपा। वृत्तेः पदपदार्थोपयिकसम्बन्धरूपास्ति, कस्यापि दार्शनिकस्य विप्रतिपत्तिपरः। सा च वृत्तिः शक्तिलक्षणाभेदेन द्विविधा। तत्रापि 'इदं पदम् इममर्थं बोधयतु' अथवा 'अस्मात् पदात् अयमर्थो बोधव्य इत्याकारकेश्वरसङ्केतस्य शक्तित्वं तार्किकाः अभ्युपगच्छन्ति। यद्यपि ईश्वरसङ्केतस्य

---

*शोधच्छात्रः, वैदिकदर्शनविभागः, संस्कृतविद्याधर्मविज्ञानसंकायः, काशीहिन्दूविश्वविद्यालयः।

शक्तित्वं मीमांसकमतेन न सम्भवति। तन्मते ईश्वरानङ्गीकारात्। तादृशसङ्केतस्यैव शक्तित्वमभ्युपेयम् इत्येवं नव्याः प्रतिपादयन्ति।

केचन ज्ञाने पदानां शक्तिर्विद्यते न तु अर्थे, इत्येवं प्रतिपादयन्ति। तथाहि जन्य-निरूपिता शक्तिः जनके स्वीक्रियते तथा पाकनिष्ठजन्यतानिरूपिता शक्तिः दहने विद्यते। तथैव अर्थज्ञाननिरूपिता शक्तिः पदे अभ्युपेयते। एतन्मतानुसारं वाचकत्वं तावत् वह्निविषयकबोधोत्पत्तिजनकशक्तिमत्वम्। यथा घटविषयकबुद्धिजनकतावच्छेदकशक्तिमत्वस्य घटपदे सत्वात् भवति घटपदस्य घटावच्छिन्नवाचकत्वम्।

अत्रेदं विचिन्तनीयं यदि तद्विषयकशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक-शक्तिमत्वं वाचकत्वमभ्युपेयते चेत् कार्यान्वितस्वार्थे पदानां शक्तिः इत्यभ्युपगच्छतां गुरूणां मते घटपदस्यापि कार्यतावाचकत्वमापद्येत। तथापि साक्षात्परम्परा साधारणनिरूपित-त्वांशेऽविशेषणीभूतं यदवच्छेदकत्वं तन्निरूपितजन्यता या विशेषणीयतया कार्यत्वविषय-त्वनिष्ठावच्छेदकतायाः साक्षात् परम्पराभूतघटविषयतानिरूपितत्वे विशेषणतया-ऽविशेषणत्वाभावेन कार्यत्वविषयतायाः जन्यतावच्छेदकविषयतापदेन ग्रहणासम्भवात्, न हि घटपदस्य कार्यतावाचकत्वापत्तिः। इत्थं रीत्या ज्ञाने पदानां शक्तिः इति केचन प्रतिपादयन्ति। तन्मतं नहि समीचीनं प्रतिभाति, यतः प्रतिपादितमस्ति तन्न सङ्गच्छेत्। यतः लाक्षणिकपदमपि लक्ष्यार्थविषयकशाब्दबोधजनकत्वेन सर्वमतसिद्धम्। अस्यां स्थितौ लाक्षणिकस्यापि पदस्य वाचकत्वापत्तिः स्यात्। अथेदानीं विचिन्त्यते यत् घटादिपदानां घटत्वादिजातौ शक्तिः उत वा घटत्वावच्छिन्नव्यक्तौ शक्तिः इति? एतद्विषये भाट्टमतावलम्बिनः घटादिपदानां जातिमात्रे एव शक्तिः।

**'यतोहि नागृहीतविशेषणा बुद्धिः विशिष्टेषूपजायते'** तथा **'विशेष्यमृना-भिधागच्छेत् क्षीणशक्तिविशेषणे'** इत्याद्यनुशासनदर्शनाज्जातिविषयकबोधार्थं जातेः शक्यतायाः आवश्यकत्वात्। जातावेव शक्तीति भाट्टमतानुयायिनः प्रादर्शयन्। यतोहि व्यक्तौ यदि शक्तिः स्वीक्रियते तदाऽनन्ताभिः व्यक्तिभिः तादृशशक्त्याख्यसम्बन्धग्रहणस्याशक्यत्वात्। सामान्यलक्षणया प्रत्यासतित्वस्य सर्वमतासिद्धतया समस्तानां व्यक्तिनामुपस्थितेः असम्भवात्। समस्ताभिः व्यक्तिभिः सह शक्तिसम्बन्धस्यासंभवात् जातावेव शक्तिकल्पनावश्यकी। किञ्च व्यक्तौ यदि शक्तिः स्वीक्रियते चेत् तर्हि एकस्यां व्यक्तौ शक्तिग्रहस्य सत्वेऽपि व्यक्त्यन्तरे शक्तिग्रहणासम्भवात् व्यक्त्यन्तरस्योपस्थितिर्न स्यात्। तथा च तथाविधव्यक्तिविषयकशाब्दबोधो न स्यात्, भवति च एकस्यां व्यक्तौ शक्तिग्रहणे व्यक्त्यन्तरादपि शाब्दबोधः, अतः व्यक्तिशक्ति-स्वीकारे व्यभिचारः स्यात्। अपि च व्यक्तौ शक्तिस्वीकारे व्यक्तेः अनन्तत्वात् शक्तेरपि आनन्त्यं प्रसज्येत। अतः व्यक्तौ शक्तिः न स्वीकार्या अपितु जातावेव।

अत्रेदं विचिन्तनीयं यदि व्यक्तौ शक्तिः नाभ्युपेयते चेद् तदा शक्तिं विना व्यक्तेः शाब्दबोधे भानं कथं भवेत्? यदि एवमुच्येत यत् जातौ शक्तिभानानन्तरं कर्मत्वं गवीयं

गोत्ववृत्तिकर्मतात्वात् इत्यनुमानेनैव व्यक्तेः शाब्दबोधे भानं भवितुमर्हति। अतः गवादिव्यक्ति-भानार्थं गवादिपदानां गवादिव्यक्तौ शक्तिर्नावश्यकी तस्मात् जातावेव शक्तिः।

मतमिदं न साधु, यदि गोपदस्य गवि शक्तिर्नाभ्युपेयते तदा गामानय इत्यादौ गोपदेन शक्त्या गोत्वजातेरेवोपस्थित्या तादृशगोत्वरूपे पदार्थे द्वितीयार्थकर्मत्वस्य बाधितत्वेन गामानयेति वाक्यात् शाब्दबोधो न स्यात्। यद्यत्रोच्येत गोत्वस्यापि स्वाश्रवृत्तित्वसम्बन्धेन कर्मत्वे गोत्वान्वयस्य निरबाधितत्वात् गोत्ववृत्ति 'कर्मताकमानयनं कार्यम्' इत्याकारकः शाब्दबोधः,तत्रापि सम्भवत्येव। तथापि गोपदं गोत्वे शक्तमित्येवंरीत्या गोपदस्य यदि गोत्वे शक्तिः स्वीक्रियते तदा गोपदजन्यबोधविषयतावत् गोत्वमित्याकारकशक्तिग्रहे गोत्वस्य विशेष्यतया धर्मितावच्छेदकरूपेण गोत्वत्वस्य भानमावश्यकम्। **गोत्वञ्च गवेतरासमवेतत्वे सति सकलगोसमवेतत्वरूपम्।** इत्थं गोत्वस्य शक्यतावच्छेदकत्वे महत् गौरवमापद्येत। अतः गवादिपदानां नहि गोत्वे शक्तिः अपितु गोत्वविशिष्टे गव्येवशक्तिः एवं गोपदस्य यदि गोत्वे शक्तिः स्वीक्रियते तदा गौर्नष्टः, गौर्जातः, गामानयेत्यादिवाक्यात् शाब्दबोधो न स्यात्। शक्त्या गोपदेन गोत्वजात्यात्मकपदार्थत्वस्य वोपस्थिततया, तस्य च गोत्वस्य जातिरूपस्य नित्यत्वेन तत्र ध्वंसप्रतियोगित्वरूपनष्टपदार्थस्यानयो न स्यात्। एवमुत्पत्ति-प्रतियोगित्वरूपस्योत्पन्नत्वस्य गोत्वजातौ अन्वयासम्भवात् गौजातिः इति वाक्यादपि शाब्दबोधो न स्यात्। एवं गोत्वजातौ कर्मत्वस्य द्वितीयार्थस्य बाधितत्वेन **गामानय इति** वाक्यादपि शाब्दबोधो न स्यात्। अतः जातौ शक्तिः इति स्वीकर्तुं न शक्यते।

यत् पूर्वमुक्तं गोत्वजातावेव गोपदस्य शक्तिः गवाद्यर्थस्याऽऽक्षेपादेव लभ्यते तदपि न समीचीनम्। आक्षेपमन्तरैव गामानयेत्यादिवाक्यतः गोनिष्ठकर्मताक आनयनविषयकः सर्वजनानुभवसिद्धः। एवं गौर्गच्छतीत्यादौ गोत्वजातौ गतिमत्वं सर्वथैव अप्रसिद्धम्। अथ च गोत्वादौ यदि गवादिपदार्थस्यान्वयः क्रियते चेत् तदा गोपदेनोपस्थितेः गोत्वे एव पदार्थान्तरस्यान्वयः अभ्युपेयः। अतः अन्वयी गोत्वमेव भवति। अतः पदार्थान्तरप्रकारक-पदार्थविशेष्यकबोधेऽन्वयितावच्छेदकरूपेण पदार्थोपस्थितेः आवश्यकतया गोत्वत्वेन गोत्वस्योपस्थितिः आवश्यकी। गोत्वत्वस्य च गवेतरासमवेतत्वविशिष्टगोसमवेतत्वरूपतया महद् गौरवमापद्येत अतः जातौ कथमपि पदानां शक्तिः न स्वीकार्या।

श्रीकर्मतावलम्बिनस्तु गामानयेत्यादिवाक्यस्थले गोपदं गोत्वे शक्तम् इत्याकारक-शक्तिज्ञानघटितशाब्दसामग्र्या स्वाश्रयवृत्तित्वसम्बन्धेन कर्मत्वविशेष्यकगोत्वविषयकबोधे सञ्जाते, तदनन्तरं कर्मत्वस्य गोवृत्तित्वं विना गोत्ववृत्तित्वं न हि उपपद्यते। इत्याकारकार्थापत्तिप्रमाणसहकारेण कर्मत्वं गवि इत्याकारककर्मत्वधर्मिक आधेयत्व-सम्बन्धावच्छिन्नगोव्यक्तिप्रकारकैः औपादानिकाऽन्वयबोधः जायते। अतः न हि जातिविशिष्ट-व्यक्तौ शक्तिः अपितु जातावेव शक्तिः।

इमदपि मतं विचारपथं नायाति, यतः परस्परविरूद्धाभ्यां शाब्दत्वम् अर्थापत्तित्वाभ्याम-

वच्छिन्नस्य बोधस्यालीकतया शब्दार्थापत्तिभ्यां मिलित्वा तथाविध औपादानिकबोधस्योत्पत्त्य-सम्भवात्। यदि शाब्दत्वस्य अर्थापत्तित्वस्य च औपादानिकबोधः स्वीक्रियते चेत् तदा अर्थापत्तित्वजातित्वयोः संकरप्रसङ्गात्। किञ्च समानविषयकबोधस्थले यथा समानविषयकानुमिति-सामग्री विद्यते अथ च समानविषयकशाब्दबोधसामग्री च विद्यते तदानीमनुमितिरेव भवति न हि शाब्दबोधः। यथा शाब्दबोधं प्रति अनुमितिसामग्री प्रतिबन्धिका भवति तथैव शाब्दबोधं प्रति अर्थापत्तिसामग्रयाः प्रतिबन्धकतया न हि श्रीकराभिमतः तादृशः औपादानिको बोधः सम्भवति। अतः औपादानिकबोधोत्पत्तये किमर्थं जातिस्वीकारात्। मण्डनमिश्रास्तु गोत्वशक्तं गोपदमित्याकारकशक्तिज्ञानेनोपस्थितस्य गोत्वस्य नित्यतयोत्पत्तिविनाशासम्भवात्। गौर्जायते गौर्नश्यति एतद्वाक्याधीनवाक्यार्थबोधस्य सम्पत्तये गोत्वसकलगोपदस्य गोत्वविशिष्टव्यक्तौ लक्षणा स्वीक्रियते। ततश्च गौर्जायते इति वाक्यादुत्पत्तिमती गौः, गौर्नश्यतीति वाक्याच्च नाशप्रतियोगिकौ इत्याकारकः वाक्यार्थबोधः जायते। अत एवोक्तम्—

**जातेरस्तित्वनास्तित्वे नहि कश्चित् विवक्षितः।**
**नित्यत्वाल्लक्षणीयायाः व्यक्तेस्तर्हि विशेषणे।।**

मतमिदं न साधु, व्यक्तिं विना कृतायां गोत्वादिजातौ गवादिपदस्य मुख्यप्रयोगाभावेन तन्मात्रस्याशक्यत्वे तद्वति गवादौ लक्षणायाः वक्तुमशक्यत्वात्। शक्यसम्बन्धस्यैव लक्षणास्वीकारात्। यदि एवं ब्रूयाः यत् **गोरन्यो महिषः** इत्यत्र पञ्चम्यर्थावधित्वं प्रतियोगित्वं वा। एतादृशस्थले स्वावच्छेद्यत्वसम्बन्धेन गोत्वविषयकान्वयबोधः सम्भवति। तादृशस्थले गवादिपदस्य गोत्वादिरूपार्थे मुख्यप्रयोगः अनुभूयते। तदपि न समीचीनम्। यतोहि तादृशस्थले पञ्चमी विभक्त्यर्थेऽवधित्वे प्रतियोगित्वे वा स्ववृत्तिः गोत्वावच्छेद्यत्वसम्बन्धेन प्रकृत्यर्थभूतस्य गवादेः अन्वयबोधः जायते। अन्यथा गो-गोत्वयोः भक्तिशक्तौ गोपदजन्यबोधे वृत्तिद्वयस्य यौगपद्यमापद्येत।

प्राभाकरः गोत्वशक्तं गो पदमित्याकारकज्ञानविषयकशक्तपदघटितशाब्दबोधसामग्र्या गोत्वप्रकारकगोविशेष्यकशाब्दबोधं स्वीकुर्वन्ति। प्राभाकरमते जातिव्यक्त्युभयनिष्ठशक्तेः अभ्युपगमेऽपि जात्यंशे ज्ञायमाना सति तथा गवादि व्यक्त्यंशे स्वरूपसती शाब्दबोधोपयोगिनी भवति। इत्थञ्च गवादिपदानां गोत्वे गवि च शक्तिः अभ्युपेयते। तत्रापि गोत्वे या शक्तिर्विद्यते सा ज्ञाते उपयुज्यते। गवि च कुब्जा शक्तिः भवति। अस्यायमाशयः ज्ञाने पदानां शक्तिर्विद्यते, यतः पदशक्तिगृहीते न हि पदार्थस्योत्पत्तिः अपितु पदार्थज्ञानमेव। एवं गामानयेत्यादि-वाक्यात् गोव्यक्तिविषयकबोधः सर्वजनानुभवसिद्धः। अतः गोव्यक्तावपि बोधः आवश्यकः। यद्यपि जातिमत् विषयकबोधानन्तरं व्यक्तेर्बोधो न जायते, यतः विशिष्टशक्तिग्रहः आवश्यकः स्यात्। किन्तु युगपदेव जायते। अतः विशिष्टे शक्तिः स्वीकार्या। अथ च क्वचिदपि व्यक्तिमनादृत्य केवलं जातिविषयकः मुख्यप्रयोगः न भवति। पदात् केवलं जातिव्यवहाराभावात्। एवञ्च गोविषयकबोधनिर्वाहाय शक्तिः आवश्यकी। अतः केवलं जातिशक्त्या व्यक्तिविषयकशाब्द-

बोधस्यासम्भवात् जात्यवच्छिन्नव्यक्तावेव शक्तिः स्वीकार्या। अंतः जातिरिव व्यक्तिरपि पदार्थः भवत्येत्येवं विनिश्चित्य, भगवता अक्षपादेन महर्षिणा **जात्याकृतिव्यक्तयः पदार्थः** इति विवेचितम्।

न्यायमते अर्थनिरूपिता शक्तिः पदे तिष्ठति अत एव शक्तिमत्वं पदत्वं स्वीकृतम्। अत एव जात्यवच्छिन्ने पदार्थे शक्तिस्वीकारादेव। नैमित्तिकसंज्ञायाः एवं लक्षणं कृतमस्ति। यन्नामजात्यवच्छिन्नसङ्केतवद् भवत्तदेवनामनैमित्तिकीसंज्ञया व्यपदिष्यते।

न्यायनये ईश्वरसङ्केतरूपा शक्तिः। स च सङ्केतः **इदं पदम् इममर्थं बोधयतु इत्याकारकः**, यथा **'गोपदं गोत्वावच्छिन्नविषयतानिरूपकबोधजनकतावद् भवतु'** इत्याकारक ईश्वरेच्छारूपः नित्यसङ्केतरूपः। तादृशसङ्केतः यद्यपि साक्षात् समवायसम्बन्धेन आत्मनि विद्यते तथापि तस्य विषयतासम्बन्धेन पदवृत्तित्वे नहि किञ्चिद्बाधकम्। गोत्वावच्छिन्नः गोपदवाच्यः इत्याकारकः अर्थविशेष्यकोऽपि सङ्केतग्रहः भवति। यदा एतादृशसङ्केतग्रहः स्वीक्रियते तदा **गोपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितभगवदीच्छीयः विशेष्यतावान् गोत्वावच्छिन्नः** इत्याकारकः वाक्यार्थबोधो जायते। अत्रेयं जिज्ञासा जायते यत् महर्षिणा गौतमेन जात्याकृतिव्यक्तिनाम त्रयाणां पदार्थत्वमुपपादितम्। तत् कथं संगच्छते? यतः तत्पदजन्यबोध-विषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतायाः घटादिपदार्थे एव विद्यमानतया कथं त्रयाणां वाच्यत्वमुपपादयितुं शक्यते। तत्र इत्थं समाधेयं यत् घटपदजन्यबोधिविषय-त्वनिष्ठप्रकारतानिरूपित ईश्वरेच्छीयविशेष्यतायाः आश्रयतासम्बन्धेन घटादिपदार्थे विद्यमानतया भवति घटाद्यर्थस्य वाच्यत्वम्। एवं घटादिपदजन्यबोधविषयत्वनिष्ठ-प्रकारतानिरूपितेश्वरेच्छीयविशेष्यतायाः अवच्छेदकतासम्बन्धेन घटत्वे विद्यमानतया भवति, पदार्थतावच्छेदकीभूतस्य घटत्वस्य घटपदवाच्यत्वम्। एवं घटपदजन्यबोधविषयत्वनिष्ठ-प्रकारतानिरूपितेश्वरेच्छीयविशेष्यतायाः स्वावच्छेदकतावच्छेदकत्वस्य समवाये विद्यमानतया भवति पदपदार्थतावच्छेदक-समवायात्मकसम्बन्धस्य घटपदवाच्यत्वम्। इति शम्।

**सन्दर्भग्रन्थसूची-**


१. तर्कसङ्ग्रहः, अन्नम्भट्टः।
२. तर्कसङ्ग्रहसर्वस्वम्, शाब्दबोधविचारः।
३. शब्दशक्तिप्रकाशिका, कारिका-३।
४. न्यायसिद्धान्तमुक्तावली, कारिका- ८१-८४।
५. शक्तिवादः, गदाधरभट्टाचार्यः।
६. न्यायदर्शनम् (वात्स्यायनभाष्यसहितम्)।
७. मीमांसादर्शनम्, वाचस्पति उपाध्यायः।




ISSN2277-7024

# सुसंस्कृतम्

# SUSANSKRITAM

अन्ताराष्ट्रिया अर्द्धवार्षिकी संस्कृतशोधपत्रिका
(AN INTERNATIONAL REASERCH JOURNAL)
वर्षम् ४ अंकः २, जुलाई-दिसम्बर २०१४
(विक्रम संवत् २०७१)



**प्रकाशिका**
सुरुचिकलासमितिः, वाराणसी

# विषय-सूची

ISSN2277-7024

# अलौकिकसन्निकर्षविचारः

*योगेशकुमारत्रिपाठी

कस्यापि वस्तुनः प्रत्यक्षज्ञानं प्रति विषयेन्द्रियसन्निकर्षः करणमिति स्पष्टम्। न्यायमतानुसारं न केवलं घटपटादिद्रव्याणामेव प्रत्यक्षं भवति किन्तु तत्र समवेतानां गुणकर्मादीनां तत्रापि समवेतानां गुणत्वकर्मत्वादिजातीनाञ्च प्रत्यक्षं भवति। अतश्चैषां सन्निकर्षाणां स्वरूपाणि स्पष्टतया ते निर्धारिषुः। लौकिकप्रत्यक्षज्ञानं प्रति षड्विधः लौकिकसन्निकर्षः करणं भवति। एतदतिरिक्तः अलौकिकप्रत्यक्षज्ञानं प्रति त्रिविधोऽलौकिकसन्निकर्षः करणम्, येऽधो निरूप्यन्ते।

**अलौकिकसन्निकर्षाः–** अलौकिकसन्निकर्षस्तु सामान्यलक्षणा, ज्ञानलक्षणा, योगजलक्षणधर्मभेदात् त्रिविधः।[१] तत्र सामान्यं लक्षणं यस्याः इति व्युत्पत्या सामान्यमेव प्रत्यासत्तिः। सामान्यं लक्षणं विषयः यस्या इति व्युत्पत्या सामान्यज्ञानं प्रत्यासत्तिः। **'ज्ञानमेव लक्षणं स्वरूपं यस्य सः'** इति व्युत्पत्या ज्ञानात्कमसन्निकर्षः द्वितीयः। योगजधर्मप्रत्यासत्तिः द्विविधा युक्तयुञ्जानभेदेन। बाह्यविषयचित्तवृत्तिनिरोधः योगः तज्जन्यधर्म एव प्रत्यासत्तिः। अतएव भगवता उक्तं—

**'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते'**[२]

अर्थात् योगिनामेव कुले श्रीमतां जन्म भवति।

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा।।**[३]

अर्थात् संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायादिसन्निकर्षेषु इन्द्रियसमीपवर्तिभिः इन्द्रियाभिमुखं स्थितैर्वा द्रव्यैः तदीयगुणैश्च सह इन्द्रियाणां सम्बन्धो भवतीति। अत एव एते षड्विधसन्निकर्षाः लौकिकपदवाच्याः। परन्तु कदाचित् इन्द्रियसमीपवर्तिभिः इन्द्रियाभिमुखमावर्तमानैर्वा विषयैः सहेन्द्रियाणां सन्निकर्षः अभ्युपेयः। कदाचिच्च इन्द्रियसन्निकर्षसमये अनुत्पन्नानामिन्द्रियविशेषणग्रहणायोग्यानां विषयाणां वा प्रत्यक्षार्थम् इन्द्रियसन्निकर्षाऽङ्गीकारात् एतादृशः सन्निकर्षश्च समेषां हठात् बोध्यगम्यो न भवतीति। अयं चालौकिकसन्निकर्ष इत्युच्यते।

अलौकिकसन्निकर्षात् जायमानं प्रत्यक्षमलौकिकप्रत्यक्षमिति, स चालौकिकसन्निकर्षः सामान्यलक्षणा-ज्ञानलक्षणा-योगज-भेदात् त्रिविधः। 'यद्यपि रघुनाथशिरोमण्यादयः नवीनाः नैयायिकाः' सामान्यलक्षणं सन्निकर्षं नाङ्गीकुर्वन्ति, तथापि न्यायवैशेषिकसम्प्रदायाभिमत-सिद्धान्तानुसारेण अलौकिकसन्निकर्षः त्रिविध एव।

सामान्यलक्षणम् इत्यत्र सामान्या जातिः, घटादिव्यक्तिश्च तदेव लक्षणं स्वरूपमात्मा

---

*शोधच्छात्रः, वैदिकदर्शनविभागः, काशीहिन्दूविश्वविद्यालयः, वाराणसी।

यस्येति व्युत्पत्या जात्यात्मको व्यक्त्यात्मकस्य च सन्निकर्षः प्रथमः।तच्च इन्द्रियसम्बद्धं विशेष्यकं ज्ञानप्रकारीभूतं बोध्यम्, तथाहिं यत्र इन्द्रियसंयुक्तं धूमादि तद्विशेष्यकं 'धूम' इति ज्ञानं यत्र जातम्,तत्र ज्ञाने धूमत्वं प्रकारः। तत्र धूमत्वेन सन्निकर्षेण 'धूम' इत्येवं रूपं सकलधूमविषयकं ज्ञानं सामान्यलक्षणाप्रत्यासत्या भवतीति।

ज्ञानलक्षणा इत्यत्र 'ज्ञानमेव लक्षणं स्वरूपं यस्य सः' इति व्युत्पत्या ज्ञानात्मकसन्निकर्षः द्वितीयः।

अर्थात् प्रथमदिवसे चन्दनं घ्रात्वा 'सुरभि चन्दनम्' इति निश्चित्य दिवसान्तरे अघ्रात्वैव चन्दनदर्शनमात्रेण सुरभिचन्दनमित्यन्यस्मै जिज्ञासमानाय वदति तदेतत् दिवसान्तरे सुरभिचन्दनमिति ज्ञाने सौरभं चन्दनं चन्दनत्वं चेति भासते। तत्र चक्षुःसंयोगेन चन्द्रनज्ञानम्, चक्षुःसंयुक्तसमवायेन चन्दनत्वज्ञानम् लौकिकसन्निकर्षजन्यत्वात् लौकिकप्रत्यक्षमिति। परन्तु घ्राणसम्बन्धमन्तरापि यत् सौरभज्ञानं जातम्, तत्तु चक्षुस्संयुक्तमनस्संयुक्तात्मसमवेतज्ञानाख्येन सन्निकर्षेण संस्कारद्वारा जनितमलौकिकं प्रत्यक्षम् ज्ञानलक्षणाप्रत्यासत्त्या भवतीति। योगजः इत्यत्र योगः चित्तवृत्तिनिरोधः तज्जन्यसंयमः धारणाध्यानसमाध्यात्मकः सन्निकर्षः तृतीयः। योगाभ्यासजनितो धर्मविशेषः श्रुतिस्मृतिपुराणादिप्रतिपाद्य इत्यर्थः।

एतेषामलौकिकसन्निकर्षाणां स्वरूपमत्र उपस्थाप्यते, तद्यथा—

**१. सामान्यलक्षणसन्निकर्षः–** अस्माकं प्रत्यक्षज्ञानप्रक्रियायां प्रत्यक्षकारणसामग्र्या समाधेयानि सन्ति कानिचित् काठिन्यानि। यथा- धूमलिङ्गे न वह्न्यनुमितिर्लोकप्रसिद्धा। परं सानुमितिर्धूमवह्निः सर्वत्र देशे काले च साहचर्यनिश्चये सत्येव सम्भवति। तन्निश्चयश्च न लौकिकप्रत्यक्षेण संभवति। महानसादौ धूमवह्न्योः प्रत्यक्षे सति धूमत्वसामान्यवतः सकलधूमस्य वह्नित्ववतो वह्निमात्रस्य च सामान्यलक्षणप्रत्यासत्या ज्ञाने सति सकलधूमवह्निव्यक्तीनां साहचर्यनियमरूपा व्याप्तिर्ग्रहीतुं शक्यते, अत एव नैयायिकैः सामान्यलक्षणप्रत्यासत्तिरपि कल्पिता।

समानानां भावः सामान्यम् तल्लक्षणं यस्य तत् सामान्यलक्षणम्।[४] सामान्यशब्दोऽयं साधारणधर्मपरः, लक्षणशब्दश्च स्वरूपपरो विषयपरो वा। तथा च लक्षणशब्दस्य स्वरूपार्थकत्वे सामान्यलक्षणशब्दस्य सामान्यस्वरूपसन्निकर्षः इत्यर्थः स्यात्। स चेन्द्रियसम्बद्धविशेष्य-ज्ञानप्रकारीभूतो धर्मोऽवगन्तव्यः। पुरोवर्तिना घटादिविषयेण सह चक्षुषो योगे सति 'घट-घटत्वे' इत्याकरकं निर्विकल्पकज्ञानमुत्पद्यते, 'अयं घटः' इति सविकल्पकं ज्ञानमुत्पद्यते। इदं च ज्ञानं विशेष्यविधया घटं विशेषणविधया च घटत्वं विषयीकरोति। अतश्चात्र चक्षुःसंयुक्तघटविशेष्यकं यज्ज्ञानम् 'अयं घटः' इत्याकरकं, तत्र प्रकारीभूतं सामान्यं घटत्वम्, तेन घटत्वरूपसामान्यलक्षणसन्निकर्षेण सकलघटविषयकमलौकिकं प्रत्यक्षं भवति। अत्रेन्द्रियसम्बद्धरूपस्यैव सामान्यत्वे अभिमते धूलिपटले धूमत्वमवधार्य यत्सकलधूमविषयकं ज्ञानं जायते, तत्र जायते सामान्यस्येन्द्रियसम्बद्धमात्रवृत्तित्वात्, धूमत्वेन चेन्द्रियसंयोगाभावात्, धूलिपटलेनैव तत्सम्बन्धात्। सामान्यस्येन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतधर्मत्वे तु

इन्द्रियसम्बद्धो धूलिपटलः, तद्विशेष्यकज्ञाने प्रकारीभूतधर्मो धूमत्वमपि अस्ति, अतश्चोक्त-भ्रमोपपत्तिः।[५] किञ्च बहिरिन्द्रियजन्यप्रत्यक्षस्थले एवेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतस्य सामान्यलक्षणसन्निकर्षत्वमभिप्रेतव्यम्, मानसप्रत्यक्षस्थले तु ज्ञानप्रकारीभूतसामान्यस्यैव तत्वमिति प्राचीननैयायिकानाम्मतम्।[६]

ज्ञानप्रकारीभूतस्य सामान्यस्य सन्निकर्षत्वे प्रथमस्तावदियं शङ्का उपस्थाप्यते यत् सामान्यविषयकज्ञानस्यापि सन्निकर्षत्वस्वीकारेऽस्त्येव दोषप्रसङ्गः। तथाहि- चक्षुः संयोगमन्तरेणापि यत्र घटत्वरूपसामान्यस्य शाब्दिकं स्मरणात्मकं ज्ञानं भवति, तत्र तेन सकलघट-विषयकेणालौकिकप्रत्यक्षेण भवितव्यम्। अत्र नव्यनैयायिका उत्तरन्ति यत् न केवलं सामान्यविषयकज्ञानस्यैवालौकिकप्रत्यक्षे कारणत्वम्, किन्तु इन्द्रियसंयोगालोकादेरपि तत्र कारणत्वम्।[७] एवञ्च प्रमेयत्वेन सकलप्रमेयविषयकज्ञानवत्स्वपि अस्मासु विशेषस्तेषां प्रमेयाणां ज्ञानाभावान्न सार्वज्ञयापत्तिरप्यस्माकम्।

**ज्ञानलक्षणसन्निकर्षः**

द्वितीयेनानेन सन्निकर्षेण विषयगतगुणानामलौकिकं ज्ञानमस्माभिर्लभ्यते। एतस्मिन् विषये प्रत्यक्षीक्रियमाणे सति तत्समवेतगुणानामपि इन्द्रियसन्निकर्षमन्तेरणापि यज्ज्ञानमस्माभिः प्राप्यते, तदर्थमयमपेक्षितः तद्यथा—हिमसकलस्य चाक्षुषप्रत्यक्षेण सहैव यत्तच्छैत्यादिकमपि अनुभूयते, तत्कथं निरूप्यते? द्रव्यमात्रेण सहेन्द्रियसन्निकर्षात्, शैत्यादिगुणेन सह तदभावात्। अत एवायं द्वितीयः सन्निकर्षः स्वीक्रियते। कस्मिंश्चिद् विषये इन्द्रियसन्निकर्षेण ज्ञाते तद्गतगुणानामिन्द्रियसन्निकर्षमन्तरेणापि आत्मस्थज्ञानलक्षणसन्निकर्षेणालौकिकं ज्ञानं प्राप्यते इत्यभिप्रायः।[८] तद्यथा 'शीतलो हिमः' 'चन्दनं सुरभि' इत्यादौ ज्ञानस्य द्व्यंशवत्वम्, एकस्य लौकिकत्वादपरस्य चालौकिकत्वात्। चन्दनखण्डस्य हिमस्य च ज्ञानं चक्षुषा भवति, परं सौरभस्य शैत्यस्य च ज्ञानं क्रमेण घ्राणेन त्वचा च भवति। चन्दनेन हिमेन च चक्षुः संयोगात्तयोर्ज्ञानं समुचितम्, परमिन्द्रियसन्निकर्षम् विनैव कथं सौरभशैत्ययोर्ज्ञानं जायते? एतद्विशिष्टज्ञानं प्रति तत्तदिन्द्रियाणां पृथक्-पृथक्कारणत्वस्वीकारे तु नियमविरोधः समापतति। विशिष्टज्ञानं प्रत्येकमेवेन्द्रियस्य कारणत्वं न द्वयोरिति नियमात्।

एतद्विशिष्टज्ञानं प्रति चक्षुषः कारणत्वन्तु न सम्भवति, सौरभशैत्ययोर्ग्रहणे तस्य सामर्थ्याभावात्। एवं घ्राणस्य त्वचोऽपि वा न कारणत्वम् तयोर्हिमचन्दनयोः प्रत्यक्षे सामर्थ्याभावात्, तयोस्तु सुगन्धशैत्ययोरेव ग्रहणे सामर्थ्यात् एवं एतद्विशिष्टज्ञानं प्रति कस्येन्द्रियस्य कारणत्वं कल्प्येत? अत्र नैयायिका एतज्ज्ञानं प्रति चक्षुषः कारणत्वमाहुः। परन्त्वस्य सौरभशैत्याभ्यां नास्ति सम्बन्धः, द्रव्यमात्रेण सम्बन्धात्। अतश्च तैः कल्प्यते यद्यपि सौरभादिना नास्ति सम्बन्धः, द्रव्यमात्रेण सम्बन्धात्। अतश्च तैः कल्प्यते यद्यपि सौरभादिना नास्ति चक्षुषः साक्षात् सम्बन्धस्तथापि सौरभविषयकपूर्वानुभवोऽयम् आत्मा निवर्तते, तेनैवात्मस्थेन ज्ञाने चक्षुः सौरभादेरपि सम्बन्ध उपपद्यते इति।

अत्रेदं ध्यातव्यम् यदाऽस्माभिः 'चन्दनं सुरभि' इत्येवंरूपेण चन्दनं प्रत्यक्षीक्रियते, तदा सामान्येन सौरभांशज्ञानं स्मरणात्मकमेव भवति। ज्ञानांशस्यास्य स्मरणात्मकत्वं बौद्धैरपि प्रतिपादितम्। अतो नायं शुद्धो किं वा निर्विकल्पात्मकोऽनुभवः। नैयायिका नैतत् सहन्ते। यतो हि तस्य स्मरणात्मकत्वेऽभ्युपगते तज्ज्ञानं भूतकालविषयकं स्यात्। तथा च तस्य ज्ञानस्यांशद्वयवत्वमभ्युपेयम् एकं स्मरणात्मकमर्थात् भूतकालविषयकं, द्वितीयं च प्रत्यक्षमर्थात् वर्तमानकालविषयकम्। एवं चैकस्यैकवस्तुनोऽतीतकालिकस्य वर्तमानकालिकस्य च ज्ञानस्य विषयत्वं स्यात्, तद्धि अयुक्तम्। विषयस्य स्थैर्यं च नैवं सिध्येत्। अतश्च तस्य ज्ञानस्य स्मृतिरूपत्वमनङ्गीकृत्य प्रत्यक्षत्वमेव स्वीकर्तव्यम्। अत एव सौरभादेश्चाक्षुषत्वसिद्धये ज्ञानलक्षणसन्निकर्षोऽभ्युपेयः।

किञ्च सौरभत्वसामान्यलक्षणप्रत्यासत्त्यैव सौरभज्ञाने सिद्धेऽपि सौरभत्वज्ञानाय ज्ञानलक्षणा अवश्यं स्वीकर्तव्या।[९] एवञ्च सामान्यलक्षण-ज्ञानलक्षणसन्निकर्षयोरुभयोर्ज्ञानरूपत्वेऽपि अस्त्येव तयोः कश्चिद्भेदः। तद्यथा सामान्यलक्षणस्य स्वाश्रयस्यैव प्रत्यक्षं प्रति कारणत्वम्, ज्ञानलक्षणस्य तु यद्विषयकं ज्ञानं भवति, तज्ज्ञानं प्रत्यपि कारणत्वम्, यथा- घटत्वरूपसामान्यविषयकज्ञानेन घटत्वाश्रयस्य घटस्यैव ज्ञानं भवति, ज्ञानलक्षणेन तु सौरभस्य ज्ञानं भवति, न तु तदाश्रयस्य। चक्षुःसंयुक्तमनःसंयुक्ते आत्मसमवेतस्मृतिविषयत्वस्यैव ज्ञानलक्षणप्रत्यासत्तित्वम्। चन्दने प्रत्यक्षीकृते पश्चात् सुगन्धविषयिणी या स्मृतिर्जायते, तादृशस्मृतिविषयत्वरूपसन्निकर्षः सौरभस्य, न तु चन्दनस्य। तेन सह तु चक्षुःसंयोगः सन्निकर्षः। अयमेव ज्ञानलक्षणसामान्यलक्षणयोर्मुख्यो भेदः।

**योगजसन्निकर्षः–** अलौकिकसन्निकर्षस्य तृतीयो भेदो योगजाख्यः।[१०] अनेन योगिनो भूतभाविदूरविप्रकृष्टसकलवस्तूनां प्रत्यक्षं कुर्वन्ति। न केवलं वैदिकदार्शनिका एव अपितु बौद्धादयोऽवैदिकसाम्प्रदायिका अपि यौगिकं सत्यं स्वीकुर्वन्ति। योगिनो यौगिकसामर्थ्यबलेनेन्द्रियसन्निकर्षमन्तरेणापि साक्षात्कारि ज्ञानं लभन्ते। योगसिद्धेन जनेन स्वत एवाविनाशिनी यौगिकी शक्तिः प्राप्यते। एवंविधा योगिनोऽपि द्विविधाः- युक्तयुञ्जानभेदात्। तत्र पूर्णयौगिकशक्तिसम्पन्नः पुरुषः, येन सदा सर्वकारकज्ञानं स्वत एव प्राप्यमाणं भवति, स 'युक्त' इत्युच्यते।

आंशिकयौगिकसिद्धिसम्पन्नश्च 'युञ्जान' इत्युच्यते। युञ्जानेन न सदा स्वत एव यौगिकं सामर्थ्यं लभ्यते, किन्तु तस्य कृते तेन चिन्तनादिकमपेक्ष्यते। अतश्च युक्तयुञ्जानभेदतो योगिनो द्वैविध्यात् योगजधर्मोऽपि द्विविधः। युक्तस्य योगिनो योबलेनाकाशपरमाण्वादिसकलवस्तुविषयकं ज्ञानं सदोपस्थितं भवति, परमन्येन धारणाध्यानादिसाहाय्येन ज्ञानमधिगन्तुं शक्यते।

योगजप्रत्यक्षमिदं वेदेष्वपि वर्णितम्। अत एव न्यायाभिमतज्ञानलक्षणसामान्यलक्षणयोः वेदान्तिभिरालोचितयोरपि योगजसन्निकर्षोऽनिर्विवादमभ्युपगतः। न केवलं वेदान्तादीनि वैदिकदर्शनानि एव, अपितु जैन-बौद्धादीनि नास्तिकदर्शनान्यपि एतमभ्युपगच्छन्ति।

एते त्रय: सन्निकर्षा: इन्द्रियार्थसन्निकर्षनिरपेक्षा एव भवन्ति। लौकिकप्रत्यक्षं प्रति तु इन्द्रियार्थसन्निकर्षोऽपेक्ष्यते इन्द्रियार्थसन्निकर्षजन्यत्वं प्रत्यक्षज्ञानस्य लौकिकत्वम् अलौकिकप्रत्यक्षे तु तदपेक्षाभावात् एतत्प्रत्यक्षत्रयस्य तत्कारणीभूतसन्निकर्षत्रयस्य चालौकिकत्वम्।

**सन्दर्भ-ग्रन्थ-सूची**

१. तर्कचन्द्रिका।
२. श्रीमद्भगवद्गीता ६/४१
३. न्यायसिद्धान्तमुक्तावली, कारिकासंख्या-११६३।
४. न्या० सि०मु० "आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते" का.सं. (६४)।
५. न्यायसिद्धान्तमुक्तावली प्रत्यक्षप्रकरणे।
६. न्यायसिद्धान्तमुक्तावली, प्रत्यक्षप्रकरणे।
७. न्यायसिद्धान्तमुक्तावली।
८. न्यायसिद्धान्तमुक्तावली, कारिका संख्या (६५)।
९. न्यायसिद्धांन्तमुक्तावली।
१०. न्याय०सि०मु० "युक्तस्य सर्वदाभानं चिन्तासहकृतोऽपर:"॥६६॥
११. न्या० सि० मु० "योगजो द्विविध: प्रोक्तो युक्तयुञ्जानभेदत:"॥६५॥
१२. सामान्यलक्षणा।
१३. तर्कसङ्ग्रह-दीपिका।
१४. तर्कभाषा।



# संक्षिप्तजीवनवृत्तम्
## (Bio-Data)



नाम : योगेश कुमार त्रिपाठी

पिता : डॉ० शुकदेव त्रिपाठी

माता : श्रीमती ज्ञान्ती देवी

जन्मतिथि : 22/06/1984

पता : बी0 30/252, श्री रघुनाथ आश्रम, नगवां, लंका,
वाराणसी (उ0प्र0)
पिन कोड–221005

आवश्यक सम्पर्क : 9889222270

ई–मेल : yogeshtripathi672@gmail.com

भाषाज्ञानम् : संस्कृत, हिन्दी, अंग्रेजी

शैक्षणिकविवरणम् :

| कक्षा | बोर्ड/ विश्वविद्यालय | वर्ष | विषय | प्राप्तांकः | पूर्णांकः | प्रतिशत | श्रेणी |
|---|---|---|---|---|---|---|---|
| हाईस्कूल | माध्यमिक शिक्षा परिषद, उ0प्र0 | 2001 | हिन्दी, अंग्रेजी, गणित, विज्ञान, सा0 विज्ञान, संस्कृत | 298 | 600 | 49.66% | द्वितीय |
| उत्तर मध्यमा | राष्ट्रिय–संस्कृत–संस्थानम्, नव–देहली | 2005 | व्याकरण, साहित्य, आंग्ल, हिन्दी | 765 | 1200 | 63.75 % | प्रथम |
| शास्त्री | सम्पूर्णानन्दसंस्कृत–विश्वविद्यालय वाराणसी | 2008 | नव्यन्याय | 1512 | 2200 | 68.72% | प्रथम |
| आचार्य | सम्पूर्णानन्दसंस्कृत–विश्वविद्यालय वाराणसी | 2010 | नव्यन्याय | 777 | 900 | 86.33% | प्रथम |
| N.E.T. | University Grant Commission | दिसम्बर 2014 | परम्परागत संस्कृत | N.A. | N.A. | N.A. | N.A. |

शोधप्रबन्धशीर्षकः : "इन्द्रियार्थसन्निकर्षस्वरूपविमर्शः"

दिनांक :

स्थानम् : वाराणसी

योगेश त्रिपाठी

(योगेश कुमार त्रिपाठी )